उक्षा यस्य प्रवाहणो वधूमन्तो द्विर्दश ।

वर्ष्मा रथस्य नि जिहीडते दिव ईषमाणा उपस्पृशः ॥२॥

एष इषाय मामहे शतं निष्कान् दश स्रजः ।

त्रीणि शतान्यर्वतां सहस्रा दश गोनाम् ॥३॥

## ७। वाररुचो निरुक्तसमुच्चयः

दैव्याः शमितार आरभध्वम् उत मनुष्याः । उप नयत मेध्या दुरः । आशासाना मेधपतिभ्यां मेधम् । प्रास्मा अग्निं भरत । स्तृणीत बर्हिः । अन्वेनं माता मन्यताम् । अनु पिता । अनु भ्राता सगर्भ्यः । अनु सखा सयूथ्यः । उदीचीनां अस्य पदो निधत्तात् । सूर्यं चक्षुर्गमयतात् । वातं प्राणमन्ववसृजतात् । दिशः श्रोत्रम् । अन्तरिक्षमसुम् । पृथिवीं शरीरम् । एकधास्य त्वचमाच्छ्यतात् । पुरा नाभ्या अपिशसो वपामुत्खिदतात् । अन्तरेवोष्माणं वारयतात् । श्येनमस्य वक्षः कृणुतात् । प्रशसा बाहू । शला दोषणी । कश्यपेवांसा । अच्छिद्रे श्रोणी । कवषोरू । स्रेकपर्णाष्ठीवन्ता । षड्विंशतिरस्य वङ्क्रयः । ता अनुष्ठ्योच्च्यावयतात् । गात्रं गात्रमस्यानूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् । अस्ना रक्षः संसृजतात् । वनिष्ठुमस्य मा राविष्टोरूकं मन्यमानाः । नेद्वस्तोके तनये रविता रवच्छमितारः । अध्रिगो शमीध्वम् । सुशमि शमीध्वम् । शमीध्वमध्रिगो ॥१॥

तै० ४-१२-४ ।

एह्यूषु ब्रवाणि तेऽग्न इत्थेतरा गिरः

एभिर्वर्धास इन्दुभिः ॥२॥

ऋ० सं० ६-१६-१६ ।

नकिरिन्द्र त्वदुत्तरो न ज्यायाँ अस्ति वृत्रहन् ।

नकिरेवा यथा त्वम् ॥३॥

ऋ० सं० ४-३०-१ ।

मोघमन्नं विन्दते अप्रचेताः सत्यं ब्रवीमि वध इत्स तस्य ।

नार्यमणं पुष्यति नो सखायं केवलाघो भवति केवलादी ॥४॥

ऋ० सं० १०-११७-६ ।

गौरीर्मिमाय सलिलानि तक्षत्येकपदी द्विपदी सा चतुष्पदी ।

अष्टापदी नवपदी बभूवुषी सहस्राक्षरा परमे व्योमन् ॥५॥

ऋ० सं० १-१६४-४१ ।

तच्चक्षुर्देवहितं शुक्रमुच्चरत् ।

पश्येम शरदः शतं जीवेम शरदः शतम् ॥६॥

ऋ० सं० ७-६६-१६ ।

बभ्रुरेको विषुणः सूनरो युवाञ्ज्यङ्क्ते हिरण्ययम् ।

योनिमेक आ ससाद द्योतनोऽन्तर्देवेषु मेधिरः ॥७॥

ऋ० सं० ८-२९-१ ।

अहं भुवं वसुनः पूर्व्यस्पतिरहं धनानि सं जयामि शश्वतः ।

मां हवन्ते पितरं न जन्तवोऽहं दाशुषे वि भजामि भोजनम् ॥८॥

ऋ० सं० १०-४८-१ ।

पृच्छामि त्वा परमन्तं पृथिव्याः पृच्छामि यत्र भुवनस्य नाभिः ।
पृच्छामि त्वा वृष्णो अश्वस्य रेतः पृच्छामि वाचः परमं व्योम ॥९॥

ऋ० सं० १-१६४-३४ ।

इयं वेदिः परो अन्तः पृथिव्या अयं यज्ञो भुवनस्य नाभिः ।
अयं सोमो वृष्णो अश्वस्य रेतो ब्रह्मायं वाचः परमं व्योम ॥१०॥

ऋ० सं० १-१६४-३५ ।

इदमापः प्र वहत यत्किञ्च दुरितं मयि ।
यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥११॥

ऋ० सं० १०-९-८ ।

इन्द्र क्रतुं न आ भर पिता पुत्रेभ्यो यथा ।
शिक्षा णो अस्मिन् पुरुहूत यामनि जीवा ज्योतिरशीमहि ॥१२॥

ऋ० सं० ७-३२-२६ ।

यदिन्द्राहं यथा त्वमीशीय वस्व एक इत् ।
स्तोता मे गोषखा स्यात् ॥१३॥

ऋ० सं० ८-१४-१ ।

सुदेवो अद्य प्रपतेदनावृत्परावतं परमां गन्तवा उ ।
अधा शयीत निर्ऋतेरुपस्थेऽधैनं वृका रभसासो अद्युः ॥१४॥

ऋ० सं० १०-१३४-१४ ।

यत्ते यमं वैवस्वतं मनो जगाम दूरकम् ।

तत्त आ वर्तयामसीह क्षयाय जीवसे ॥१५॥

ऋ० सं० १०-५८-१ ।

प्रयाजान्मे अनुयाजांश्च केवलानूर्जस्वन्तं हविषो दत्त भागम् ।

घृतं चापां पुरुषं चौषधीनामग्नेश्च दीर्घमायुरस्तु देवाः ॥१६॥

ऋ० सं० १०-५१-८ ।

तव प्रयाजा अनुयाजाश्च केवल ऊर्जस्वन्तो हविषः सन्तु भागाः ।

तवाग्ने यज्ञोऽयमस्तु सर्वस्तुभ्यं नमन्तां प्रदिशश्चतस्रः ॥१७॥

ऋ० सं० १०-५१-९ ।

ओ चित्सखायं सख्या ववृत्यां तिरः पुरू चिदर्णवं जगन्वान् ।

पितुर्नपातमा दधीत वेधा अधि क्षमि प्रतरं दीध्यानः ॥१८॥

ऋ० सं० १०-१०-१ ।

सोमं राजानमवसेऽग्निं गीर्भिर्हवामहे ।

आदित्यान्विष्णुं सूर्यं ब्रह्माणं च बृहस्पतिम् ॥१९॥

ऋ० सं० १०-१४१-३ ।

भोजायाश्वं सं मृजन्त्याशुं भोजायास्ते कन्या शुम्भमाना ।

भोजस्येदं पुष्करिणीव वेश्म परिष्कृतं देवमानेव चित्रम् ॥२०॥

ऋ० सं० १०-१०७-९ ।

अद्या मुरीय यदि यातुधानो अस्मि यदि वायुस्ततप पूरुषस्य ।

अधा स वीरैर्दशभिर्वि यूया यो मा मोघं यातुधानेत्याह ॥२१॥

ऋ० सं० ७-१०४-१५ ।

प्रति चक्ष्व वि चक्ष्वेन्द्रश्च सोम जागृतम् ।

रक्षोभ्यो वधमस्यतमशनिं यातुमद्भ्यः ॥२२॥

ऋ० सं० ७-१०४-२५ ।

इह मद एव मघवन्निन्द्र ते स्वः ॥२३॥

न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः ।

आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किञ्चनास ॥२४॥

ऋ० सं० १०-१२९-२ ।

एता अश्वा आप्लवन्ते प्रतीपं प्रातिसत्वनम् ।

तासामेका हरिक्निका हरिक्निके किमिच्छसि ॥२५॥

ऋ० सं० १०-१२९-१ ।

किमर्थमिदमाह ॥२६॥

आ० श्रौ० सू० ८-३-२ ।

कस्य नूनं कतमस्यामृतानां मनामहे चारु देवस्य नाम ।

को नो मह्या अदितये पुनर्दात् पितरं च दृशेयं मातरञ्च ॥२७॥

ऋ० सं० १-२४-१

किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ।

आ नो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन्रन्धया नः ॥२०॥

ऋ० सं० ३-५३-१४ ।

यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव ।

तमा हरामि निर्ऋतेरुपस्थादस्पार्शमेनं शतशारदाय ॥२१॥

ऋ० सं० १०-१६१-२ ।

---

# ऋक्संहिता-भाष्यम्

॥ १ ॥

१.१

स च 'अग्निमीळे' इत्यारभ्य 'यथा वः सुसहासति' इत्यन्तोऽष्टकाण्डैर्दशमण्डलैश्चतुःषष्ट्यध्यायैः पञ्चाशीत्यनुवाकैरीषदधिकसहस्रसूक्तैरीषदधिकद्विसहस्रवर्गैरीषदधिकाभिर्दशसहस्रसंख्याकाभिर्ऋग्भिश्चोपेतः। तस्य च ग्रन्थस्य कृत्स्नस्याप्याम्नातक्रमेणैव सामान्यविनियोगो ब्रह्मयज्ञजपादौ[1] पूर्वमेवाभिहितः। विशेषविनियोगस्तु तत्तत्क्रतौ सूत्रकारेण प्रदर्शितः। स च त्रिविधः—सूक्तविनियोगस्तृचादिविनियोग एकैकस्या ऋचो विनियोगश्चेति। तत्र 'अग्निमीळे' इति सूक्तं प्रातरनुवाके[2] आग्नेये क्रतौ विनियुक्तम्। स विनियोग आश्वलायनेन चतुर्थाध्यायस्य त्रयोदश-

---

श्रीः

श्रीललितादेव्यै नमः

श्रीचिन्नस्वामिपादाब्जमरन्दैकमधुव्रतः।
छात्रश्रोत्रपुटे मञ्जु गुञ्जारञ्जनमारभे॥
नत्वा गुरुपदाम्भोजयुग्ममज्ञानवारकम्।
श्रौतपाठीयभाष्यस्थान्विनियोगान् प्रकाशये॥

[1] ब्रह्मयज्ञजपादौ। 'स्वाध्यायोऽध्येतव्य' इत्यध्ययनविधिना विहितमध्ययनं त्रिविधं भवति—ग्रहणाध्ययनं धारणाध्ययनं ब्रह्मयज्ञाध्ययनमिति। गुरुमुखोच्चारणानूच्चारणद्वारा गृह्यमाणमध्ययनं ग्रहणाध्ययनम्, एवं गृह्यमाणस्य वेदस्य वाचोविधेयार्थं क्रियमाणाध्ययनं धारणाध्ययनम्, वाचोविधेयतया कृतस्य वेदस्य प्रत्यहं प्रातस्सन्ध्यानुष्ठानानन्तरं माध्यान्हिकसन्ध्यानुष्ठानानन्तरं वा सनियमं भागशः क्रियमाणञ्चाध्ययनं ब्रह्मयज्ञाध्ययनमिति कथ्यते। तत्रायं सर्वो वेदः सामान्येन विनियुज्यते। विनियोगो नामाङ्गत्वेनान्वयः। सर्वो वेदस्सामान्येन ब्रह्मयज्ञजपाङ्गमिति यावत्। विशेषेण विवरणमस्याग्रे द्रष्टव्यम्।

[2] प्रातरनुवाके। अग्निष्टोमसंस्थाको ज्योतिष्टोमः पञ्चदिनसाध्यो यागः। तत्र चतुर्थदिनेऽग्नीषोमीयपशुयागं समाप्य 'महारात्रे बुद्ध्वा "अग्ने नय" इत्याग्नीध्रमभिमृशति' (आप. श्रौ.सू. ११.१.१) इत्यापस्तम्बवचनानुसारं रात्रेस्तृतीयभागे समुत्थाय कृतशौचोऽध्वर्युः सौमिकं कर्म प्रारभेत। सौमिकानि कानिचनाङ्गानि यथाविध्यनुष्ठाय प्रातरनुवाकमन्त्रपठनाय होतारं सम्प्रेषयेत्—'प्रातर्यावभ्यो देवेभ्योऽनुब्रूहि' इति। प्रातरनुवाकमन्त्रानुवचनकालमापस्तम्बो निर्दिशति—'पुरा वाचः पुरा वा वयोभ्यः प्रवदितोः प्रातरनुवाकमुपाकरोति' (आप. श्रौ. ११.३.१४.) इति। मनुष्याणां पक्षिणाञ्च प्रवदनात्पूर्वं प्रातरनुवाकारम्भं

खण्डे सूत्रितः। 'अवा नो अग्न इति षळग्निमीळेऽग्निं दूतमि'ति[3]। तत्र हीनपादग्रहणात्सूक्त-निश्चयः। 'सूक्तं[4] सूक्तादौ हीने पादे' (आ० श्रौ० १-१) इति परिभाषितत्वात्। तस्मिन्सूक्ते प्रथमाया ऋचो द्वितीयस्यां[5] पवमानेष्टौ स्विष्टकृतो याज्यात्वेन विनियोगः। स च द्वितीयाध्यायस्य

---

कुर्यादिति सूत्रार्थः। अध्वर्युणा प्रेषितो होता हविर्धानशकटयोर्मध्यदेशमागत्य युगधुरा-वन्तरेणोपविश्य प्रातरनुवाकानुवचनं कुर्यान्मन्द्रस्वरेण। तथाचाहाश्वलायनः—'प्रपद्यान्तरेण युगधुरा उपविश्य प्रेषितः प्रातरनुवाकमनुब्रूयान्मन्द्रेण' (आश्व. श्रौ. ४.१३.)। प्रातरनुवाकशब्देन मन्त्रसमुदाय उच्यते। स च त्रेधा विभक्त आश्वलायनेन— आग्नेयः, उषस्यः, आश्विनश्चेति। तत्र 'आपो रेवतीः क्षयथा हि वस्वः' इत्यारभ्य 'अग्निं तं मन्य इति पाङ्क्तम्' इत्यन्तं यस्समुदायः सूक्तानां तृचानामृचां वा स आग्नेय इत्युच्यते। अग्निदेवताकत्वादयं समुदाय आग्नेयो भवति। अस्यैव क्रतुरिति संज्ञाऽऽश्वलायनेन कृता—'इत्याग्नेयः क्रतुः' इति। एवं 'प्रतिष्या सूनरी' इत्यारभ्य 'महे नो अद्येति पाङ्क्तम्' इत्यन्तो मन्त्रसमुदाय उषस्यः क्रतुर्भवति। उषादेवता-कत्वादयमुषस्यः। एवं 'एषो उषाः' इत्यारभ्य 'प्रति प्रियतममिति पाङ्क्तम्' इत्यन्तस्समुदाय आश्विनः क्रतुर्भवति। अत्राश्विनौ देवते। अतोऽयमाश्विनः क्रतुर्भवति। समुदायत्रये पठिता मन्त्राः प्रातरनुवाकशब्दशब्दिता भवन्ति।

[3] 'अवा नो अग्न इति षट्'। आग्नेयक्रतावाश्वलायनः—'अवा नो अग्न इति षट्, अग्निमीळे, अग्निं दूतम्' इति सूत्रयति। अस्यार्थः— 'अवा नो अग्न ऊतिभिः' इत्यारभ्य षण्मन्त्राः (ऋ. सं. १.७९.७–१२.) अग्निमीळ इति सूक्तम्, अग्निं दूतमिति च प्रातरनुवाका-न्तर्गताग्नेयक्रतौ विनियुज्यत इति।

[4] सूक्तं सूक्तादौ। परिभाषासूत्रमिदम्। सूत्रकारो मन्त्राणां विनियोगाय सूत्रेषु मन्त्रप्रतीकमुल्लिखति। तत्र तत्तत्सूक्तस्यादौ विद्यमानं पादं हीनाक्षरं यद्युल्लिखेत्, तर्हि तत्सूक्तं प्रत्येतव्यम्। ऋग्वेदगता मन्त्रास्सर्वेऽपि पादबद्धा भवन्ति। पादशब्दश्च मन्त्रभागवाची। ऋचां प्रायश्चत्वारः पादा भवन्ति। क्वचित् 'त्रिपदा गायत्री' इत्यादिविशेषनिर्देशेन त्रयोऽपि पादा भवन्ति। तत्तच्छन्दोभेदेन पादेष्वक्षराणि नियतानि। गायत्री, उष्णिक्, अनुष्टुप्, बृहती, पङ्क्तिः, त्रिष्टुप्, जगतीति सप्तसु छन्दस्सु क्रमेण षट्, सप्त, अष्टौ, नव, दश, एकादश, द्वादशाक्षराणि सामान्यतो नियतानि। तत्र गायत्री चतुष्पदा यदि भवेत्तर्हि प्रतिपादं षडक्षराणि, यदि च सा त्रिपदा, तर्हि प्रतिपादमष्टावक्षराणि। 'अग्निमीळे पुरोहितम्' इति त्रिपदा गायत्रीच्छन्दस्का ऋक्। अतः प्रतिपादमष्टावक्षराणि। 'अग्निमीळे-ऽग्निं दूतम्' इति सूत्रे 'अग्निमीळ' इति प्रतीकस्याक्षरचतुष्कत्वाच्चतुर्भिरक्षरैरयं पादो हीनो जातः। अतोऽत्र प्रतीकानुसारं सूक्तमेव प्रातरनुवाके विनियुज्यत इत्यर्थः।

[5] द्वितीयस्यां पवमानेष्टौ। दर्शपूर्णमास-चातुर्मास्य-ज्योतिष्टोमादीनि सर्वाणि श्रौतकर्माण्यग्नित्रयसाध्यानि भवन्ति। ते चाग्नय आधानाख्येन कर्मणा निष्पाद्यन्ते। 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः, वर्षासु रथकारः' इति वाक्यैस्तत्त-द्वर्णभेदेनाधानं विहितम्। सपत्नीकस्य यजमानस्य श्रौतकर्मस्वधिकारः। अतोऽग्न्याधानमपि सपत्नीकेनैव कर्तव्यम्। तच्चाधानं द्विविधम्—सर्वाधानमर्धाधानमिति। 'क्षौमे वसानौ

प्रथमखण्डे सूत्रितः—'साह्वान्विश्वा'[६] अभियुजः अग्निमीळे पुरोहितमिति संयाज्ये' (आ० श्रौ० २-१) इति। तत्र कृत्स्नपादग्रहणादृगित्यवगम्यते। 'ऋचं पादग्रहणे' (आ० श्रौ० १-१) इति परिभाषितत्वात्। तथा 'संयाज्ये इत्युक्ते सौविष्टकृती प्रतीयाद्' (आ० श्रौ० २-१) इति परिभाषितत्वात्स्विष्टकृत्सम्बन्धनिश्चयः। तत्रापि द्वितीयमन्त्रत्वेनोदाहृतत्वाद्याज्यात्वम्। यद्यपि 'साह्वाद्वि'त्यनया पुरोऽनुवाक्ययैव देवताया अनुस्मरणरूपः संस्कारः सिद्धस्तथापि याज्यानुवाक्ययोः समुच्चयो द्वादशेऽध्याये चतुर्थपादे मीमांसितः।

---

जायापती अग्निमादधीयाताम्' इति विध्यनुसारं क्षौमपरिधानानन्तरं सपत्नीको यजमानः स्वीयं वैवाहिकाग्निमौपासनशब्दवाच्यं प्रज्वाल्य तत्र ब्रह्मौदनपाकाद्यरणिनिष्टपनान्तं कर्म कृत्वा तमग्निमुद्वाप्यारणिं मथित्वा गार्हपत्यादेराधानं कुर्यादिति सर्वाधानपक्षः। पक्षोऽयम्—

'अर्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रया'॥ इति

लौगाक्षिवचनेन कलौ निषिद्धः। वैवाहिकमौपासनाग्निं प्रज्वाल्य ततोऽर्धं गृहीत्वा तस्मिन् ब्रह्मौदनपाकादिकं सम्पाद्य 'तस्मिन्नुपव्युषमरणी निष्टपेत्' (आप. श्रौ. ५.८.५.) इति विध्यनुसारमरणी तत्र प्रतितप्य तमग्निं निर्वाप्यारणी मथित्वा, तेनाग्निना गार्हपत्याद्याधानं कुर्यात्। अवशिष्टमर्धौपासनं स्मार्तकर्मानुष्ठानाय परिरक्षेत्। अयमर्धाधानपक्षः। अरणिमन्थनेन निष्पन्नमग्निं वेद्याः पश्चिमे भागे गोलाकारेण परिकल्पिते कुण्डे कल्पोक्तविधिनाऽऽदध्यात्। इदं गार्हपत्याधानम्। एवं वेद्याः पूर्वभागे चतुष्कोणाकारेण परिकल्पिते कुण्डे यथाविधि तमग्निमादध्यात्। इदमाहवनीयाधानम्। एवं दक्षिणे भागेऽर्धचन्द्राकारेण निर्मिते कुण्डेऽग्निमादध्यात्। इदं दक्षिणाग्न्याधानम्। एवमाधानेन निष्पन्नानग्नीनुपस्थाय तत्र पवमानेष्टयः क्रियन्ते। 'अग्नये पवमानाय, अग्नये पावकाय, अग्नये शुचये' इतिवाक्यविहिता इष्टयस्तिस्रः पवमानेष्टयः कथ्यन्ते। पवमानगुणयुक्तदेवताकत्वात्पवमानेष्टयो भवन्ति। आधानस्य यथा गार्हपत्याद्यग्निसिद्ध्यर्थत्वेनानुष्ठानं तथा पवमानेष्टीनामपि तत्सिद्ध्यर्थत्वेनैवानुष्ठानमिति मीमांसाभाष्यकाराः शबरस्वामिनोऽभिप्रयन्ति। भट्टपादा वार्तिककारास्तु— आधानाङ्गत्वेन पवमानेष्टीनामनुष्ठानमिति। उभयथाप्यग्निसिद्धिः पवमानेष्ट्यनुष्ठानानन्तरमेव भवति।

तत्र द्वितीया पवमानेष्टिः— 'अग्नये पावकाय'इति वाक्यविहिता। तत्र यः स्विष्टकृद्यागः तस्यायं मन्त्रो याज्या भवति। सर्वेषु यागेषु प्रधानयागानुष्ठानानन्तरं तद्यागोपयुक्तद्रव्यस्य पुरोडाशादेः संस्कारकतया यो यागः क्रियते सः स्विष्टकृद्व्यवह्रियते। शिष्टस्य द्रव्यस्य प्रतिपत्त्यर्थं क्रियमाणमिदं कर्म भवति। अस्मिन् कर्मणि प्रायोऽग्निरेव देवता। तत्र 'अग्निमीळे पुरोहितम्' इति मन्त्रस्य याज्यात्वेन विनियोगः। याज्यायास्स्वरूपमनुपदं निरूपयामः।

[६] 'साह्वान्विश्वा अभियुजः'। अस्मिन्सूत्रे—'साह्वान्विश्वा अभियुज' इत्येकस्य मन्त्रस्य प्रतीकम्, 'अग्निमीळे पुरोहितम्' इत्यपरस्य। एकैकत्र प्रतीकेऽष्टावक्षराणि गृहीतानि। अष्टाक्षरात्मको गायत्रीच्छन्दसः पादोऽयम्। यत्र प्रतीके सूत्रकारः पादं गृह्णाति तत्र समग्रामृचं विद्यादिति परिभाषा 'ऋचं पादग्रहणे' इत्यनेन बोधिता सूत्रकारेण। 'साह्वान्विश्वा' इति

'पुरोऽनुवाक्यया' याज्या विकल्प्या वा समुच्चिता।
विकल्प्यान्यतरेणैव देवतायाः प्रकाशनात्॥
पुरेवाद्यः, समाख्यानाद् वचनाच्च समुच्चयः॥'

देवताप्रकाशनकार्यस्यैकत्वाद्युग्मयोर्यथा विकल्पस्तथैकयुग्मगतयोरेतयोरिति चेन्नैवम्; पुरोऽनुवाक्येति समाख्याया उत्तरकालीनयाज्यामन्तरेणानुपपत्तेः। किञ्च 'पुरोऽनुवाक्यामनूच्य याज्यया जुहोती'ति प्रत्यक्षवचनेन देवतोपलक्षणहविःप्रदानकार्ये भेदोक्तिपुरस्सरं साहित्यं विधीयते। तस्मात्समुच्चय इति।

---

सूत्रे 'सांयाज्ये' इति पदस्य स्विष्टकृद्यागसम्बन्धिन्यौ याज्यापुरोनुवाक्ये इत्यर्थः। सोऽयमर्थः—'सांयाज्ये इत्युक्ते सौविष्टकृती प्रतीयात्' इति परिभाषया बोधितः। यत्र यत्र सूत्रकारः 'सांयाज्ये' इति पदं प्रयुङ्क्ते तत्र सर्वत्र स्विष्टकृद्यागसम्बन्धियाज्यापुरोनुवाक्ययोर्ग्रहणमिति जानीयादिति परिभाषासूत्रस्यार्थः। याज्यापुरोनुवाक्ययोः पाठावसरे प्रथमं पुरोनुवाक्यायाः पाठः, अनन्तरं याज्यायाः पाठ इति शास्त्रीयः क्रमः। 'याज्यापुरोनुवाक्ये' इत्यत्र याज्याशब्दस्य प्रथमं ग्रहणमल्पाच्तरत्वेनेति बोद्धव्यम्। 'अग्निमीळे पुरोहितम्' इति मन्त्रः 'साह्वान्विश्वा' इत्यस्मिन्सूत्रे द्वितीयतया गृहीत इत्ययं याज्यात्वेन ग्राह्यः। तथाचायं विनियोगनिष्कर्षः—'अग्निमीळे पुरोहितम्' इति मन्त्रः द्वितीयपवमानेष्टौ यस्स्विष्टकृद्यागः तत्र याज्यात्वेन विनियुज्यत इति।

[१] पुरोनुवाक्यया याज्या। अत्रायं विषयविवेकः—श्रौतकर्मसु पठनीया मन्त्रा विविधनामानो भवन्ति। तेषु पुरोनुवाक्या याज्या चेति संज्ञाद्वयम्। अनयोर्मन्त्रयोः पठनं सर्वत्र क्रतुषु अध्वर्युणा प्रेषितो होता कुर्यात्। अध्वर्युर्वेद्यां हवींष्यासाद्याग्नीध्रनामानमृत्विजम् 'आश्रावय' इति सम्प्रेष्यति। अहं देवता यष्टुं सन्नद्धोऽस्मि, त्वं देवता आश्रावयेति प्रैषार्थः। आग्नीध्रेण 'अस्तु श्रौषट्' (अहं श्रावयामि) इति प्रत्याश्रावणे कृतेऽध्वर्युर्यां देवतां यक्ष्यन्स्यात् तस्याश्चतुर्थ्यन्तं नाम परिगृह्य, यथा—अग्नये, इन्द्राय, प्रजापतये, अग्नये स्विष्टकृते इति, होत्रे 'अग्नयेऽनुब्रूहि' 'इन्द्रायानुब्रूहि' इत्येवं प्रैषं प्रदाय यथाविधि जुह्वां हविर्गृह्णीयात्। होता च यथाप्रैषं मन्त्रं ब्रूयात्। अयं मन्त्रः पुरोवाक्या। एवञ्चाध्वर्योः 'अनुब्रूहि' इति प्रैषसमनन्तरं हविर्ग्रहणावसरे होत्रा पठ्यमानो मन्त्रः पुरोनुवाक्येति स्वरूपं सिद्धम्। हविर्गृहीत्वा दक्षिणातिक्रम्याध्वर्युः द्वितीयान्तं देवतानामोच्चार्य 'अग्निं यज' 'इन्द्रं यज' 'प्रजापतिं यज' इत्येवं तत्तद्यागानुसारं होत्रे प्रैषं दद्यात्। प्रैषानुसारं होता 'येयजामहे' इति पदं मन्त्रस्यादौ संयोज्य, मन्त्रान्ते 'वौषट्' इत्युच्चार्य मन्त्रं पठेत्। अयं मन्त्रो याज्या। एवञ्च 'यज' इत्यध्वर्योः प्रैषानन्तरं 'येयजामहे' 'वौषट्' इति शब्दसंयोजनपुरस्सरं होत्रा पठ्यमानो मन्त्रो याज्येति स्वरूपं सिध्यति। अयं क्रमस्सर्वेषु यागेषु समानः। तथाच याज्ञिकाः पठन्ति—

'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च।
हूयते च पुनर्द्वाभ्यां स नो विष्णुः प्रसीदतु'॥ इति।

'आश्रावय' 'अस्तु श्रौषट्' 'यज' 'येयजामहे' 'वौषट्' इति श्लोकस्थसंख्यावाचकानां शब्दानामर्थो बोद्धव्यः।

एतच्चाग्निमित्याद्यिसूक्तं नवर्चम्। 'अग्निं[8] नव मधुच्छन्दा वैश्वामित्र' इत्यनुक्रमणिकाया-मुक्तत्वात्। विश्वामित्रपुत्रो मधुच्छन्दोनामकस्तस्य सूक्तस्य द्रष्टृत्वात्तदीय ऋषिः। ऋष गताविति धातुः। 'सर्वधातुभ्य इन्'(उ० ४-११६) इतीन्। 'इगुपधात्कित्' (उ० ४-११८)। वेदप्राप्त्यर्थं तपोऽनुतिष्ठतः पुरुषान्स्वयंभूर्वेदपुरुषः प्राप्नोत्। तथाच श्रूयते—'अजान्ह[9] वै पृश्नींस्तपस्यमानान्ब्रह्म स्वयम्भ्वभ्यानर्षत्तदृषयोऽभवन्नि'ति (तै० आ० २-९)। तथातीन्द्रियस्य वेदस्य परमेश्वरानुग्रहेण प्रथमतो दर्शनादृषित्वमित्यभिप्रेत्य स्मर्यते—

'युगान्तेऽन्तर्हितान्वेदान्सेतिहासान्महर्षयः।
लेभिरे तपसा पूर्वमनुज्ञाताः स्वयम्भुवा'॥ इति।

---

अनयोर्द्वयोरपि मन्त्रयोः कर्मसमवेततत्तद्देवतास्मारकत्वेन कर्माङ्गत्वमिष्यते मीमांसकैः। अङ्गताग्राहकञ्च प्रमाणं लिङ्गं भवति। तत्र कर्मसमवेतदेवताया एकेनैव मन्त्रेण स्मरणरूपे फले जायमाने मन्त्रद्वयस्य विकल्पो वा समुच्चयो वेति संशयः। संशयमेव निरूपयति—प्रथमार्धेन। याज्या पुरोनुवाक्यया विकल्पया वा समुच्चिता वेति। तत्रैकेनैव मन्त्रेण यागीयदेवतायां प्रकाशितायां पुनर्द्वितीयेन मन्त्रेण तत्प्रकाशनं कस्मै फलाय कल्पेत? अतो विकल्प एवानयोर्मन्त्रयोः। यथा संहिताभागे एकस्या देवतायाः कृते भूयांसि याज्यापुरोनुवाक्यायुगलानि समाम्नातान्यपि तेष्वेकस्यैव विकल्पेन ग्रहणं तथैवैकस्मिन् युगले पठितयोर्मन्त्रयोरेकस्यैव विकल्पेन ग्रहणमिति पूर्वः पक्षः। 'पुरेवाद्यः' इति भागेन पूर्वपक्षो गृहीतः। याज्यापुरोनुवाक्यायुगलेषु 'पुरा' पूर्वं यथा विकल्पः प्रसाधितः, स एवात्र 'आद्यः' संशये प्रदर्शितः पक्ष इत्यर्थः। सिद्धान्तं गृह्णाति–समाख्यानादिति। 'पुरोनुवाक्या' इति समाख्याबलात्समुच्चय इत्यर्थः। समाख्या यौगिकश्शब्दः। योगश्च-पुरः-पूर्वम् अनूच्यत इति। तत्र पुरःपदं कस्मात्पुर इति साकाङ्क्षम्। याज्यातः पुर इत्याकाङ्क्षापूरणीया—पूर्वं पुरोनुवाक्या, अनन्तरञ्च याज्येति। एवञ्चानयोस्समुच्चयस्सिध्यतीति भावः। समुच्चये हेत्वन्तरम्—वचनाच्चेति। 'पुरोनुवाक्यामनूच्य' इत्यत्र ल्यपा पुरोनुवाक्यानन्तर्यं याज्याया बोधितमिति तयोस्समुच्चय इत्यर्थः।

[8] अग्निं नव। अनुक्रमणिकाकारः कात्यायनः स्वरचितेषु सूत्रेषु सूक्तगता मन्त्राणां संख्याः, देवताः, छन्दांसि ऋषींश्च निर्दिशति। एतन्निर्देशार्थमेव तेन सूत्राणि प्रणीतानि। वेदरक्षार्थं सूत्रकारस्यायं प्रयासः। वेदाध्येतृभिर्वैदिकैरनुक्रमणिकाकारस्य नियमा अवश्यं पालनीया भवन्ति। वेदभाष्यविरचने सायणाचार्यस्येमानि सूत्राण्यत्यन्तं सहायकानि सन्ति। तत्र—अग्निम्—अग्निमीळे इत्यस्मिन् सूक्ते, नव-नवसंख्यका ऋचस्सन्ति। मधुच्छन्दा इति ऋषेर्नाम। स च विश्वामित्रपुत्रोऽस्य सूक्तस्य द्रष्टा, न तु रचयितेति सूत्रस्यार्थः।

[9] अजान्ह वै। तैत्तिरीयारण्यकस्य द्वितीयप्रपाठके नवमानुवाकेऽयं सन्दर्भो वर्तते। प्रपाठकस्यास्य स्वाध्यायब्राह्मणमिति संज्ञा। स्वाध्यायशब्दस्य स्वकुलपरम्परागता शाखेत्यर्थः। तस्या अध्ययने शुद्धः पुमानधिकारी। शुद्धिश्च—यज्ञोपवीत-सन्ध्यावन्दन-कूष्माण्डहोमादिभिर्भवति। तदेवां स्वाध्यायस्य च विधानाय प्रपाठकोऽयं प्रवृत्तः। तत्र स्वाध्यायं विधातुमियमाख्यायिका प्रवृत्ता—अजानिति। न जायन्त इत्यजा नित्याः। तान् पृश्नीन्–शुद्धान् निर्मलानित्यर्थः। तपस्यमानान्-तप आचरतः, स्वयम्भु-ब्रह्म जगत्कारणभूतं परं ब्रह्म, अथवा वेदरूपं परं

ऋष्याविज्ञानाभावे प्रत्यवायः स्मर्यते--
'अविदित्वा ऋषिं छन्दो दैवतं योगमेव च।
योऽध्यापयेज्जपेद्वाऽपि पापीयाञ्जायते तु सः॥
ऋषिच्छन्दोदैवतानि ब्राह्मणार्थं स्वरानपि।
अविदित्वा प्रयुञ्जानो मन्त्रकण्टक उच्यते'॥ इति।
वेदनविधिश्च स्मर्यते--
'स्वरो वर्णोऽक्षरं मात्रा विनियोगोऽर्थ एव च।
मन्त्रं जिज्ञासमानेन वेदितव्यं पदे पदे'॥ इति।

अग्निमित्यादिसूक्तस्य छन्दोऽनुक्रमणिकायां यद्यप्यत्र नोक्तं तथापि परिभाषायामेवमुक्तम्--'आदौ गायत्रं प्राग्घिरण्यस्तूपाद्" (अनु० १२-१४) इति। [10]हिरण्यस्तूप ऋषिर्येषां मन्त्राणां वक्ष्यते ततः प्राचीनेषु मन्त्रेषु सामान्येन गायत्रं छन्द इत्यर्थः। पुरुषस्य पापसम्बन्धं वारयितुमाच्छादकत्वाच्छन्द इत्युच्यते। तच्चारण्यकाण्डे समाम्नायते--'छादयन्ति[11] ह वा एनं छन्दांसि पापात्कर्मणः' (ऐ० आ० २.१.६) इति। अथवा चीयमानाग्निसन्तापस्याच्छादकत्वाच्छन्दः। तच्च तैत्तिरीया आमनन्ति--

---

तत्त्वम्, अभ्यानर्षत्-प्रत्यक्षमागच्छत्। ततस्ते तपस्यमाना मुनयः-ऋषयोऽभवन्। अर्थात्तेऽधिगतवेदा अभवन्। इदमेवर्षीणामृषित्वम्। एतेन-ऋषिशब्दस्य न जातिः प्रवृत्तिनिमित्तम्, किन्तु वेदात्मनः परमात्मनो दर्शनम्। अतश्चापौरुषेयत्वं वेदानां साधितं भवति। ततस्त ऋषयस्तां देवतामुपासितवन्तः। तदनुग्रहाच्च ते 'ब्रह्मयज्ञम्' सर्वकामसाधनमपश्यन्। तं यज्ञं यथायथमन्वतिष्ठन् इत्याख्यायिका। पञ्चमहायज्ञेषु ब्रह्मयज्ञोऽन्यतमो मुख्यश्च। देवयज्ञः, पितृयज्ञः, भूतयज्ञः, मनुष्ययज्ञः ब्रह्मयज्ञ इति पञ्च महायज्ञाः। एतेषां विवरणं तैत्तिरीयारण्यकस्य द्वितीयप्रपाठकस्य दशमानुवाके कृतं ततत एवावगन्तव्यम्। तत्र "यत्स्वाध्यायमधीयीत--एकामप्यृचं यजुः साम वा तद्ब्रह्मयज्ञस्सन्तिष्ठते' इति ब्रह्मणो वेदस्य सनियमं गृहीतस्य धारितस्य च प्रत्यहमध्ययनमेव यज्ञो ब्रह्मयज्ञ इति सिद्धम्। अस्यैव ब्रह्मयज्ञस्य फलश्रुतिरुत्तरत्र तैत्तिरीयारण्यके कीर्तिता।

[10] हिरण्यस्तूप ऋषिः। ऋग्वेदप्रथममण्डलस्यैकत्रिंशत्तमे सूक्ते हिरण्यस्तूप आङ्गिरसः ऋषिः। ततः पूर्वसूक्तगतेषु मन्त्रेषु गायत्रं छन्दः। किन्तु ततः पूर्वतनेषु सूक्तेषु छन्दोऽन्तरमपि दृश्यते, तथापि सामान्येन गायत्रं छन्द इत्यवगन्तव्यमिति परिभाषासूत्रार्थः।

[11] छादयन्ति ह वा। ऐतरेयारण्यके प्राणदेवतोपासनाविधिप्रसङ्गे प्राणदेवताया उपासनं छन्दोमयत्वेन कर्तव्यमित्युपवर्णितम्। उष्णिग्गायत्रीप्रभृतिभिश्छन्दोभिः प्राणदेवताया अङ्गानि लोमत्वगादीन्याच्छाद्य सा देवतोपासनीया। देवताङ्गानामाच्छादकत्वाच्छन्दसां छन्दस्त्वमिति निर्वचनम्। एवं देवताया ध्यानस्य फलश्रुतिरियम्-छादयन्ति हवेति। यः पुमान् प्राणदेवताया आच्छादकत्वेन जानाति, तमेनं पुमांसं पापात्कर्मणो गोपायन्ति छन्दांसीति तेषां वैशिष्ट्यमवबोधितम्।

[12]'प्रजापतिरग्निमचिनुत। स क्षुरपविर्भूत्वातिष्ठत्। तं देवा बिभ्यतो नोपायन्। ते छन्दोभिरात्मानं छादयित्वोपायन्। तच्छन्दसां छन्दस्त्वमि'ति। (तै० स० ५-६-६-१) यद्वाऽपमृत्युं वारयितुमाच्छादयतीति च्छन्दः। तदपि छान्दोग्योपनिषद्याम्नातम् 'देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिरात्मानमाच्छादयन्यदेभिराच्छादयंस्तच्छन्दसां छन्दस्त्वमि'ति (छा० उ० १-४-२)। तथा[13] द्योतनार्थदीव्यतिधातुनिमित्तो देवशब्द इत्येतदाम्नायते—"दिवा वै नोऽभूदिति तद्देवानां देवत्वम्" (तै० ब्रा० २-२-९-९) इति। अतो दीव्यतीति देवः। मन्त्रेण द्योत्यत इत्यर्थः। अस्मिन्सूक्ते स्तूयमानत्वादग्निर्देवः—तथा चानुक्रमणिकायामुक्तम्—'[14]मण्डलादिष्वाग्नेयमैन्द्राद्' (अनु० १२-१२) इति। तस्य सूक्तस्य प्रथमामृचं भगवान् वेदपुरुष आह—

[12] प्रजापतिरग्निमचिनुत। चयनप्रकरणे 'कार्ष्ण्यौ उपानहावुपमुञ्चते' (तै० सं० ५.४.४) इत्यस्ति विधिः। कृष्णाजिननिर्मिते उपानहौ कार्ष्ण्यौ। तयोः प्रतिमोकः कर्तव्य इति विधेरर्थः। इष्टकाभिरग्निचयनं सम्पाद्य तदधिरोहणं यदा कुर्वन् स्याद्यजमानस्तदाऽनयोः प्रतिमोकः। अस्य विधेस्तावकत्वेन प्रवृत्तोऽयमर्थवादः। प्रजापतिरग्निचयनं यदा कृतवान् तदाऽग्निः क्षुरपविर्भूत्वाऽदृश्योऽतिष्ठत्। पविरिति वज्रस्य नाम। क्षुरधारासमानधारा यस्य वज्रस्य सः क्षुरपविः। तादृशोऽत्युग्रोऽग्निरभवदित्यर्थः। तादृशमग्निं दृष्ट्वा भीता देवास्तत्समीपं गन्तुं नाशक्नुवन्। तत्प्रतीकारं विचिन्त्य ते देवाश्छन्दोभिः विविधच्छन्दोयुक्तैर्मन्त्रैः स्वशरीराण्याछाद्य—छन्दोयुक्तमन्त्रजपद्वाराऽऽत्मरक्षां विधायाऽग्निसमीपमगच्छन्। अतश्छादयन्त्येभिरिति व्युत्पत्त्या छन्दस्त्वं सम्पन्नमिति तन्निर्वचनम्।

[13] तथा द्योतनार्थ०। ऋषिच्छन्दःपद्योः प्रवृत्तिनिमित्तं प्रदर्श्य देवशब्दस्य प्रवृत्तिनिमित्तप्रदर्शनपरोऽयं ग्रन्थः। दीव्यतीति देवः। तत्तन्मन्त्रेण यो द्योत्यते स देवो भवति। कर्मसु देवतायाः परिज्ञानाय सन्त्युपायास्त्रयः--तद्धितं, चतुर्थी, मन्त्रश्च। 'साऽस्य देवता' इत्यधिकारे विहिततद्धितान्तेन पदेन 'आग्नेयं हविः' 'आग्नेयं सूक्तम्' इत्यादिना, 'यदग्नये च प्रजापतये च' 'कृत्तिकाभ्यः' इत्यादिचतुर्थ्यन्तेन पदेन, मन्त्रवर्णेन च देवता बुध्यन्ते। तत्र पूर्वं पूर्वं प्रबलमुत्तरमुत्तरञ्च दुर्बलमिति भट्टपादा वदन्ति–

'तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलन्तु परं परम्' ॥ इति।

देवशब्दस्य प्रवृत्तिनिमित्तं दर्शयति—'दिवा वै' इति। तैत्तिरीयब्राह्मणे सृष्टिप्रकरण इदं वाक्यमाम्नायते। प्रजापतिरसुरान् संसृज्य तेभ्यो मृन्मये पात्रेऽन्नं प्रदाय स्वां तनूं विनाशितवान्, सा रात्रिरभवत्। अनन्तरं मनुष्यान् सृष्ट्वा तेभ्यो दारुमये पात्रे पयो दत्त्वा स्वां तनूं विनाशितवान्, ततो ज्योत्स्नाऽभवत्। ततो वसन्तादिकालपुरुषमुत्पाद्य तस्मै घृतं प्रदाय स्वशरीरं नाशितवान्, ततोऽहोरात्रयोस्सन्धिरभवत्। ततो देवानसृजत। तेभ्यः सोमं दत्त्वा स्वां तनूं विनाशितवान्, ततोऽहरभवत्। देवानामुत्पादिका या प्रजापतेस्तनूः सेयमहोरूपेण निष्पन्नेत्यवगत्य देवा अस्माकं दिवैवाभूदिति हर्षमाप्नुवन्। अतो दिवायोगेन देवत्वं सम्पन्नमिति निर्वचनम्।

[14] मण्डलादिष्वाग्नेयमैन्द्रात्। आ ऐन्द्रादिति च्छेदः। ऋग्वेदस्य दशमण्डलपरिमितस्य तत्तन्मण्डलादौ-आग्नेयं सूक्तम्। यस्मिन्मण्डले ऐन्द्रं सूक्तमादौ वर्तते तावत्पर्यन्त-

अग्निनामकं देवमीळे स्तौमि। ईड स्तुतौ इति धातुः। डकारस्य ळकारो बह्वृचाध्येतृसंप्रदायप्राप्तः। तथा च पठ्यते—

'अज्मध्यस्थडकारस्य ळकारं बह्वृचा जगुः।

अज्मध्यस्थढकारस्य ळ्हकारं वै यथाक्रमम्।' इति।

मन्त्रस्य होत्रा प्रयोज्यत्वाद् अहं होता स्तौमीति लभ्यते। कीदृशमग्निम्? यज्ञस्य पुरोहितम्। यथा राज्ञः पुरोहितस्तदभीष्टं सम्पादयति तथाग्निरपि यज्ञस्यापेक्षितं होमं संपादयति। यद्वा यज्ञस्य सम्बन्धिनि पूर्वभागे आहवनीयरूपेणावस्थितम्। पुनः कीदृशम्? देवं दानादिगुणयुक्तम्। पुनः कीदृशम्? होतारमृत्विजम्। देवानां यज्ञे होतृनामक ऋत्विगग्निरेव। तथा च श्रूयते'—अग्निर्वै देवानां होता' (ऐ० ब्रा० ३-१४)इति। पुनरपि कीदृशम्? रत्नधातमम्। यागफलरूपाणां रत्नानामतिशयेन धारयितारम्, पोषयितारं वा।

अत्राग्निशब्दस्य यास्को बहुधा निर्वचनं दर्शयति—[15]'अथातोऽनुक्रमिष्यामः। अग्निः पृथिवीस्थानः, तं प्रथमं व्याख्यास्यामः, अग्निः कस्मात्? अग्रणीर्भवत्यग्रं यज्ञेषु प्रणीयते अङ्गं नयति सन्नममानः अक्नोपनो भवतीति स्थौलाष्ठीविर्न क्नोपयति न स्नेहयति। त्रिभ्य आख्यातेभ्यो जायते इति शाकपूणिः-इतादक्ताद्दग्धाद्वा नीतात्स खल्वेतेरकारमादत्ते, गकारमनक्तेर्वा, दहतेर्वा नीः परस्तस्यैषा भवत्यग्निमीळ इति' (नि० ७-१४)। अस्यायमर्थः—सामान्येन सर्वदेवतानां लक्षणस्याभिहितत्वादनन्तरं यतः प्रतिपदं विशेषेण वक्तव्यत्वमाकाङ्क्षित-

---

मित्यर्थः। अष्टममण्डलस्य प्रथमं सूक्तमैन्द्रम्, ततः पूर्वं सप्तसु मण्डलेषु प्रथमं सूक्तमाग्नेयमस्तीति दिक्।

[15] अथातः। अत्र यास्काचार्यस्य निर्वचनानि त्रीणि, स्थूलाष्ठीवनामकस्य महर्षेः पुत्रः स्थौलाष्ठीविः नाम्ना अक्नोपनः, तस्य निर्वचनमपरम्। शाकपूणेराचार्यस्यान्यत्। प्रतिनिर्वचनं सायणाचार्येणोपष्टम्भकानि प्रमाणानि प्रदत्तानि। तदिदं निर्वचनं द्विविधानां शब्दानां भवति—समर्थस्वरसंस्काराणाम् असमर्थस्वरसंस्काराणाञ्च। अर्थाननुसृत्य धावमानाश्शब्दाः समर्थस्वरसंस्काराः, यत्रार्था एव शब्दाननुधावन्ति तत्र ते शब्दा असमर्थस्वरसंस्काराः। आद्येष्वर्थः प्रधानं शब्दश्चाप्रधानम्, द्वितीयेषु शब्दः प्रधानमर्थश्चाप्रधानम्। तत्राद्येषु व्याकरणैकगोचरौ स्वरसंस्कारौ धातुनाऽन्वितौ भवतः, द्वितीयेषु तौ तेन नान्वितौ भवतः। येषु शब्देषु स्वरसंस्कारयोरनन्वयः तेषु कथञ्चित्क्रियासामान्यमाश्रित्य शब्दानां निर्वचनं कर्तव्यं भवति। एतादृशेषु शब्देषु यदा क्रियासामान्यमपि किञ्चिन्नोपलभ्येत तदा तेषु-अक्षरवर्णादिसामान्यमाश्रित्यैव निर्वचनं प्रवर्तते। अयमेव पक्षस्समाश्रितः स्थौलाष्ठीविना शाकपूणिना च। मीमांसका अपि वेदापौरुषेयत्वं विशेषेण प्रसाधयन्तः तत्र सर्वत्रापि यास्कस्य द्वितीयं पक्षं स्थौलाष्ठीविशाकपूणिमतञ्चावलम्बन्ते, यत्रार्थप्राधान्येन स्वरसंस्कारयोः करणे वेदस्य पौरुषेयत्वं सिध्येत्। विषयोऽयं 'गुणवादस्तु' (जै. सू. १. २.१०.) इति सूत्रस्य भाष्याद्वार्तिकाच्चावगन्तव्यः।

मतोऽनुक्रमेण वक्ष्यामः। तत्र पृथिवीलोके स्थितोऽग्निः प्रथमं व्याख्यायते। कस्मात्प्रवृत्तिनिमित्तादग्निशब्देन देवताभिधीयत इति प्रश्नस्य 'अग्रणी'रित्यादिकमुत्तरम्। देवसेनामग्रे स्वयं नयतीत्यग्रणीः। इदमेकमग्निशब्दस्य प्रवृत्तिनिमित्तम्। तथा च ब्राह्मणान्तरम्—'अग्निर्वै देवानां सेनानीरि'ति। एतदेवाभिप्रेत्य बह्वृचा मन्त्रब्राह्मणे आमनन्ति—'अग्निर्मुखं प्रथमो देवतानामि'ति (ऐ० ब्रा० १.४) मन्त्रः, 'अग्निर्वै देवानामवम' इति च ब्राह्मणम् (ऐ० ब्रा० १-१)। तथा तैत्तिरीयाश्चामनन्ति—'अग्निरग्रे प्रथमो देवतानामि'ति 'अग्निरवमो देवतानामि'ति (तै० ब्रा० २-४-३-२) च। वाजसनेयिनस्त्वेवमामनन्ति—'स वा एषोऽग्रे देवतानामजायत तस्मादग्निर्नामे'ति। यज्ञेष्वग्निहोत्रेष्टिपशुसोमरूपेष्वग्रं पूर्वदिग्वर्त्याहवनीयदेशं प्रति गार्हपत्यात्प्रणीयत इति द्वितीयं प्रवृत्तिनिमित्तम्। सन्नममानः सम्यक् स्वयमेव प्रह्वीभवन्नङ्गं स्वकीयशरीरं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति तृतीयं प्रवृत्तिनिमित्तम्। स्थूलाष्ठीवनामकस्य महर्षेः पुत्रो निरुक्तकारः कश्चिद् 'अक्नोपन' इत्यग्निशब्दं निर्वक्ति—तत्र न क्नोपयतीत्युक्ते न स्नेहयति किन्तु काष्ठादिकं रूक्षयतीत्युक्तं भवति। शाकपूणिनामको निरुक्तकारो धातुत्रयादग्निशब्दनिष्पत्तिं मन्यते—इतः 'इण् गता'विति धातुः। अक्तो'अञ्जू व्यक्तिम्रक्षणकान्तिगतिष्वि'ति' धातुः। दग्धो 'दह भस्मीकरण' इति धातुः। नीतो 'णीञ् प्रापण' इति धातुः। अग्निशब्दो ह्यकारगकारनिशब्दानपेक्षमाण एतिधातोरुत्पन्नादयनशब्दादकारमादत्ते। अनक्तिधातुगतस्य ककारस्य गकारादेशं कृत्वा तमादत्ते। यद्वा दहतिधातुनिष्पन्नाद्दग्धशब्दाद्गकारमादत्ते। नीरिति नयतिधातुः। स च ह्रस्वो भूत्वा परो भवति। ततो धातुत्रयं मिलित्वाग्निशब्दो भवति। यज्ञभूमिं गत्वा स्वकीयमङ्गं नयति काष्ठदाहे हविष्पाके च प्रेरयतीति समुदायार्थः। तस्याग्निशब्दार्थस्य देवताविशेषस्य प्राधान्येन स्तुतिदर्शनार्थैवा 'अग्निमीळे' इति ऋग् भवतीति।

तामेतामृचं यास्क एवं व्याख्यातवान्—'अग्निमीळेऽग्निं याचामीळिरध्येषणाकर्मा, पूजाकर्मा वा। पुरोहितो व्याख्यातः यज्ञस्य देवो दानाद्वा दीपनाद्वा द्योतनाद्वा द्युस्थानो भवतीति वा। यो देवः सा देवता। होतारं ह्वातारं, जुहोतेर्होतेत्यौर्णवाभः। रत्नधातमं रमणीयानां धनानां दातृतमम्' (नि० ७-१५) इति। अस्यायमर्थः—ईडतिधातोः स्तुत्यर्थत्वं प्रसिद्धम्। धातूनामनेकार्थत्वमिति न्यायमाश्रित्य याच्ञाध्येषणापूजा अप्यत्रोचितत्वात्तदर्थतया व्याख्याताः। पुरोहितशब्दो द्वितीयेऽध्याये 'यद्देवापिः शन्तनवे पुरोहित' इत्येतामृचमुदाहृत्य 'पुर एनं दधति' (नि० २-१२) इति व्याख्यातः।[16] तैत्तिरीयाश्च पौरोहित्ये स्पर्धमानस्य पश्वनुष्ठानं विधाय तत्फलत्वेन 'पुर एनं दधत' इत्यामनन्ति (तै० स० २-१-२-९)। देवशब्दो दानदीपनद्योतनानामन्यतममर्थमाचष्टे। यज्ञस्य दाता दीपयिता द्योतयितायमग्निरित्युक्तं भवति। दीपनद्योतनयोरेकार्थत्वेऽप्यस्ति

---

16 तैत्तिरीयाश्च पौरोहित्ये। तैत्तिरीयसंहितायाम् 'आग्नेयं कृष्णग्रीवमालभेत सौम्यं बभ्रुम् आग्नेयं कृष्णग्रीवमापुरोधायां स्पर्धमानः' इति ब्राह्मणेन त्रिपशुको यागो विहितः। बभ्रुः पिङ्गलः पशुः। तस्योभयतः कृष्णग्रीवौ पशू अनुष्ठेयौ। 'आग्नेयो वै ब्राह्मण'इति ब्राह्मणस्याग्नेयत्वम्, 'सोम राजन्' इति मन्त्रेण सोमस्य राजन्यत्वं प्रसिद्धम्। अतस्सौम्यः पशुः राजन्यः। तस्योभयत आग्नेयानुष्ठाने सति प्रतिस्पर्धिनः पराजयो भवति। तेन च राजामात्यादयः 'एनं' ब्राह्मणम् 'पुरो दधते' पौरोहित्यपदे स्थापयन्तीति प्रकृतवाक्यस्यार्थः।

धातुभेदः। यद्यप्यग्निः पृथिवीस्थानस्तथापि देवान् प्रति हविर्वहनाद् द्युस्थानो भवति। देवशब्ददेवताशब्दयोः पर्यायत्वान्मन्त्रप्रतिपाद्या काचिदग्निव्यतिरिक्ता देवता नान्वेषणीया। होतृशब्दस्य ह्वयतिधातोरुत्पन्नत्वेन देवानामाह्वातारमिति। और्णवाभनामकस्तु मुनिर्जुहोतिधातोरुत्पन्नो होतृशब्द इति मन्यते। अग्नेश्च होतृत्वं होमाधिकरणत्वेन द्रष्टव्यम्। रत्नशब्दो द्वितीयाध्याये (निघ० २-१०) मघमित्यादिष्वष्टाविंशतौ धननामसु पठितः। रमणीयत्वाद्रत्नत्वम्। दधातिधातुरत्र दानार्थवाचीति। तदिदं निरुक्तकारस्य यास्कस्य मन्त्रव्याख्यानम्।

अथ व्याकरणप्रक्रियोच्यते।[17] अगिधातोर्गत्यर्थाद् 'अङ्गेर्नलोपश्च' (उ० ४-५८) इत्यौणादिकसूत्रेण निप्रत्ययः। इदित्वान्नुमागमेन प्राप्तस्य नकारस्य लोपश्च भवति। अङ्गति स्वर्गं

---

[17] अथ व्याकरणप्रक्रिया। व्याकरणप्रक्रियायां सायणाचार्यः पदसाधनानि स्वरसाधनानि च प्रदर्शयति। केन सूत्रेण किं कार्यं भवतीति स्पष्टं भाष्यकारो वदत्येव। छात्राणां बोधसौकर्याय क्लिष्टानि पदानि परिगणयामि तत्र तत्र। स्वरसञ्चारविषये प्रवेशसिद्ध्यर्थमादौ किञ्चिन्निरूपयामि। असति विशेषे एकस्मिन् पदे एकमेवाक्षरमुदात्तस्वरयुक्तं भवतीति नियमः। अतः प्रथममुदात्तस्वरः कस्य ? केन च सूत्रेणेत्यत्रावधानं देयम्। कस्याप्यक्षरस्योदात्तस्वरे निर्णीतेऽवशिष्टानामक्षराणां स्वरास्सामान्येन निर्द्धारिता भवन्ति। यथा केशेषु गृहीतेषु सर्वं गात्रं स्वायत्तं भवति तथोदात्ते गृहीते सर्वं पदं स्वायत्तं भवति। तदिदं बोध्यते–'अनुदात्तं पदमेकवर्जम्' इति सूत्रेण। एकवर्जम्-एकमक्षरं विहाय पदमनुदात्तस्वरयुक्तं भवतीति तस्यार्थः। एकस्याक्षरस्योदात्ते स्वरिते वा शास्त्रेण निश्चितेऽवशिष्टान्यक्षराणि तस्मिन्पदेऽनुदात्तानि भवन्तीति यावत्। अनन्तरम् 'उदात्तादनुदात्तस्य स्वरितः' इति सूत्रेण उदात्तात्परं विद्यमानस्यानुदात्तस्य स्वरितस्वरो विधीयते। स्वरितात्परमनुदात्तानां प्रचयस्वरः–'स्वरितात्संहितायामनुदात्तानाम्' इति सूत्रेण प्राप्नोति। उदात्तात्पूर्वं विद्यमानानामक्षराणान्त्वनुदात्तस्वर एव। यथाऽत्रैव मन्त्रे—'रत्नधातमम्' इति पदस्य, रत्नानि दधातीति रत्नधा, अतिशयेन रत्नधा रत्नधातमः, तम् इति विग्रहे कृते, 'समासस्य' इति सूत्रेण समासान्तोदात्तस्वरः स्वीकर्तव्यः। अर्थात् धकारोत्तरवर्त्याकारस्योदात्तः। 'अनुदात्तं पदमेकवर्जम्' इत्यनेन धकारात्पूर्वं विद्यमानयोरक्षरयोः अनुदात्तस्वरः—रत्नधा इति। रत्नधाशब्दादतिशायने विहितस्य तमपः 'अनुदात्तौ सुप्पितौ' इत्यनेन सुपां पिताञ्च प्रत्ययानामनुदात्तस्वरो भवतीत्यर्थकेनानुदात्तस्वरः रत्न धातम इति। तदूर्ध्वं द्वितीयैकवचनविवक्षायां 'अम्' प्रत्ययः—रत्नधातम अम् इति स्थिते 'अमि पूर्वः' इति पूर्वरूपे जाते रत्नधा तमम् इति भवति। 'उदात्तादनुदात्तस्य स्वरितः' इत्यनेन उदात्ताद्धकारोत्तरवर्त्याकारात्परं विद्यमानस्यानुदात्तस्य स्वरितः–रत्नधातमम् इति। 'स्वरितात्संहितायामनुदात्तानाम्' इत्यनेन स्वरितात्परं विद्यमानस्यानुदात्तस्य प्रचयः—रत्नधातमम् इति सिध्यति। एवञ्चास्य शब्दस्य स्वरसञ्चाराय निर्दिष्टानां षण्णां सूत्राणामावश्यकतेति बोद्धव्यम्।

गच्छति हविर्नेतुमित्यग्निः। तत्र 'धातोः' (पा० ६-१-१६२) इत्यकार उदात्तः। 'आद्युदात्तश्च' (पा० ३-१-३) इति प्रत्ययगत इकारोऽप्युदात्तः। 'अनुदात्तं पदमेकवर्जम्' (पा० ६-१-१५५) इति द्वयोरन्यतरमुदात्तमवशिष्येतरस्यानुदात्तत्वं प्राप्तम्। तत्र धातुस्वरे प्रथमतोऽवस्थिते सति पश्चादुपदिश्यमानः प्रत्ययस्वरोऽवशिष्यते, 'सति शिष्टः स्वरो बलीयान्'[18] (पा० वा० ६-१-१५८) इति हि न्यायः। ततोऽन्तोदात्तमग्निप्रातिपदिकम्। 'अनुदात्तौ सुप्पितौ' (पा० ३-१-४) इत्यमित्येतद् द्वितीयैकवचनमनुदात्तम्। तस्य 'अमि पूर्वः' (पा० ६-१-१०७) इति यत्पूर्वरूपं तदुदात्तम्। 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इति सूत्रितत्वात्। अग्निशब्दो

[18] न्यायोऽयं 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इति वाच्यम्' इति वार्तिकसिद्धः। धातोः परं तिङि परे सति विधीयमानाः—शप्, श्लु, श्यम्, श्नु, श्ना इत्यादयः प्रत्यया विकरणशब्देन व्यवह्रियन्ते। धातुस्वरे प्राप्ते सति विकरणेभ्योऽन्यत्र प्रत्ययानामुपदिश्यमानः स्वरो बलीयान् भवतीति वार्तिकस्यार्थः। यथा—तनु विस्तार इति उविकरणधातुः। तत्र लटि प्रथमपुरुषबहुवचने तन्वन्ति इति रूपम्। तनुधातुरुदित्। तन् झि इत्यत्र 'झोऽन्तः' इति प्रत्ययावयवस्यान्तादेशे तन् अन्ति इति स्थिते 'तनादिकृञ्भ्य उः' इति उप्रत्ययः। तन् उ अन्ति इति स्थिते 'हुश्नुवोः' इति सूत्रेण यण्। तन्वन्ति इति रूपम्। अत्र धातुस्वर उदात्तः, उप्रत्ययस्यापि प्रत्ययस्वर उदात्तः, अन्तिप्रत्ययस्यापि प्रत्ययाद्युदात्तस्वरः। तत्र सति शिष्टन्याये विकरणेभ्योऽन्यत्रेति निर्दिष्टत्वात्तिङ एवाद्युदात्तः। तथाच तन्वन्ति इति भवति। विकरणप्रत्यये विद्यमानेऽपि तदन्यस्वर एव शिष्यते। एवं 'वृण्वते' इत्यत्रापि प्रत्ययस्वर एव न विकरणस्वरः। सति शिष्टोऽपि विकरणस्वरः प्रत्ययस्वरं न बाधत इति न्यायात्।

अग्निम् इत्यत्राग्धातोः निप्रत्ययः। तत्र 'धातोः' (धातोरन्त उदात्तस्स्यात्) इति सूत्रेण धातुसम्बन्धिनोऽकारस्योदात्तस्वरः। 'आद्युदात्तश्च' (प्रत्यय आद्युदात्तस्स्यात्) इति सूत्रेण निप्रत्ययसम्बन्धिन इकारस्याप्युदात्तः प्राप्तः। द्वयोर्मध्य एकस्योदात्तस्य त्यागः कर्तव्यः। स च कस्य क्रियतामित्यपेक्षायां सति शिष्टन्यायेन प्रत्ययस्वरस्य बलीयस्त्वं स्वीकृत्य धातुसम्बन्धिनोऽकारस्यैवोदात्तः परित्यक्तव्यः। तथासति 'अनुदात्तं पदमेकवर्जम्' इति सूत्रेण तस्यानुदात्तत्वं प्राप्नोति। 'अग्नि' इति स्थिते द्वितीयाविवक्षायाम् 'अम्' प्रत्ययः, तस्य च सुप्त्वादनुदात्तस्वरः। अग्नि अम् इति स्थिते 'अमि पूर्वः' इत्यनेन पूर्वरूपमेकादेशो भवति। तदा स्वस्यानुदात्तत्वे सत्यपि उदात्तेन नकारोत्तरवर्तीकारेणैकादेशे 'एकादेश उदात्तेनोदात्तः' (उदात्तेनैकादेश उदात्तो भवति) इति सूत्रेण तस्योदात्तस्वर एव भवति। 'अग्निम्' इति सिध्यति। एवञ्च 'अग्निः अग्नी अग्नयः, अग्निं अग्नी अग्नीन्, अग्निना अग्निभ्यां अग्निभिः इत्येवं सप्तसु विभक्तिषु स्वराः प्रत्येतव्याः। पूर्वं प्रदर्शितस्त्रापेक्षयाऽस्य शब्दस्य स्वरसञ्चाराय विशेषेण त्रीणि सूत्राणि वार्तिकमेकञ्चापेक्ष्यन्ते।

धातुजन्मेति मते सेयं प्रक्रिया सर्वापि द्रष्टव्या। मतद्वयं यास्केन प्रदर्शितम्—'नामान्याख्यातजानीति[19] शाकटायनो नैरुक्तसमयश्च। न सर्वाणीति गार्ग्यो वैयाकरणानां चैके' (नि० १-१२) इति। गार्ग्यस्य मतेऽग्निशब्दस्याखण्डप्रातिपदिकत्वात् 'फिषोऽन्त उदात्तः' (फि० १-१) इत्यन्तोदात्तत्वम्। पूर्वोक्तेष्वग्रणीरित्यादिनिर्वचनेषु प्रकृतिप्रत्ययाद्यशेषप्रक्रिया यथोचितं कल्पनीया। एतदेवाभिप्रेत्य यास्क आह[20]—'अथ निर्वचनम्—तद्येषु पदेषु स्वरसंस्कारौ समर्थौ प्रादेशिकेन गुणेनान्वितौ स्यातां तथा तानि निर्ब्रूयात्। अथानन्वितेऽर्थेऽप्रादेशिके विकारेऽर्थनित्यः परीक्षेत केनचिद्वृत्तिसामान्येन, अविद्यमाने सामान्येऽप्यक्षरवर्णसामान्यान्निर्ब्रूयान्न त्वेव न निर्ब्रूयात्' (नि० २-१) इति। अस्यायमर्थः—तत्तत्र निर्वचनीयपदसमूहमध्ये येष्वग्न्यादिपदेषु पूर्वोक्तरीत्या स्वरसंस्कारौ समर्थौ व्याकरणसिद्धौ स्याताम्, स्वर उदात्तादिः, संस्कारो निप्रत्ययादिः, किञ्च तौ स्वरसंस्कारौ प्रादेशिकेन गुणेनान्वितौ स्याताम्, शब्दस्यैकदेशः पूर्वोक्तोऽगिधातुः प्रदेशः, तत्र भवो गुणो गतिरूपोऽर्थः, तेनान्वितौ। तान्यग्न्यादीनि पदानि तथा व्याकरणानुसारेण निर्ब्रूयात्। तच्च निर्वचनमस्माभिः प्रदर्शितम्। अथ पूर्वोक्तवैलक्षण्येन कश्चित्त्वेन विवक्षितोऽर्थो नान्वितस्तस्मिञ्छब्देऽनुगतो न भवेत्, तस्यैव व्याख्यानम् अप्रादेशिके विकार इति। अग्रनयनादिरूपः क्रियाविशेषो विकारः। स च प्रदेशेनाग्निशब्दैकदेशेनात्र नाभिधीयत इत्यप्रादेशिकः। एवं सति यः पुमानर्थनित्यः स्वविवक्षितेऽर्थे नियतो निर्बन्धवान्, ब्राह्मणानुसारेण वा देवतान्तरविशेषणत्वेन योजयितुं वा स निर्बन्धः, तदानीं स पुमान् केनचिद्वृत्तिसामान्येन स्वविवक्षितमर्थं परीक्षेत, तस्मिञ्छब्दे योजयेत्। वृत्तिः क्रिया। तद्रूपेण सामान्यं सादृश्यम्। अस्माभिश्चाग्रनयनादिरूपं क्रियात्वसामान्यमुपजीव्याग्रणीत्वाद्यर्थो योजितः। तदिदं यास्काभिमतं निर्वचनम्। स्थौलाष्ठीविरक्षरसाम्यान्निरवक्ति। अक्नोपनशब्दस्यादौ निषेधार्थकमकाररूपमक्षरं विद्यते। अग्निशब्दस्याप्यादावकारोऽस्ति। तदिदमक्षरसाम्यम्। शाकपूणिस्तु वर्णसाम्यान्निर्ब्रूते। दग्धशब्दाग्निशब्दयोर्गकारवर्णेन साम्यम्। सर्वथापि निर्वचनं न त्याज्यमिति। ईळ इत्येतत्पदं कृत्स्नमप्यनुदात्तम्।

---

[19] नामान्याख्यातजानि। आख्यातानि नामानि उपसर्गा निपाताश्चेति चत्वारि पदजातानि। तेषां—'भावप्रधानमाख्यातम् सत्त्वप्रधानानि नामानि, नामाख्यातयोस्तु कर्मोपसंयोगद्योतका भवन्ति, उच्चावचेष्वर्थेषु निपतन्ति' इत्यादिसन्दर्भेण सुविस्तरं स्वरूपं प्रदर्शितम्। तत्र यानि नामानि तानि सर्वाणि, आख्यातजानि—आख्यातान्तपदनिष्पन्नानि भवन्तीति शाकटायनाचार्योऽभिप्रैति। एवं निरुक्तशास्त्रविदाञ्चायमेव सिद्धान्तः। गार्ग्य आचार्यः वैयाकरणानां मध्ये केचन पाणिनिप्रभृतयश्च सर्वाणि नामान्याख्यातजानीति नाभिप्रयन्ति, किन्तूणादिप्रत्ययान्तानि नामान्यव्युत्पन्नान्यपि भवन्तीति वदन्ति। एवञ्चास्मिन्मते—अग्निपदमखण्डप्रातिपदिकं स्वीकृत्य स्वरसञ्चारः कर्तव्यो भवति। तत्र 'फिषोऽन्त उदात्तः' इति सूत्रेणान्तोदात्तत्वमग्निशब्दस्य। फिट् इति प्रातिपदिकमुच्यते। तस्यान्तिममक्षरमुदात्तं भवतीत्यर्थः। अयमेव प्रातिपदिकस्वरशब्देन व्यवह्रियते।

[20] अस्य च सारः पूर्वमेव निरूपितः। विशेषश्च भाष्यादवगन्तव्यः।

'तिङ्ङतिङः'[21] (पा० ८-१-२८) इति अतिङन्तादग्निशब्दात्परस्येळे इत्यस्य तिङन्तस्य निघात-विधानात्। पदद्वयसंहिताकाले ईकारस्य धातुगतस्य 'उदात्तादनुदात्तस्य स्वरितः' (पा० ८-४-६६) इति स्वरितत्वम्। तस्मादूर्ध्वभाविन एकारस्य तिङ्प्रत्ययस्वरूपस्य 'स्वरितात्संहितायामनुदात्तानाम्' (पा० १-२-३९) इत्यैकश्रुत्यं[22] प्रचयनामकं भवति। [23]'पुरःशब्दोऽन्तोदात्तः। 'अयं पुरो भुवः (तै० स० ४-३-२) इत्यत्र तथैवाम्नातत्वात्। 'पूर्वाधरावराणामसि

[21] तिङ्ङतिङः। अतिङ इति पञ्चमी। तिङन्तभिन्नात्पदात्परं विद्यमानं तिङन्तं पदं निहन्यते—सर्वानुदात्तं भवतीत्यर्थः। पदपाठेऽयं स्वरः। अग्निमिति पदमतिङन्तम्। तस्मात्परम् 'ईळे' इति पदं सर्वानुदात्तं भवति 'ईळे' इति। संहितापाठे तु नकारोत्तरवर्तिन इकारस्य य उदात्तस्वरः तस्मात्परं विद्यमानस्य ईकारानुदात्तस्य 'उदात्तादनुदात्तस्य स्वरितः' इति, तस्माच्च परं विद्यमानस्य ळकारोत्तरवर्त्यैकारानुदात्तस्य 'स्वरितात्संहितायामनुदात्तानाम्' इति सूत्राभ्यां स्वरितप्रचयौ भवतः। तथा सति 'अग्निमीळे' इति संहितास्वरस्सिध्यति। एवञ्च ईळे इत्यस्य पदस्य स्वरसञ्चारायैकं सूत्रमपेक्षितं भवति।

[22] ऐकश्रुत्यम्। 'उदात्तानुदात्तस्वरितानां परस्सन्निकर्ष ऐकश्रुत्यम्' (आ. श्व. श्रौ. १.२.७) इत्याश्वलायनेन ऐकश्रुत्यस्य लक्षणं कृतम्। उदात्तानुदात्तस्वरितानामभिव्यञ्जकाः प्रयत्नाः शिक्षाप्रातिशाख्यादिलक्षणग्रन्थेष्वभिहिताः—आयामः विस्रम्भः आक्षेपश्चेति। वायुनिमित्तं यच्छरीरस्योर्ध्वगमनं तदुदात्ताभिव्यञ्जकम् आयामशब्देनोच्यते। एवं यदधोगमनं वायुनिमित्तं शरीरस्य तदनुदात्ताभिव्यञ्जकं विस्रम्भपदवाच्यम्। एवमेव यत्तिर्यग्गमनं वायुनिमित्तं शरीरस्य तदाक्षेपपदवाच्यम्। एतेषां परस्परमत्यन्तं सन्निकर्षः-अव्यवधानरूपः तेन यदुच्चारणं तदैकश्रुत्यमित्यर्थः। उच्चारणैकसमधिगम्यमिदम्। लेखनावसरे तु – एतेषामभिव्यञ्जकानि चिन्हानि अनुदात्तस्य – इति वर्णस्याधस्तात्, स्वरितस्य। इति वर्णस्योपरिष्टात्, कस्यापि चिन्हस्याभाव उदात्तस्य प्रचयस्य चेति स्वीकृतानि ऋग्वेदे कृष्णयजुर्वेदे च। अस्यैवैकश्रुत्यस्य प्रचय इति नामान्तरं बोध्यम्।

[23] अयं पुरो भुवः। चयने दिग्भेदेनेष्टकानामुपधानविधानावसरे 'पुरस्तादुपदधाति' इति ब्राह्मणेन दशेष्टकानामुपधानं विहितम्। पुरः पूर्वस्यां दिशीत्यर्थः। तत्रायं भुवः जगत्कारणीभूतः प्रजापतिरस्तीति शेषपूरणेन मन्त्रो व्याख्यातस्सायणेन। अत्र पुर इत्यन्तोदात्तः पठ्यते। पुरोहितमिति पदं संसाध्य तत्र स्वरसञ्चारं दर्शयितुमुपक्रमते— पूर्वाधरेति। पूर्वाधरावराणां त्रयाणां शब्दानामसि प्रत्यये सति क्रमेण पुर् अध् अव् इत्यादेशा भवन्ति। पूर्व अस् इत्यत्र प्रकृतेः पुर् इत्यादेशे पुरस् पुरः इति सिध्यति। अत्र प्रत्ययस्वरे कृते पुर इति सम्पद्यते। धाञ् धातोः कर्मणि क्तप्रत्यये कृते धा क्त इति स्थिते 'दधातेर्हिः' इति ह्यादेशे जाते हित इति सम्पद्यते। अत्रापि प्रत्ययस्वरे सति हित इति भवति। द्वितीयाविवक्षायाममप्रत्ययः, तस्य पूर्वरूपैकादेशे जाते हितम् इति सिध्यति। पुरः हितम् पुरोहितमिति समासे कृते 'समासस्य' इति सूत्रेण समासान्तोदात्तो भवति। तथा सति पुरोहितम् इति स्वरा भवेयुः। तदपवादकेन

पुरश्चवस्चैषाम्' (पा० ५-३-३९) इति पूर्वशब्दादस्प्रत्ययः पुरादेशश्च। ततोऽत्र प्रत्ययस्वरः। धाञो निष्ठायां 'दधातेर्हिः' (पा० ७-४-४२) इति ह्यादेशे सति प्रत्ययस्वरेणान्तोदात्तो हितशब्दः। तत्र समासान्तोदात्तत्वे प्राप्ते तदपवादत्वेन 'तत्पुरुषे तुल्यार्थ०' (पा० ६-२-२) इत्यादिना अव्यय-पूर्वपदप्रकृतिस्वरत्वम्। यद्वा 'पुरोऽव्ययम्' (पा० १-४-६७) इति गतिसञ्ज्ञायां 'गतिरनन्तरः' (पा० ६-२-४९) इति पूर्वपदप्रकृतिस्वरत्वम्। तत ओकार उदात्तः। अवशिष्टानामनुदात्त-स्वरितप्रचयाः पूर्ववद्द्रष्टव्याः। आद्याक्षरस्य[24] संहितायां प्रचयप्राप्तौ 'उदात्तस्वरितपरस्य सन्नतरः' (पा० १-२-४०) इत्यतिनीचोऽनुदात्तः। यद्यपि पदकाले हितशब्दान्तर्गतस्येकारस्य स्वरितत्वं दुर्लभमुदात्तपरत्वाभावात्। 'मात्रा ह्रस्वस्तावदवग्रहान्तरमि'ति (प्रा० १-२७) प्रातिशाख्येऽव-सानविधानात्। अतएव तैत्तिरीया अनुदात्तमेवाधीयते। तथापि —

'यथा सन्धीयमानानामनेकीभवतां स्वरः।
उपदिष्टस्तथा विद्यादक्षराणामवग्रहे' (प्रा० ३-२४)॥

---

'तत्पुरुषे तुल्यार्थ-तृतीया-सप्तम्यु-पमाना-व्यय-द्वितीया-कृत्याः' इति सूत्रेण पूर्वपदभूतानां सप्ता-नामेतेषां तत्पुरुषे पूर्वपदप्रकृतिस्वरो विहितः। प्रकृते पूर्वं पदमव्ययम्, अतस्तत्प्रकृतिस्वर एव तिष्ठति — पुरोहितम् इति। अथवा—पुर इत्यस्य गतिसंज्ञायां 'गतिरनन्तरः' (क्तान्ते पदे परे सति गतिः प्रकृत्या भवति) इति पूर्वपदप्रकृतिस्वरः।

[24] आद्याक्षरस्य। संहितास्वरं प्रदर्शयति—आद्येति। पकारोत्तरवर्त्युकारस्य 'अग्निमीळे' इत्यनन्तरं संहितायां प्रचय एवावश्यकः, मकारोत्तरवर्तीकारस्य स्वरितत्वेन तदुत्तर-वर्तिनोऽनुदात्तस्य 'स्वरितात्संहितायामनुदात्तानाम्' इति विधानात्, किन्तु 'उदात्तस्वरितपरस्य सन्नतरः' इति सूत्रेणोदात्तपरस्यानुदात्तस्य पकारोत्तरवर्त्युकारस्यानुदात्ततरस्वर एव। तथाच 'अग्निमीळे पुरोहितं' इति संहितास्वराः। पदपाठकाले पुरोहितमित्यत्र पुरःऽहितमिति समास-गतयोः पदयोः प्रातिशाख्ये पृथक्करणरूपो मात्राकालो विहितः, स चावग्रहेण द्योत्यते। ह्रस्वा-क्षरस्यैका मात्रा, दीर्घस्य द्वे, प्लुतस्य तिस्र इति। तथा सति पुरः इत्यवसाने जाते हकारोत्तर-वर्तिन इकारस्योदात्तात्परतस्त्वं न सिध्यतीति स्वरितस्वरस्तत्र दुर्लभ इति शङ्कायास्समाधा-नम्—तथापीति। अवग्रहस्वरविधायकमिदं सूत्रं 'यथा सन्धीयमानाना'मिति। अवग्रहेऽक्षराणां तं स्वरं जानीयात् यश्च सन्धिमाप्नुवतामेकीक्रियमाणानाम् अनेकीभवतां प्रश्लेषमनाप्नुवतां स्वर उपदिष्टः। स च स्वरः—'उदात्तपूर्वं नियतं विवृत्या व्यञ्जनेन वा। स्वयंतेऽन्तर्हितम्' इति सूत्रेणोपदिष्टः। उदात्तः पूर्वो यस्मात् तत् उदात्तपूर्वमक्षरम् नियतमनुदात्तं विवृत्या व्यञ्जनेन वाऽन्तर्हितं स्वरितस्वरयुक्तं भवतीत्यर्थः। एवञ्चावग्रहे तादृशस्वरस्यातिदिष्टत्वात् हकारोत्तर-वर्तिन इकारस्य स्वरितत्वं निर्बाधमिति तात्पर्यम्।

इति प्रातिशाख्येऽतिदेशाद्विष्टसिद्धिः। 'यजयाच०'[25] (पा० ३-३-९०) इत्यादिना यजतेर्नङ्प्रत्यये सत्यन्तोदात्तो यज्ञशब्दः। विभक्तेः सुप्स्वरेणानुदात्तत्वे सति पश्चात्स्वरितत्वम्। देवशब्दः पचाद्यजन्तः। स च फिट्स्वरेण प्रत्ययस्वरेण चित्स्वरेण[26] चान्तोदात्तः। ऋत्विक्शब्द ऋतौ यजतीति विग्रहे सति 'ऋत्विग्दधृक्०' (पा० ३-२-५९) इति निपातितः[27]। 'गतिकारकोपपदात्कृत्' (पा० ६-२-१३९) इति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तः। विभक्तिस्वरः पूर्ववत्। होतृशब्दस्तृन्प्रत्ययान्तः। नित्स्वरेणाद्युदात्तः[28]। स्वरितप्रचयौ पूर्ववत्। रत्नशब्दो

---

[25] 'यज-याच-यत विछ-प्रच्छ-रक्षो नङ्' इति समग्रं सूत्रम्। यज्ञः, याच्ञा, यत्नः, विश्नः, प्रश्नः, रक्ष्णः इति रूपाणि भवन्ति।

[26] 'चितः' इति सूत्रेण चित्प्रत्ययान्तानामन्त उदात्तो विहितः।

[27] निपातितः। निपातनं नाम सिद्धरूपनिर्देशः। तेन सूत्रानुपदिष्टमपि कार्यं लभ्यते। ऋतौ उपपदे यज् धातोः क्विन् प्रत्ययः 'ऋत्विग्दधृक्स्रग्दिगुष्णिगञ्चुयुजिक्रुञ्चां च' इति सूत्रेण विहितः। तस्य कित्त्वात् 'वचिस्वपियजादीनाम्' इति सम्प्रसारणं 'क्विन्प्रत्ययस्य कुः' इति कुत्वञ्च। तथाच ऋत्विक् इति रूपं सिध्यति। ऋतौ यजतीति तस्य विग्रहः। तत्र 'गतिकारकोपपदात्कृत्' (एभ्यः कृदन्तं प्रकृतिस्वरं स्यात्तत्पुरुषे) इत्युत्तरपदप्रकृतिस्वरः। उत्तरपदञ्च धातुः। तस्य चान्तोदात्तस्वरः। तथाच ऋत्विक्, ऋत्विजौ, ऋत्विजः, ऋत्विजम् इति विभक्तिषु स्वरास्सिध्यन्ति। 'अग्निमीळे पुरोहितं' इत्यनन्तरं 'यज्ञस्य' इति पदस्य संहितायां नङ्प्रत्यय-सम्बन्धिनोऽक्षरस्योदात्तत्वाद्यकारोत्तरवर्त्यकारस्यानुदात्तस्वरः स्य इत्यकारस्य स्वरितस्वरः। तथा च 'अग्निमीळे पुरोहितं यज्ञस्य' इति स्थिते देवशब्दस्य चित्प्रत्ययान्तत्वादन्तोदात्तत्वे दकारोत्तरवर्तिन एकारस्यानुदात्तत्वम्, ऋत्विक् शब्दस्य चोत्तरपदप्रकृतिस्वरत्वादृकारस्यानुदात्तत्वे अग्निमीळे पुरोहितं यज्ञस्य देवमृत्विजम्' इति संहितास्वरास्सिध्यन्ति।

[28] नित्स्वरेण। 'ञ्नित्यादिर्नित्यम्' ('ञित् नित् प्रत्ययान्तानां शब्दानामादिरुदात्तो भवति) इति सूत्रेण होतृपदमाद्युदात्तम्। विभक्तिस्वरश्च पूर्ववत्। तथाच—होता होतारौ, होतारः, होतारं, होतारौ, होतॄन् इत्येवं विभक्तिषु स्वरा भवन्ति। 'होतारं' इत्यनन्तरं 'रत्नधातमम्' इत्यस्य संहितायां 'समासस्य' इति सूत्रेण धकारोत्तरवर्त्यकारस्योदात्तत्वे निश्चिते तत्पूर्वयोर्वर्णयोरनुदात्तस्वरः प्राप्तः। तत्र होतारमित्यत्र तकाराकारस्य स्वरितत्वात्स्वरितादनुदात्तानां प्रचयः संहितायां प्राप्नोति। तथा सत्युभयोरपि रेफयोरकारौ प्रचितौ भवतः। तथाच होतारं रत्नधातमम्' इति स्वरा भवन्ति।

प्रथममन्त्रगतपदानां स्वरसंसाधनाय मुख्यतः सप्तदशसूत्राणामावश्यकता भवति। अस्मिन् मन्त्रे पुरोहितपदस्य ऋत्विक्पदस्य च साधनमभ्यसितव्यम्।

' वयस्यानिसन्तस्य' (फि० २६) इत्याद्युदात्तः। तथाचाम्नायते रत्नं धातेति। रत्नानि दधातीति विग्रहः। समासत्वादन्तोदात्तो रत्नधाशब्दः। यद्वा कृदुत्तरपदप्रकृतिस्वरः। तमप्प्रत्ययस्य पित्स्वरेणानुदात्तत्वे सति स्वरितप्रचितौ। संहितायामाद्याक्षरस्य प्रचयो द्वितीयाक्षरस्य सन्नतरत्वम्।

वेदावतार आद्याया ऋचोऽर्थश्च प्रपञ्चितः।
विज्ञातं वेदगाम्भीर्यमथ सङ्क्षिप्य वर्ण्यते ॥१॥

आग्नेयसूक्तस्य द्वितीयामृचमाह। अयमग्निः पूर्वेभिः पुरातनैर्भृग्वङ्गिरःप्रभृतिभिर्ऋषिभिरीड्यः स्तुत्यो नूतनैरुतेदानीन्तनैरस्माभिरपि स्तुत्यः। सोऽग्निः स्तुतः सन्निह यज्ञे देवान्हविर्भुज आ वक्षति। वह प्रापण इति धातुः। आवहत्वित्यर्थः। पूर्वेभिरित्यत्र 'बहुलं छन्दसि' (पा० ७-१-१०) इति भिस ऐसादेशाभावः। पूर्व पर्व अर्व पूरणे इति धातुः। पूर्वति-धातोरच्प्रत्यय औणादिकः। इन्प्रत्ययान्त ऋषिशब्द 'ऋष्यन्धक०' (पा० ४-१-११४) इति निपातनाल्लघूपधगुणाभावः[29]। कित्प्रत्ययो वात्र ज्ञेयः। तौ शब्दौ नित्स्वरेणाद्युदात्तौ। ईड्यशब्दस्य[30] ण्यत्प्रत्ययान्तत्वात् 'तित्स्वरितम्' (पा० ६-१-१८५) इति स्वरिते शेषानुदात्तत्वे च प्राप्ते तदपवादत्वेन 'ईडवन्द०' (पा० ६-१-२१४) इत्यादिना आद्युदात्तत्वम्। 'नवस्य[31] नूत्नप्तनप्खाश्च' (पा० वा ५-४-३०) इति वार्तिकेन नवस्य नू इत्यादेशस्तनप्प्रत्ययश्च महावार्तिके विहितः। ततो नित्स्वरेणाद्युदात्तः। अवशिष्टस्वरा अग्न्यादिषु नूतनान्तेषु

---

[29] लघूपध०। ऋष्धातोः इन् प्रत्ययः। प्रत्ययनकारस्येत्संज्ञायां लोपे सति ऋष् इ इति स्थिते 'अलोऽन्त्यात्पूर्व उपधा' इत्यनेन (अन्त्यादलः पूर्वो वर्ण उपधासंज्ञः स्यात्) ऋ इत्यस्योपधासंज्ञायां 'पुगन्तलघूपधस्य च' इत्यनेन (पुक् अन्तो यस्य तस्य, लघ्वी उपधा यस्य तस्य चाङ्गस्य इको गुणस्यात्सार्वधातुकार्धधातुकयोः) गुणे प्राप्ते 'अर्षि' इति रूपं स्यात्। तस्याभावं प्रदर्शयति—लघूपधगुणाभाव इति। 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' इति सूत्रेण ऋषिशब्दस्य निपातनादिति। ऋषिशब्दस्य कित्प्रत्ययान्तत्वे 'क्ङिति च' इत्यनेन गुणाभावः। 'ञ्नित्यादिर्नित्यम्' इत्यनेन 'पूर्वेभिः' ऋषिभिः' इति पदद्वयमाद्युदात्तं भवति।

[30] ईड्यशब्दस्य। 'ईड स्तुतौ' इति धातोः ण्यत् प्रत्ययः। णकारतकारयोरित्संज्ञायां लोपे सति (ईड्यत्) ईड्य इति रूपं सिध्यति। अत्र 'तित्स्वरितम्' इत्यनेन यकारोत्तराकारस्य स्वरितस्वरे सति 'अनुदात्तं पदमेकवर्जम्' इत्यनेन ईकारस्यानुदात्तस्वरः प्राप्तः। ईड्यः इति जाते 'ईड-वन्द-वृ-शंस-दुहां ण्यतः' (ण्यत्प्रत्ययान्तानामेषामादिरुदात्तस्स्यात्) इति सूत्रेणाद्युदात्तः। तथा च ईड्यः, वन्द्यः, वार्यम्, शंस्यम्, दुह्या इत्येवं स्वरास्सिध्यन्ति।

[31] अनेन वार्तिकेन नवशब्दस्य नू इत्यादेशो नूत्नम् नूतनम्, नवीनमिति रूपाणि सिध्यन्ति तनन् प्रत्ययान्तत्वान्नित्स्वर आद्युदात्तः। 'नूतनैः' इति भवति।

पूर्ववदुन्नेयाः। उतशब्दो[32] यद्यपि विकल्पार्थे प्रसिद्धस्तथापि निपातत्वेनानेकार्थत्वादौचित्येनात्र समुच्चयार्थो द्रष्टव्यः। 'उच्चावचेष्वर्थेषु निपतन्ती'ति निपातत्वम्। तर्हि 'निपाता आद्युदात्ताः' (फि० ४-१२) इत्युकारस्योदात्तः प्राप्त इति चेन्न; प्रातःशब्दवदन्तोदात्तत्वात्। यथा प्रातःशब्दोऽन्तोदात्तत्वेन स्वरादिषु पठितः एवमुतशब्दस्यापि पाठो द्रष्टव्यः, स्वरादेराकृतिगणत्वात्। यद्वा 'एवादीनामन्तः' (फि० ४-१४) इत्यन्तोदात्तः। स इत्यत्र फिट्स्वरः। देवशब्दः पूर्ववत्। देवानित्यस्य नकारस्य संहितायां 'दीर्घादटि०'[33] (पा० ८-३-९) इति रुत्वम्। अत्र 'अनुनासिकः' (पा० ८-३-२) इत्यनुवृत्तौ 'आतोऽटि नित्यम्' (पा० ८-३-३) इत्याकारः सानुनासिकः। 'भोभगो०' (पा० ८-३-१७) इति रोर्यकारः। स च 'लोपः शाकल्यस्य' (पा० ८-३-१९) इति लुप्यते। तस्यासिद्धत्वान्न पुनः सन्धिकार्यम्। आङो निपातत्वादाद्युदात्तत्वम्। इदमो हप्रत्यये सति निष्पन्नत्वाद् इहशब्दे प्रत्ययस्वरः। वहतिधातोर्लोडर्थे छान्दसो लृट्। तत्र स्यप्रत्ययगतस्य[34] यकारस्य लोपोऽपि छान्दसः। यद्वा लेटि 'सिब्बहुलम्०' (पा० ३-१-३४) इति सिप्प्रत्ययः। 'लेटोऽडाटौ' (पा० ३-४-९४) इत्यडागमश्च। ततो वक्षतीति सम्पद्यते। तस्य तिङन्तत्वान्निघातः। संहितास्वराः पूर्ववत्॥२॥

---

[32] उतशब्दस्य निपातत्वेन 'उच्चावचेष्वर्थेषु निपतन्ति' इति यास्कवचनात्समुच्चयार्थकत्वमपि भवितुमर्हति। यद्यपि 'निपाता आद्युदात्ताः' इति आद्युदात्तत्वमस्य प्राप्तम्, तथापि स्वरादिगणपाठमस्याङ्गीकृत्य लक्ष्यानुसारेणान्तोदात्तत्वमेव। तथाच 'उत' इति स्वरसिद्धिः। अथवा 'एवादीनामन्त उदात्तः' इत्यन्तोदात्तत्वं साधनीयम्।

[33] 'दीर्घादटि समानपादे' (दीर्घात्परं विद्यमानस्य नकारस्य समानपादे रुर्वा स्यादटि परे) इति सूत्रेण 'देवान्' इत्यत्र नकारस्य रुत्वम्, 'आतोऽटि नित्यम्' इत्यनेन वकारोत्तराकारस्यानुनासिकत्वम्, 'भोभगो अघो अपूर्वस्य योऽशि' इत्यनेनापूर्वस्य रोः यादेशः, देवाँय् इति स्थिते 'लोपश्शाकल्यस्य' इति तल्लोपः। तथाच देवाँ इति संहितायां रूपम्। पदपाठे तु देवान् इति चित्स्वादन्तोदात्तः।

[34] स्यप्रत्ययगतस्य। 'स्य तासी लृलुटोः' इति सूत्रेण लृटि धातोः स्यप्रत्ययो विहितः। तद्गतस्य यकारस्य लोपश्छान्दसः। वह् स्यति इत्यत्र 'होढः' इति सूत्रेण हकारस्य ढः तस्य 'षढोः कस्सि' इति सूत्रेण कः, 'इण्कोः' इत्यधिकारे 'आदेशप्रत्यययोः' इति षत्वञ्च। यकारलोपे सति वक्षति इति रूपसिद्धिः। लेट्लकाराङ्गीकारे सिपि अडागमे च सति वक्षति इति रूपसिद्धिः।

पूर्वमन्त्रापेक्षयाऽस्मिन्मन्त्रे स्वरसञ्चाराय चत्वारि सूत्राणि नूतनानि। संहितास्वरास्तु—अग्निपदमन्तोदात्तम्, अतः पूर्वस्याकारस्यानुदात्तस्वरः। पूर्वेभिरिति नित्प्रत्ययान्तत्वादाद्युदात्तत्वे पकारोत्तरवर्त्यूकार उदात्तः, ततः परस्याक्षरस्य स्वरितः, ऋषिभिरित्यस्य नित्प्रत्ययान्तत्वादाद्युदात्तत्वे ऋकार उदात्तः, ततः पूर्वस्य भकारोत्तरवर्तीकारस्यानुदात्तस्वरः, एवमेव ईड्यशब्दस्याद्युदात्तत्वात् ततः पूर्वस्य वर्णस्यानुदात्तस्वरः, एवं नूतनशब्दस्य नित्वादाद्युदात्तत्वे

आधाने[85] तृतीयेष्टौ प्रथमाज्यभागस्यानुवाक्या सूक्तगता तृतीया। तां तृतीयामृचमाह। योऽयं होत्रा स्तुत्योऽग्निस्तेनाग्निना निमित्तभूतेन यजमानो रयिं धनमश्नवत्—प्राप्नोति। कीदृशं रयिम्? दिवेदिवे पोषमेव—प्रतिदिनं पुष्यमाणतया वर्द्धमानमेव, न तु कदाचिदपि क्षीयमाणम्। यशसम्—दानादिना यशोयुक्तम्। वीरवत्तमम्—अतिशयेन पुत्रभृत्यादिवीरपुरुषोपेतम्। सति हि धने पुरुषाः सम्पद्यन्ते। रयिशब्दो मघमित्यादिधननामसु (निघ० २-१०) पठितः। तत्र फिट्स्वरः। अश्नोतेर्धातोर्लेटि व्यत्ययेन तिप्। 'इतश्च लोपः०' (पा० ३-४-९७) इतीकारलोपः। 'लेटोऽडाटौ' (पा० ३-४-९४) इत्यडागमः।

---

ततः पूर्वस्यानुदात्तस्वरः, एवम् उतशब्दस्यान्तोदात्तत्वात्तत्पूर्ववर्णस्यानुदात्तस्वरः। तथाच—अग्निः पूर्वेभिर्ऋषिभिरीड्यो नूतनैरुत इति सिध्यन्ति। तृतीयपादे स इत्यस्य फिट्स्वरः, देवाँ इत्यस्यान्तोदात्तत्वात्तत्पूर्वौ वर्णावनुदात्तः, आ इत्यस्य निपातस्वर उदात्तः, 'इह' इत्यत्र ह्प्रत्ययस्वरस्योदात्तत्वात्तत्पूर्वस्यानुदात्तत्वेऽपि 'आ' इत्यनेनोदात्तस्वरवता 'इ' इत्यस्य 'आद्गुण' इत्येकादेशे 'एकादेश उदात्तेनोदात्तः' इत्युदात्त एव भवति। वक्षति इत्यस्य तिङन्तनिघातस्वरे सति इह इत्यत्र हकारस्योदात्तत्वात् वकारानुदात्तस्य स्वरितः, तदूर्ध्ववर्तिनोरनुदात्तयोः प्रचयः। तथाच 'स देवाँ एह वक्षति' इति स्वराः।

[85] आधाने तृतीयेष्टौ। आधानस्य स्थूलं स्वरूपं पूर्वं निरूपितम्। तत्र पवमानेष्टयोऽपि तिस्रः प्रतिपादिताः। तासु 'अग्नये शुचये' इति या तृतीयेष्टिस्तस्यामित्यर्थः। ओषधिप्रभवैर्द्रव्यैर्व्रीहियवादिभिः दध्यामिक्षापयोभिर्वाऽनुष्ठीयमाना यागा इष्टय इत्युच्यन्ते। सर्वासामिष्टीनां प्रकृतिः दर्शपूर्णमासौ। यत्र पुष्कलाङ्गानामुपदेशस्तत्र प्रकृतिरिति व्यवहारः। दर्शपूर्णमासप्रकरणे तदपेक्षितानां सर्वेषामङ्गानामाम्नानमस्तीति तयोः प्रकृतित्वम्। विकृतियागेषु विधिवाक्यैर्द्रव्यमुपदिश्यते देवता च। क्वचिन्नूतनान्यङ्गान्यपि विधिवाक्यैर्विधीयन्ते, यानि प्रकृतौ न श्रुतानि। तत्र दर्शपूर्णमासयोः 'आज्यभागौ यजति' इति विधिना द्वावाज्यभागसंज्ञकौ यागावङ्गत्वेन विहितौ। प्रथमाज्यभागस्याग्निर्देवता, द्वितीयस्य च सोमः। आज्यमनयोर्यागयोर्द्रव्यं भवति। पौर्णमास्यां द्वावाज्यभागौ दर्शे च द्वावाज्यभागौ। तत्र पौर्णमास्यां प्रथमाज्यभागस्य 'अग्निर्वृत्राणि जङ्घनत्' इति पुरोनुवाक्या, द्वितीयस्य च 'त्वं सोमासि सत्पतिः' इति मन्त्रः। प्रथमाज्यभागस्य याज्यामन्त्रः—'जुषाणो अग्निराज्यस्य वेतु' इति, द्वितीयस्य च 'जुषाणः सोम आज्यस्य हविषो वेतु' इति। दर्शे प्रथमाज्यभागस्य पुरोनुवाक्या 'अग्निः प्रत्नेन मन्मना' इति, द्वितीयस्य च 'सोम गीर्भिष्ट्वा वयम्' इति। याज्यामन्त्रौ तु तावेव भवतः यौ पौर्णमास्यां विहितौ। इमावाज्यभागौ समन्त्रकौ तृतीयपवमानेष्टावतिदेशेन प्राप्तौ। तत्र प्राकृताज्यभागमन्त्रयोः स्थाने 'पुष्टिमन्तौ अग्निना रयिमश्नवत्, गयस्फानो अमीवहा' इति सूत्रयन्नाश्वलायनः (आश्व. श्रौ. २.१.) पुष्टिमच्छब्दघटितौ मन्त्रौ विधत्ते। 'अग्निना रयिम्' इति मन्त्रे 'पोषम्' इति 'गयस्फान' इति मन्त्रे 'पुष्टि' इति पुषधातुघटितत्वमस्तीत्यनयोः पुष्टिमच्छब्देन व्यवहारः। एवञ्च तृतीयपवमानेष्टौ प्रथमाज्यभागस्य 'अग्निना रयिमश्नवत्' इति मन्त्रः पुरोनुवाक्येति सिद्धम्।

ततोऽन्नवदिति भवति। तस्य निघातः। घञन्तत्वात्[36] पोषशब्द आद्युदात्तः। एवशब्दस्य निपातत्वेऽपि 'एवादीनामन्तः' (फि० ४-१४) इत्यन्तोदात्तत्वम्। वकारान्ताद्दिवशब्दात्परस्याः[37] सप्तम्याः 'सुपां सुलुक्०' (पा० ७-१-३९) इत्यादिना शेभावे सति 'सावेकाचः०' (पा० ६-१-१६८) इत्यादिना 'ऊडिदंपदादि०' (पा० ६-१-१७१) इत्यादिना वा तस्योदात्तत्वम्। 'नित्यवीप्सयोः' (पा० ८-१-४) इति द्विर्भावे सत्युत्तरभागस्य 'अनुदात्तं च' (पा० ८-१-३) इत्यनुदात्तत्वम्। यशोऽस्यास्तीति विग्रहे सति 'अर्श आदिभ्योऽच्' (पा० ५-२-१२७) इत्यच्प्रत्ययः। चित्स्वरं व्यत्ययेन बाधित्वा मध्योदात्तत्वम्। फिट्स्वरेणान्तोदात्ताद्वीरशब्दादुत्तरयोर्मतुप्तमपोः पित्वादनुदात्तत्वम्। 'ह्रस्वनुड्भ्याम्०'[38] (पा० ६-१-१७६) इति तु न, सावर्णान्तत्वात् 'न गोश्वन्' (पा० ६-१-१८२) इति प्रतिषेधः ॥३॥

अभिप्लवषडहस्य[39] मध्यवर्तिषूक्थ्येषु तृतीयसवने मैत्रावरुणस्य 'अग्ने यं यज्ञम्' इत्यादिको वैकल्पिकोऽनुरूपस्तृचः। एतच्च सप्तमाध्याये एह्यू षु इत्यादिखण्डे सूत्रितम्—'अग्निं वो

---

36 'ञ्नित्यादिर्नित्यम्' इति सूत्रेणाद्युदात्तस्वरः।

37 सप्तम्येकवचने वकारान्तस्य दिव्शब्दस्य 'दिवि' इति रूपम्। 'सुपां सु-लुक्-पूर्वसवर्ण-आ-आत्-शे-या-डा-ड्या-याच्-आलः' इति सूत्रेण सप्तम्याः शे भावे दिव् ए-दिवे इति रूपं भवति। तस्य 'नित्यवीप्सयोः' इति द्विर्भावः। दिवे दिवे इति भवति। 'अनुदात्तञ्च' इत्यनेन द्वितीयस्यानुदात्तस्वरः–दिवे दिवे इति सम्पद्यते। 'सावेकाचस्तृतीयादिर्विभक्तिः' (सौ सप्तमीबहुवचने यश्शब्द एकाच्कः तस्य तृतीयादिर्विभक्तिः उदात्ता भवति) इति सूत्रेण सप्तमीविभक्तेरुदात्तस्वरः। दिवे दिव इति स्थिते उदात्तादनुदात्तस्य स्वरितः, ततः परस्यानुदात्तस्य प्रचयः—दिवे दिवे इति सिध्यति। सप्तमीबहुवचने एकाच्काः शब्दाः गोधीप्रभृतय उन्नेतव्याः। अथवा 'ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः' इति सूत्रेण विभक्तेरुदात्तस्वरः।

38 वीरवत्तमम् इत्यत्र वीरशब्दान्मतुप् तमपौ। तयोः पित्वादनुदात्तस्वरः। वीरशब्दस्य प्रातिपदिकस्वरः। एवं सति वीरवत्तमम् इति स्वरस्सिध्यति। अत्र शङ्कते—'ह्रस्वनुड्भ्यां मतुप्' (ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तः) इति सूत्रेण मतुप उदात्तस्वरः प्राप्नोतीति। नेति निरस्यति– 'न गो-श्वन्-सावर्ण-राडङ् क्रुङ् कृद्भ्यश्च' इति सूत्रेण मतुप उदात्तस्वरो न भवति। अत्र सौ-प्रथमैकवचने अवर्णान्तात् शब्दात्परतो विद्यमानो मतुप् उदात्तो न भवतीति प्रतिषेधात्। वीरशब्दः प्रथमैकवचनेऽवर्णान्तः।

चत्वारि सूत्राणि पूर्वापेक्षया नूतनानि सन्ति। 'वक्षति, दिवे दिवे' इतिपदद्वयस्य साधनमभ्यसनीयम्। संहितास्वरसञ्चाराय दृष्टिर्देया।

39 अभिप्लवषडहस्य। आश्वलायनश्रौतसूत्रे सप्तमाध्यायस्य सप्तमखण्डे 'अभिप्लवः षडहः, तस्याग्निष्टोमावभितः उक्थ्या मध्ये, उक्थ्येषु स्तोत्रियानुरूपाः, मैत्रावरुणस्य' इति सूत्रयित्वा 'एह्यू षु ब्रवाणि ते, अग्निरागामि भारतः' इत्यादिना दश स्तोत्रियानुरूपयुगलानि प्रदर्शयत्याश्वलायनः। तेषु युगलेषु चतुर्थं युगलम्–'अग्निं वो वृधन्तम् अग्ने यं यज्ञमध्वरम्'

**वृधन्तम्, अग्ने यं यज्ञमध्वरम्' (आ० ७-८) इति। तस्मिंस्तृचे या प्रथमा सा सूक्ते चतुर्थी। तामेतां चतुर्थीमृचमाह। हे अग्ने त्वं यं यज्ञं विश्वतः—सर्वासु दिक्षु, परिभूः—परितः प्राप्तवानसि, स इत्—स एव यज्ञो देवेषु तृप्तिं प्रणेतुं स्वर्गं गच्छति। प्राच्यादिचतुर्दिगन्तेष्वाहवनीयमार्जालीय-**

---

इति। षड्भिरहोभिस्साध्यस्सोमयागः षडहशब्देन व्यवह्रियते। अभितः प्लवते यः षडहः सोऽभिप्लवषडहः। स च गवामयने संवत्सरसाध्ये सत्रे प्रतिमासं कर्तव्यत्वेन विहितः। अस्य विवरणमुपरिष्टात्करिष्यते। तस्मिन् षडहे प्रथममन्तिमञ्च दिनमग्निष्टोमसंस्थाकम्, मध्ये चत्वारि दिनानि उक्थ्यसंस्थाकानि। संस्थाशब्दस्य समाप्तिरर्थः। अग्निष्टोमस्तोत्रेण यस्य क्रतोस्समाप्तिः स क्रतुरग्निष्टोमसंस्थाको भवति। उक्थ्यस्तोत्रैः यस्य समाप्तिः स उक्थ्य-संस्थाक इत्युच्यते। अभिप्लवषडहे प्रथमेऽन्तिमे च दिनेऽग्निष्टोमसंस्थाकः क्रतुरनुष्ठीयते, मध्य-वर्तिषु चतुर्षु दिनेषु उक्थ्यसंस्थाकाः क्रतवोऽनुष्ठीयन्ते। उक्थ्यशब्दस्य स्तोत्रविशेषे शस्त्रविशेषे, संस्थायां, तत्संस्थाकक्रतौ, ग्रहे च प्रयोगा भवन्ति। सन्दर्भानुसारमर्थो निर्णेतव्यो भवति। 'उक्थ्यं गृह्णाति' इत्युक्ते ग्रहः। 'उक्थ्यं स्तुवीत' इत्युक्ते स्तोत्रम्, 'उक्थ्यं शंसति' इत्युक्ते शस्त्रम्, 'उक्थ्यः क्रतुः' इत्युक्ते संस्था, तत्संस्थाकक्रतुश्च बुध्यते। प्रकृते 'उक्थ्येषु' इत्यस्य तत्संज्ञकशस्त्रे-ष्वित्यर्थः। उक्थ्यसंस्थायां त्रीणि स्तोत्राणि तावन्त्येव च शस्त्राणि सन्ति। तत्र शस्त्रेषु मैत्रा-वरुणोक्थ्यं, ब्राह्मणाच्छंस्युक्थ्यं, अच्छावाकोक्थ्यमिति विभागः। शस्त्रकर्तार ऋत्विजश्चत्वारः—होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, अच्छावाकश्चेति। तन्नाम्नैव शस्त्राणां व्यवहारो भवति। सोमयागे प्रातस्सवनं माध्यन्दिनं सवनं तृतीयसवनं (सायंसवनम्) इति त्रीणि सवनानि भवन्ति। प्रतिसवनं सोमाभिषवः, ग्रहाणां चमसानाञ्च ग्रहणं, स्तोत्राणि शस्त्राणि च पृथक्पृथग्भवन्ति। षुञ् अभिषवे धातोर्ल्युट्प्रत्ययान्तस्सवनशब्दः। तच्च सवनं प्रातरादिषु त्रिषु कालेषु कर्तव्यं भवति। तत्र स्तोत्रकर्तारश्च त्रयः—उद्गाता प्रतिहर्ता प्रस्तोता चेति। 'एकं साम तृचे क्रियते स्तोत्रीयम्' इति विध्यनुसारं किमपि साम तृचे—ऋक्त्रये यदि गीयेत तर्हि एकं स्तोत्रीयमिति परिगण्यते। ताण्ड्यमहाब्राह्मणे द्वादशाध्याये द्वादशखण्डे उक्थ्यस्तोत्राणां त्रीणि सामानि विहि-तानि—'सैन्धुक्षितम्' 'सौभरम्' 'वसिष्ठस्य प्रियम्' इति। त्रयाणामपि गानाय त्रयस्तृचा अपि तत्रैव विहिताः। तत्र प्रथमस्तृचः—'अग्निं वो वृधन्तमि'ति। द्वितीयः-'वयमु त्वामपूर्व्य' इति। तृतीयश्च—'इममिन्द्र सुतं पिब' इति। इम एव तृचाः क्रमेण मैत्रावरुण-ब्राह्मणाच्छंस्यच्छावाक-कर्तृकशस्त्रेषु स्तोत्रियत्वेनापि तत्रैव ताण्ड्यमहाब्राह्मणे विनियुक्ताः। तेनेदं ज्ञायते—यदुद्गातारो यस्मिंस्तृचे प्रथमं गानं कुर्युः स एव तृचः शस्त्रेऽपि स्तोत्रियत्वेन विनियुज्यत इति। अतएवाश्वलायनः— मैत्रावरुणशस्त्रे 'अग्निं वो वृधन्तम् अग्ने यं यज्ञमध्वरम्' इति, ब्राह्मणाच्छं-सिशस्त्रे 'वयमु त्वामपूर्व्य, यो न इदमिदं पुरा' इति, अच्छावाकशस्त्रे-'इममिन्द्र सुतं पिब, यदिन्द्र चित्रमेहना' इति च तृचयुगलानि प्रदर्शयन् बोधयति—यत्प्रतियुगलं प्रथमप्रतीकगृहीतस्तृचः स्तोत्रियः, द्वितीयप्रतीकगृहीतश्च तृचोऽनुरूप इति। स्तोत्रियानुरूपयोस्स्वरूपं स्वयमाश्वलायनो वदति— 'तेषां यस्मिन्स्तुवीरन् स स्तोत्रियः, यस्मिञ्छंसेयुः सोऽनुरूपः' (आश्व० श्रौ. ७.२.) इति। अनयोस्सूत्रयोरयमर्थः—षडहस्तोत्रियाणां मध्ये 'यस्मिन्' तृचे उद्गातारः 'स्तुवीरन्' सामगानं कुर्युः, 'सः' तृचः 'तेषां' शस्त्रकर्तृणां 'स्तोत्रियः' प्रथमस्तृचः। 'श्वः' षडहे परेद्युः

गार्हपत्याग्नीध्रीयस्थानेष्वग्निरस्ति।[40]परिशब्देन होत्रीयादिधिष्ण्यव्याप्तिर्विवक्षिता। कीदृशं यज्ञम्? अध्वरम्—हिंसारहितम्। न ह्यग्निना सर्वतः पालितं यज्ञं राक्षसादयो हिंसितुं प्रभवन्ति। अग्निशब्दस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम्।[41] न विद्यते ध्वरोऽस्येति बहुव्रीहौ[42] 'नञ्सुभ्याम्' (पा० ६-२-१७२) इत्यन्तोदात्तत्वम्। विश्वत इत्यत्र तसिलः प्रत्ययस्वरत्वं बाधित्वा पूर्ववर्णस्य[43] 'लिति' (पा० ६-१-१९३) इत्युदात्तत्वम्। परिभूरित्यत्राव्ययपूर्वपद-प्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन कृदुत्तरपदप्रकृतिस्वरत्वम्। असीति[44] तिङन्तस्य 'यद्वृत्तान्नित्यम्' (पा० ८-१-६६) इति निघाताभावः ॥४॥

---

यस्मिंस्तृचे स्तुवीरन् स तृचः होत्रकाणामनुरूपः द्वितीयस्तृच इति। एवञ्च प्रकृतविनियोग-वाक्यस्यायमर्थः—'अभिप्लवषडहस्य' गवामयनेऽभितः प्लवमानस्य षडहसाध्यसोमयागस्य, 'मध्य-वर्तिषूक्थ्येषु' द्वितीयादिपञ्चमदिनेषु कर्तव्यत्वेन विहितेषु शस्त्रेषु तृतीयसवने मैत्रावरुण-कर्तृकं यच्छस्त्रं तस्य 'अग्ने यं यज्ञम्' इत्यादिस्तृचोऽनुरूपः—द्वितीयतया शंसनीयः। सोऽपि विकल्प इति।

[40] सौमिकवेदेः प्राच्यां दिशि आहवनीयः, दक्षिणस्यां दिशि मार्जालीयः, पश्चिमायां गार्हपत्यः, उत्तरस्यां दिशि-आग्नीध्रीय इति चत्वारोऽग्नयोऽवस्थाप्यन्ते। एवं तत्रैव सदोनामके मण्डपे—अच्छावाकः नेष्टा पोता ब्राह्मणाच्छंसी होता मैत्रावरुणश्चेति ऋत्विजः पूर्वाभिमुखा उपविश्य शस्त्रादिमन्त्रपाठं कुर्युः। तेषां पुरतो धिष्ण्याः कल्पिता भवन्ति, यत्र चाग्नयः स्थापिता भवन्ति।

[41] अष्टाध्याय्यां षष्ठेऽष्टमे चाध्याययोः 'आमन्त्रितस्य च' इति सूत्रपाठो वर्तते। तत्र षाष्ठिकसूत्रं सम्बुध्यन्तपदस्याद्युदात्तविधायकम् आष्टमिकञ्च सूत्रं तस्य निघातविधाय-कम्। पादादौ विद्यमानं सम्बुध्यन्तं पदं न निहन्यते, किन्तु तस्याद्युदात्त एव। पदात्परस्या-पादादौ स्थितस्यामन्त्रितस्य सर्वानुदात्तः।

[42] नास्ति ध्वरो यस्येति बहुव्रीहिसमासे 'बहुव्रीहौ पूर्वपदं प्रकृत्या' (बहुव्रीहौ पूर्व-पदप्रकृतिस्वरो भवति) इति पूर्वपदप्रकृतिस्वरः प्राप्तः। समासात्पूर्वं पूर्वपदस्य यः स्वरः स एव समासानन्तरमपि स्थास्यतीत्यर्थः। अत्र पूर्वं पदं नञ्। तस्य निपातत्वादाद्युदात्तः प्राप्तः। 'अध्वरम्' इति सम्पन्नः। तस्येदं बाधकं सूत्रम् 'नञ्सुभ्याम्' इति। नञा सु इत्यनेन सह बहुव्रीहिसमासे सति उत्तरपदान्तोदात्तो भवतीति तदर्थः। तथाच अध्वरम् इति सम्पद्यते।

[43] 'लिति'। लकार इत् यस्य सो लित्। लित्प्रत्ययान्ते शब्दे प्रत्ययात्पूर्वो वर्ण उदात्तो भवतीति तस्यार्थः। 'विश्वतः' इत्यत्र विश्वशब्दात्तसिल् प्रत्यये सति प्रत्ययाद्यु-दात्तस्वरं बाधित्वा प्रत्ययात्पूर्ववर्णस्योदात्तस्वरो विहितः। तथाच विश्वतः इति सम्पद्यते।

[44] 'तिङ्ङतिङः' इति निघातस्वरस्य बाधकमिदम्— 'यद्वृत्तान्नित्यम्' इति। यच्छब्दात्परं तिङन्तं न निहन्यते इति तदर्थः। अतो धातुस्वर एवास्य। तिङ्ङतिङः' इत्यस्य 'हि च' 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण् कच्चिद्यत्रयुक्तम्' 'यावद्यथाभ्याम्' 'तु-पश्य-पश्यता-हैः पूजायाम्' 'अहोच' 'चादिषु च' 'चवायोगे प्रथमा' इत्यादीनि बाधकान्यवगन्तव्यानि।

पञ्चमीमृचमाह। अयमग्निर्देवोऽन्यैर्देवैर्हविर्भोजिभिः सहागमत्—अस्मिन्यज्ञे समागच्छतु। कीदृशोऽग्निः? होता—होमनिष्पादकः। कविक्रतुः—कविशब्दोऽत्र क्रान्तवचनो न तु मेधाविनाम। क्रतुः प्रज्ञानस्य कर्मणो वा नाम। ततः क्रान्तप्रज्ञः क्रान्तकर्मा वा। सत्यः—अनृतरहितः। फलमवश्यं प्रयच्छतीत्यर्थः। चित्रश्रवस्तमः—श्रूयत इति श्रवः कीर्तिः अतिशयेन विविधकीर्तियुक्तः। कविक्रतुश्चित्रश्रवस्तम इत्यत्रोभयत्र बहुव्रीहित्वात्पूर्वपदप्रकृतिस्वरत्वम्। सत्सु साधुः सत्यः। 'सत्यादशपथे' (पा० ५-४-६६) इत्यत्रान्तोदात्तो हरदत्तेन निपातितः। लोडन्तस्य गच्छत्विति शब्दस्य छत्वाभाव[45] उकारलोपश्छान्दसः। ततो रूपं गमदिति भवति। स्पष्टमन्यत् ॥५॥

प्रथमाष्टकस्य प्रथमाध्याये प्रथमो वर्गः।

आग्नेयसूक्ते षष्ठीमृचमाह। अङ्गेत्यभिमुखीकरणार्थो निपातः। अङ्गाग्ने-हे अग्ने त्वं दाशुषे हविर्दत्तवते यजमानाय तत्प्रीत्यर्थं यद्भद्रं वित्तगृहप्रजापशुरूपं कल्याणं करिष्यसि तद्भद्रं तवेत्—तवैव। सुखहेतुरिति शेषः। हे अङ्गिरः-अग्ने। एतच्च सत्यं न त्वत्र विसंवादोऽस्ति। यजमानस्य वित्तादिसम्पत्तौ सत्यामुत्तरक्रत्वनुष्ठानेनाग्नेरेव सुखं भवति। भद्रशब्दार्थं शाट्यायनिनः समामनन्ति—'यद्वै पुरुषस्य वित्तं तद्भद्रं गृहा भद्रं प्रजा भद्रं पशवो भद्रमि'ति। अङ्गशब्दस्य निपातत्वेऽपि अभ्यादित्वादन्तोदात्तत्वम्। 'दाश्वान्साह्वान्०' (पा० ६-१-१२) इति सूत्रेण दाशृ दाने इति धातोः क्वसुप्रत्ययो निपातितः। तत्र प्रत्ययस्वरः। आमन्त्रितस्याग्निशब्दस्य पदात्परत्वेनाष्टमिकानुदात्तत्वं न शङ्कनीयम्, '०अपादादौ'[46] (पा० ८-१-१८) इति पर्युदस्तत्वात्। ततः षाष्ठिकमाद्युदात्तत्वमेव। भद्रशब्दस्य नब्विषयत्वेन आद्युदात्तत्वप्रसक्तावपि भदि कल्याण इति धातोरुपरि रक्प्रत्ययेन निपातनादन्तोदात्तत्वम्। अस्मिन्वाक्ये यच्छब्दप्रयोगात् 'निपातैर्यद्यदि हन्त'० (पा० ८-१-३०) इति निघाते प्रतिषिद्धे स्यप्रत्ययस्वरेण सति शिष्टेन करिष्यसिशब्द उपान्त्योदात्तः। तवेत्यत्र [47]'युष्मदस्मदोर्ङसि' (पा० ६-१-२११) इत्याद्युदात्तत्वम्। 'अङ्गिरा[48] अङ्गाराः' (नि० ३-१७) इति यास्कः। ऐतरेयिणोऽपि प्रजापतिदुहितृध्यानोपाख्याने समामनन्ति 'येऽङ्गारा आसंस्तेऽङ्गिरसोऽभवन्निति' (ऐ० ब्रा० ३-३४)। तस्मादङ्गिरोनामकमुनिकारणत्वादङ्गाररूपस्याग्नेरङ्गिरस्त्वम्। अत्र पदात्परत्वेनाष्टमिकानुदात्तत्वम् ॥६॥

---

पूर्वापेक्षया चत्वारि सूत्राणि नूतनानि द्रष्टव्यानि। संहितास्वरोऽप्यभ्यसनीयः।

[45] 'इषु गमि यमां छः' इति सूत्रेण छत्वम् 'एङः' इत्यनेन उत्वञ्च न भवत इत्यर्थः। स्वरास्तु पूर्ववदेव।

[46] अस्य विवरणं [43]टिप्पण्यां कृतम्। तत्तत एवावगन्तव्यम्।

[47] 'युष्मदस्मदोर्ङसि' युष्मदस्मच्छब्दयोः षष्ठ्येकवचने 'तव' 'मम' इत्यत्रादिरुदात्तस्स्यादित्यर्थः। तव मम इति स्वरसिद्धिः।

[48] अङ्गिरा अङ्गाराः। अगि धातोरौणादिक इरसुन् प्रत्ययः। अग्नेरर्चिषि शान्ते सति योऽङ्गारेषु सम्बभूव सोऽङ्गिरा नामाभवत। अस्यैवोपष्टम्भकमिदं ब्राह्मणम्—'येऽङ्गारा' इति।

अस्मिन्मन्त्रे पदानां स्वरसञ्चारार्थमेकमेव नूतनं सूत्रम्।

अग्नीषोमप्रणयने[49] 'उप त्वाग्ने' इत्यादिकोऽनुवचनीयस्तृचः। एतच्च ब्राह्मणे समाम्नातम् 'उप त्वाग्ने दिवेदिव उपप्रियं पनिप्नतमि'ति तिस्रश्चैकाञ्चान्वाह' इति (ऐ० ब्रा० १-३०)। तस्मिंस्तृचे या प्रथमा सा सूक्ते सप्तमी। तामेतां सप्तमीमृचमाह—हे अग्ने वयमनुष्ठातारो दिवेदिवे—प्रतिदिनं, दोषावस्तः—रात्रावहनि च, धिया—बुद्ध्या नमो भरन्तो—नमस्कारं सम्पादयन्तः, उप समीपे, त्वा एमसि—त्वामागच्छामः। उपशब्दस्य निपातस्वरः। [50]'त्वामौ द्वितीयायाः' (पा० ८-१-२३) इति युष्मच्छब्दस्यानुदात्तस्त्वादेशः। दोषाशब्दो रात्रिवाची। वस्तरित्यहर्वाची। द्वन्द्वसमासे कार्तकौजपादित्वादाद्युदात्तः। 'सावेकाचः०'[51] (पा० ६-१-१६८) इति धियो विभक्तिरुदात्ता। नम इति निपातः। भरन्त इत्यत्र शपः पित्वात् [52]शतुर्लसार्वधातुकत्वाच्चानुदात्तत्वे सति धातुस्वरः शिष्यते। इमसीत्यत्र 'इदन्तो मसिः' (पा० ७-१-४६) इत्यादेशो निघातश्च ॥७॥

---

[49] अग्नीषोमप्रणयने। ज्योतिष्टोमयागः पञ्चदिनसाध्यः। प्रथमतः तृतीयदिनपर्यन्तं यानि कर्माणि दीक्षणीया-प्रायणीया-आतिथ्या-प्रवर्ग्यादीनि क्रियन्ते तानि प्राग्वंशशालायां भवन्ति। वंशैरियं शाला निर्मातव्या भवति। तत्र वंशानामग्रभागास्सर्वेऽपि प्राच्यां दिशि यथा भवेयुस्तथा सम्पादनीयाः। अत इयं प्राग्वंशशालेत्युच्यते। अत्र दार्शिक्यामेव वेद्यां सर्वकर्मणामनुष्ठानम्। चतुर्थदिनेऽग्नीषोमीयः पशुयागोऽनुष्ठीयते। 'अग्नीषोमीयं पशुमालभेत' इत्यस्योत्पत्तिवाक्यम्। 'पशुना यजेत' इति वा। अत्राग्नीषोमौ देवते पशुश्च द्रव्यम्। वेदे यत्र यत्र पशुशब्दः तत्र तत्र सः छागवाची भवतीति जैमिनिना पूर्वमीमांसायां षष्ठाध्यायस्यान्तिमे पादे निर्णयः कृतः। अस्य यागस्यानुष्ठानायोत्तरवेदिर्निर्मातव्या भवति—'दर्शपूर्णमासवत्सन्नमनवर्जं प्रागुत्तरात्परिग्राहात् कृत्वापरेण यूपावटदेशं सञ्चरमवशिष्य वेद्यामुत्तरवेदिं दशपदां सोमे करोति' (आप० श्रौ० ७.३.१०.) इति। दक्षिणोत्तरतः पूर्वपश्चिमतश्च दशपदा वेदिः। एवञ्चात्र क्षेत्रफलं शतपरिमितं भवतीति शुल्बसूत्रे कपर्दिस्वामी स्वीये भाष्ये वदति। एवं यथाविध्युत्तरवेदिं सम्पाद्य तत्र प्राग्वंशशालायां विद्यमानादाहवनीयादुत्तरवेद्यर्थमग्नेः प्रणयनं कर्तव्यम्। प्राग्वंशशालास्थाहवनीये यज्ञसम्बन्धीनि काष्ठानि प्रभूतानि निक्षिप्य सम्यक् प्रज्ज्वलय्य कस्मिश्चन वालुकापूर्णे पात्रे ज्वलन्तमग्निं गृहीत्वा उत्तरवेदिदेशं गच्छेदध्वर्युः। इदमेवाग्निप्रणयनमित्युच्यते। प्रणयनावसरेऽध्वर्युः होतारं सम्प्रेष्यति—'अग्नये प्रणीयमानायानुब्रूहि' इति। होत्राऽनुवचने क्रियमाणेऽध्वर्युरग्नेः प्रणयनं कुर्यात्। अतः पूर्वोक्ते प्रणयने विनियोगो मन्त्राणाम्।

[50] 'अनुदात्तं सर्वमपादादौ' इत्यधिकृत्य युष्मदस्मच्छब्दयोः पदात्परयोः अपादादौ स्थितयोः षष्ठीचतुर्थीद्वितीयास्थयोर्ये आदेशा भवन्ति तेऽनुदात्ता भवन्तीत्यर्थः। तथाच त्वा वां वः, मा नौ नः, ते, मे इत्येवं स्वराः।

— — — — — — —

[51] अस्य विवरणं टिप्पण्यां [37] अङ्के कृतम्।

[52] शतुर्लसार्वधातुकत्वात्। 'लटः शतृशानचावप्रथमासमानाधिकरणे' इति वर्तमानकाले शतृशानचौ भवतः। परस्मैपदे शतृप्रत्ययः आत्मनेपदे च शानच्। सूत्रे 'लटः' इति निर्देशात्क्वचित्प्रथमासामानाधिकरण्येऽपि प्रत्ययाविमौ भवतः। भरन् भरन्तौ भरन्तः,

अष्टमीमृचमाह। पूर्वमन्त्रे त्वामुपैम इत्यग्निमुद्दिश्योक्तम्। कीदृशं त्वाम्? राजन्तं—दीप्यमानम्। अध्वराणां—राक्षसकृतहिंसारहितानां यज्ञानां, गोपां—रक्षकम्। ऋतस्य—सत्यस्यावश्यंभाविनः कर्मफलस्य, दीदिविं—पौनःपुन्येन भृशं वा द्योतकम्। आहुत्याधारमग्निं दृष्ट्वा शास्त्रप्रसिद्धं कर्मफलं स्मर्यते। स्वे दमे—स्वकीये गृहे यज्ञशालायां हविर्भिर्वर्धमानम्। राजन्तं वर्धमानमित्यत्रोभयत्र पूर्ववद्धातुस्वरः शिष्यते। दीदिविशब्दस्य 'अभ्यस्तानामादिः'[53] (पा० ६-१-१८९) इत्याद्युदात्तत्वम्। दमशब्दो वृषादित्वादाद्युदात्तः[54] ॥८॥

नवमीमृचमाह। हे अग्ने सः त्वं नोऽस्मदर्थं सूपायनः—शोभनप्राप्तियुक्तो भव। तथा नोऽस्माकं स्वस्तये विनाशराहित्यार्थं सचस्व—समवेतो भव। तत्रोभयत्र दृष्टान्तः। यथा सूनवे पुत्रार्थं पिता सुप्रापः प्रायेण समवेतो भवति तद्वत्। अस्मच्छब्दादेशस्य न इत्येतस्य 'अनुदात्तं सर्वम्०' (पा० ८-१-१८) इत्यनुदात्तत्वम्। 'चादयोऽनुदात्ताः'[55] (फि० ४-१६) इतीवशब्दोऽनुदात्तः। इवेन नित्यसमासः 'पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' (पा० वा० २-१-४) इति समस्तः पितेवशब्दो मध्योदात्तः। शोभनमुपायनं यस्येति बहुव्रीहौ 'नञ्सुभ्याम्' (पा० ६-२-१७२) इत्यन्तोदात्तत्वम्। सचस्वेत्यत्र पदात्परत्वं नास्तीति न निघातः। लसार्वधातुकानुदात्तत्वे सति धातुस्वरावशेषः ॥९॥ इति प्रथमस्य प्रथमे द्वितीयो वर्गः।

---

वर्द्धमानः, एधमान इत्यादिरूपाणि सिध्यन्ति। तत्र भृञ् धातोः शपि शतृप्रत्यये नुमागमे च सति भरन्त इति रूपम्। शपश्च 'अनुदात्तौ सुप्पितौ' इति सूत्रेणानुदात्तस्वरः। लकारस्थाने विहितस्य शतुः— 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्निङोः' इति सूत्रेणानुदात्तस्वरः। अयमेव लसार्वधातुकानुदात्तस्वरशब्देनोच्यते। एवञ्चात्र धातुस्वर एव शिष्यते। भरन्तः इति सिध्यति। एवमेव शानच्प्रत्ययस्थलेऽपि। यथा-ईशानः वर्धमान इत्यादौ।

[53] दीदिविम्। दिव् धातोः क्विन् प्रत्ययः। 'दिवो द्वे दीर्घश्चाभ्यासस्य' इति द्वित्वेऽभ्यासस्य दीर्घे च सति दीव् दिव्इ इति स्थिते 'हलादिश्शेषः' इति वलोपे दीदिवि, अम् 'अमिपूर्वः' इति पूर्वरूपे दीदिविम् इति सिध्यति। 'अभ्यस्तानामादिः' इत्यनेन (अभ्यस्तानां धातूनामादिरुदात्तो भवतीति) सूत्रणादिरुदात्तः। अतः दीदिवि इति सिध्यति।

[54] वृषादिगणपठितास्सर्वेऽप्याद्युदात्ता भवन्ति।

[55] 'चादयोऽनुदात्ताः' इति फिट् सूत्रेणेवशब्दस्यानुदात्तत्वे, पिता इत्यस्येवेन नित्यसमासे सति 'पूर्वपदप्रकृतिस्वरत्वञ्च वक्तव्यम्' इति वार्तिकेन पूर्वपदप्रकृतिस्वरः। पूर्वपदस्य प्रातिपदिकस्वरोऽन्तोदात्तः। आकारेण इकारस्य गुण एकादेशः। 'एकादेश उदात्तेनोदात्तः' इति उदात्त एव तिष्ठति। तथाच 'पितेव' इति संहिताकाले स्वरः। पदपाठावसरे तु 'पिताऽइव' इति भवति। अत्रत्यो विशेषः पूर्वं टिप्पण्या [34]अङ्के विवृतः।

एतत्सूक्तगतमन्त्राणां पदपाठकाले स्वरसञ्चाराय प्रायः प्राधान्येन षट्त्रिंशत्सूत्राण्यावश्यकानि भवन्ति। तानि सूत्राणि विशेषतोऽभ्यसनीयानि। संहितास्वरसञ्चारप्रकारः प्रथममन्त्रद्वये प्रदर्शितः। संहितास्वरसञ्चारावसरे-उत्तरपदे उदात्तस्वरः कस्याक्षरस्येति प्रथमं निर्णयः कर्तव्यः। तेन च स्वयमेव सर्वे स्वरा आगमिष्यन्ति।

॥ २ ॥

१-२

'अग्निमीळ॒' इत्यादिसूक्तमग्निष्टोमस्य[56] प्रातरनुवाके यथा विनियुक्तं तथा 'वायवायाही'त्या-

---

अस्मिन् सूक्ते भाष्यकारेण सूक्तविनियोगः तृचविनियोगः ऋग्विनियोगश्चेति विशेष-विनियोगाः प्रदर्शिताः। तत्राध्येतृभिर्विशेषेण ध्यानं देयम्।

[56] अग्निष्टोमस्य। अग्निष्टोमसंस्थाकज्योतिष्टोमस्येत्यर्थः। संस्था नाम स्तोत्रेण क्रतूपरमः। येन स्तोत्रेण क्रतोस्समाप्तिर्भवति तेन संस्थाया व्यवहारः। अग्नि-ष्टोमसंस्थाकज्योतिष्टोमे सुत्यादिने (यस्मिन्दिने सोमलताया अभिषवादयस्संस्काराः क्रियन्ते तद्दिनं सुत्यादिनं भवति) प्रातरादिषु त्रिषु सवनेषु स्तोत्राणि शस्त्राणि च विहितानि। यावन्ति स्तोत्राणि भवेयुः तावन्त्येव शस्त्राण्यपि। तत्र प्रातस्सवने—बहिष्पवमानस्तोत्रमेकम्, चत्वार्या-ज्यस्तोत्राणि च क्रियन्ते। स्तोत्रकर्तारः—उद्गाता प्रस्तोता प्रतिहर्ता चेति त्रयः ऋत्विजः। 'औदुम्बरीं स्पृष्ट्वोद्गायेत्' इति विध्यनुसारेण सदोनामकमण्डपे निखातायाः स्थूणाया औदुम्बरी-पदवाच्यायाः स्पर्शनपुरस्सरं गानं कर्तव्यमिति साधारणो नियमः, किन्तु पवमानस्तोत्रमिदं सदोनामकान्मण्डपाद्बहिर्गत्वोद्गीयत इति बहिस्सम्बन्धः स्तोत्रस्य। अतएव बहिस्सम्बन्धा-त्पवमानदेवताकत्वाच्च बहिष्पवमानमिति स्तोत्रनाम सम्पन्नम्। 'उपास्मै गायता नरः' 'दविद्युतत्या' 'पवस्व' इति तृचेषु गायत्रं साम निक्षिप्य गीयते। सर्वेषु पवमानस्तोत्रेषु गायत्र-मेव साम भवति। गानप्रकार उपोद्घाते प्रदर्शितः। बहिष्पवमानस्तोत्रमिदं त्रिवृत्स्तोमकं भवति। त्रिवृच्छब्दस्य नवेत्यर्थः। स्तोमशब्दस्य स्तोत्रसंख्यार्थः। नवसंख्याकस्तोत्रमिति समुदायस्यार्थः। तृचे ऋक्त्रयमेव भवति, अत्र त्रयस्तृचाः। त्रिषु तृचेषु नवसंख्याका ऋचो भवन्ति।

त एवर्त्विजः सदः प्रत्यावृत्य औदुम्बरीपार्श्वे स्वस्वस्थान उपविश्याज्यस्तोत्राणि कुर्युः। इमानि चत्वारि भवन्ति। होतुराज्यम्, मैत्रावरुणस्याज्यम्, ब्राह्मणाच्छंसिन आज्यम्, अच्छा-वाकस्याज्यमिति तेषां संज्ञाः। क्रमेण—'अग्न आयाहि वीतये' 'आ नो मित्रावरुणा' 'आयाहि सुषुमाहिते' 'इन्द्राग्नी आगतं सुतम्' इति चतुर्षु तृचेषु गायत्रं साम निक्षिप्य गीयते। पञ्च-दशस्तोमकानीमानि। एकैकस्मिंस्तृचे पञ्चदश संख्या यथाविधि सम्पादनीया भवन्ति। अग्निः मित्रावरुणौ इन्द्रः इन्द्राग्नी इति षड्दैवत्यानीमानि स्तोत्राणि। मिलित्वा प्रातस्सवने पञ्च स्तोत्राणि

माध्यन्दिने सवने माध्यन्दिनपवमानमेकं पञ्चदशस्तोमकं स्तोत्रम्। चत्वारि पृष्ठस्तोत्राणि सप्तदशस्तोमकानि। तत्र माध्यन्दिनपवमाने गायत्रम् आमहीयवं रौरवं यौधाजयं औशनञ्चेति पञ्च सामानि गीयन्ते। तदाधारभूताश्च तृचाः-'प्रसोमासो विपश्चितः' 'अभिद्रो-णानि बभ्रवः' 'सुता इन्द्राय वायवे' 'प्रसोम देववीतये' 'प्र तु द्रव परिकोशम्' इति भवन्ति।

पृष्ठस्तोत्रेषु होतुः पृष्ठम्, मैत्रावरुणस्य पृष्ठम्, ब्राह्मणाच्छंसिनः पृष्ठम्, अच्छावाकस्य

पृष्ठम् इतिसंज्ञकानि पृष्ठानि चत्वारि भवन्ति। सप्तदशस्तोमकानि पृष्ठानि। 'अभित्वा शूर नोनुमः' इति प्रगाथे रथन्तरं साम, 'कया नश्चित्र आभुवत्' इति तृचे वामदेव्यम्, 'तं वो दस्म मृतीषहम्' इति तृचे नौधसम्, 'तरोभिर्वो विदद्वसुम्' इति प्रगाथे कालेयमिति च सामानि गीयन्ते। एवं माध्यन्दिनसवने पञ्च स्तोत्राणि।

तृतीयसवने-आर्भवपवमानं सप्तदशस्तोमकम् यज्ञायज्ञीयञ्चैकविंशस्तोमकमिति स्तोत्रद्वयम्। तत्रार्भवपवमाने 'स्वादिष्ठया मदिष्ठया' इति तृचे गायत्रं संहितञ्चेति सामद्वयम्, 'पवस्व मधुमत्तमः' 'इन्द्रमच्छ सुता' इति तृचद्वये सफम् पुष्कलञ्चेति सामद्वयम्, 'पुरोजिती वो अन्धसः' इति तृचे श्यावाश्वम् आन्धीगवञ्चेति सामद्वयम्, 'अभिप्रियाणि पवते' इति तृचे काव सामं च गीयन्ते।

यज्ञायज्ञीयस्तोत्रे च 'यज्ञायज्ञा वो दक्षसे' इति तृचे यज्ञायज्ञीयं नाम गीयते। इदमेव चाग्निष्टोमस्तोत्रशब्देनापि व्यवह्रियते। सवनत्रयेऽपि मिलित्वा द्वादश स्तोत्राणि, तेषु चान्तिमं स्तोत्रम् अग्निष्टोमसंज्ञितम्, तेन चास्य क्रतोस्समाप्तिरित्ययम् अग्निष्टोमसंस्थाकज्योतिष्टोम इति व्यवह्रियते।

'स्तोत्रमग्रे शस्त्रात्' इत्याश्वलायनवचनानुसारं स्तोत्रं प्रथमं भवति, तदनु शस्त्रं पठ्यते। तत्र यावन्ति स्तोत्राणि तावन्ति शस्त्राण्यपि भवन्ति। शस्त्रकर्तारो होत्रका भवन्ति। तेषु—होता, मैत्रावरुणः, ब्राह्मणाच्छंसी, अच्छावाकश्चेति चत्वारः। प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं स्तोत्रम्, अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधानं शस्त्रम्। सामगानपूर्वकं मन्त्रैः देवतागुणकीर्तनं स्तोत्रेषु, विना गानेन ऐकश्रुत्यमवलम्ब्य मन्त्रैः देवतागुणकीर्तनं शस्त्रेषु भवतीति स्तोत्रशस्त्रयोर्भेदः। तत्र प्रातस्सवने—आज्यशस्त्राणि चत्वारि, प्रउग शस्त्रमेकमिति पञ्च शस्त्राणि। चतुर्ष्वाज्यशस्त्रेषु प्रथमं शस्त्रं प्रउगशस्त्रञ्च होता शंसति। प्रउगशस्त्रशंसनानन्तरं द्वितीयादीनां त्रयाणामाज्यशस्त्राणां शंसनं क्रमेण मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकाः कुर्युः। तत्र 'उत्तमेन पदेन "प्रवो देवाय" इत्याज्यमुपसन्तनुयात्' (आश्व. श्रौ.५.९) इत्याश्वलायनवचनेन 'प्र वो देवायाग्नय' इति सप्तर्चं सूक्तमाज्यशस्त्रे विनियुज्यते। शस्त्रारम्भात्पूर्वं होता निविच्छब्दवाच्यान् मन्त्रान् 'अग्निर्देवेद्ध मन्विद्ध' त्यादीन् पठित्वा तदन्तिमेन पदेन 'प्रवो देवाय' इति सूक्तसंयोजनं कुर्यादिति सूत्रार्थः। अन्ये च शंसननियमा आश्वलायनोक्ताः श्रौतसूत्रादेव ज्ञातव्याः। इदं सूक्तं वारत्रयं शंसनीयम्। अनन्तरं होता वैश्वदेवग्रहग्रहणानन्तरं प्रउगशस्त्रं शंसति। 'वायवायाहि दर्शतेति सप्त तृचाः' इत्याश्वलायनेन सप्त तृचाः प्रउगशस्त्रे विनियुक्ताः। इमे तृचाः सूक्तद्वयेन विभक्ताः। प्रतितृचं देवताभेदः—वायव्यः ऐन्द्रवायव्यः, मैत्रावरुणः, आश्विनः, ऐन्द्रः, वैश्वदेवः, सारस्वतश्चेति। अनन्तरमाज्यशस्त्रेष्ववशिष्टानि त्रीणि शंसनीयानि।

माध्यन्दिनसवने—मरुत्वतीयग्रहप्रचारानन्तरं मरुत्वतीयशस्त्रं होता शंसेत्। 'आ त्वा रथं यथोतय' इत्यादिनाऽऽश्वलायनोऽस्य शस्त्रस्य शंसनप्रकारं प्रदर्शयति। अनन्तरं निष्केवल्यशस्त्राणि—यदि स्तोत्रकर्तृभिः रथन्तरेण साम्ना पृष्ठस्तोत्रं कृतं स्यात्तर्हि शस्त्रकर्ता होता 'अभि त्वा शूर नोनुम' इति स्तोत्रियं, 'अभित्वा पूर्वपीतये' इत्यनुरूपञ्च शंसेत्। यदि बृहत्साम्ना पृष्ठस्तोत्रं कृतं स्यात्तर्हि 'त्वामिद्धि हवामहे' 'त्वं ह्येहि चेरव' इति स्तोत्रियानुरूपौ शंसेत्।

दत्रस्तृचाः प्रउगशस्त्रे विनियुक्ताः। तत्रेदं चिन्त्यते—शस्त्रं किं देवतास्मरणरूपं[57] संस्कारकर्म

---

अत्रत्यविशेषाः श्रौतसूत्रतोऽवगन्तव्याः। एवं मैत्रावरुणशस्त्रम्, ब्राह्मणाच्छंसिशस्त्रम्, अच्छावाकशस्त्रञ्च 'होत्रकाणाम्' इत्यारभ्याश्वलायनेन (आश्व. श्रौ. ५.१०) प्रदर्शितानि एवञ्च माध्यन्दिनसवने पञ्च शस्त्राणि।

तृतीयसवने सावित्रग्रहप्रचारानन्तरं होता वैश्वदेवशस्त्रमाग्निमारुतशस्त्रञ्च शंसेत्। अनयोस्स्वरूपं चतुर्थसूक्तटिप्पण्यां निरूपयिष्यामः। एवञ्च तृतीयसवने शस्त्रद्वयम्। आहत्याग्निष्टोमसंस्थाकज्योतिष्टोमे द्वादश स्तोत्राणि द्वादश च शस्त्राणि कर्तव्यानि भवन्ति।

इयमग्निष्टोमसंस्था संस्थान्तराणां प्रकृतिः। आहिताग्निः प्रथममनया संस्थया ज्योतिष्टोमं सम्पाद्यैव संस्थान्तरेण तं कर्तुमधिकारी भवति। अग्निष्टोमादूर्ध्वं त्रीण्युक्थ्यस्तोस्त्राणि त्रीणि च शस्त्राणि कृत्वा ज्योतिष्टोमं यदि सम्पादयेत्तर्हि स क्रतुः उक्थ्यसंस्थाको भवति। अत्राहत्य पञ्चदश स्तोत्राणि पञ्चदश शस्त्राणि च भवेयुः।

उक्थ्यस्तोत्रानन्तरं षोडशिस्तोत्रमेकं षोडशिशस्त्रमेकञ्च कृत्वा क्रतुर्यदि समाप्यते तर्हि स षोडशिसंस्थाकः परिगण्यते। तत्र च पूर्वोक्तैः स्तोत्रैः शस्त्रैश्च सहैकं स्तोत्रं शस्त्रञ्चाधिकमिति षोडश स्तोत्राणि तावन्ति च शस्त्राणि भवेयुः। अग्निष्टोमस्तोत्रानन्तरमुक्थ्यस्तोत्राण्यकृत्वा षोडशिस्तोत्रेण क्रतुस्समापितश्चेत्सोऽप्यग्निष्टोमसंस्थाकस्स्यात्।

षोडशिस्तोत्रानन्तरं चत्वारि रात्रिस्तोत्राणि तावन्ति च शस्त्राणि, सन्धिस्तोत्रमेकम्, आश्विनशस्त्रञ्चैकं कृत्वा क्रतोस्समाप्तौ स क्रतुः-अतिरात्रसंस्थाको भवेत्। तत्र रात्रिस्तोत्राणि चत्वारि 'चतुः शस्त्राः पर्यायाः' (आश्व. श्रौ. ६.४.) इत्याश्वलायनवचनानुसारं त्रिभिः पर्यायैस्सम्पादनीयानि भवन्ति। तथाच द्वादशसंख्याकानि तानि भवेयुः। सन्धिस्तोत्रमाश्विनशस्त्रञ्च मेलयित्वा त्रयोदश स्तोत्राणि शस्त्राणि च भवन्ति। पूर्वैस्सहातिरात्रसंस्थाकज्योतिष्टोमे ऊनत्रिंशत्संख्याकानि स्तोत्राणि शस्त्राणि च सम्पादनीयानि।

षोडशिस्तोत्रादूर्ध्वं वाजपेयसंज्ञकमेकं स्तोत्रं कृत्वा क्रतुर्यदि समाप्यते तर्हि स वाजपेयसंस्थाक इति परिगण्यते। अतिरात्रस्तोत्रानन्तरं चत्वार्यप्तोर्यामस्तोत्राणि तावन्ति च शस्त्राणि च यदि क्रियन्ते तर्हि स क्रतुरप्तोर्यामसंस्थाक इति व्यवह्रियते। तथाच-अग्निष्टोमः, अत्यग्निष्टोमः, उक्थ्यः, षोडशी, वाजपेयः, अतिरात्रः, अप्तोर्यामश्चेति सप्तसंस्थाको भवति ज्योतिष्टोमः। सप्तसंस्थाकज्योतिष्टोमस्यैव विकृतयोऽन्ये सर्वेऽपि सोमयागा भवन्ति।

[57] देवतास्मरणरूपम्। दर्शपूर्णमासज्योतिष्टोमादिश्रौतकर्मणामङ्गानि द्विविधानि भवन्ति—सिद्धरूपाणि क्रियारूपाणि चेति। तत्र सिद्धरूपाणि जातिद्रव्यगुणादीनि भवन्ति। क्रियारूपाणि चाङ्गानि द्विविधानि—संस्कारकर्माणि प्रधानकर्माणि चेति। संस्कारकर्माण्येव गुणकर्मपदेन सन्निपत्योपकारकपदेन च व्यवह्रियन्ते, प्रधानकर्माणि चारादुपकारकपदेनोच्यन्ते। 'व्रीहीनवहन्ति' 'व्रीहीन्प्रोक्षति' इत्यादिवाक्यविहिता अवहननप्रोक्षणादयः संस्कारकर्म-गुणकर्म-सन्निपत्योपकारकशब्दवाच्याः। यागाङ्गद्रव्यदेवतोद्देशेन विधीयमानकर्मत्वमेव तेषां लक्षणम्। यागाङ्गभूतानि द्रव्याणि व्रीह्यादीनि, तदुद्देशेन विधीयमानत्वमवहननादाविति समन्वयः। एवं यागाङ्गदेवतामुद्दिश्य स्मरणार्थतया विधीयमानं याज्यापुरोनुवाक्यापठनमपि संस्कारकर्मादि-

किं वाऽदृष्टफलं प्रधानकर्मेति। अत्र पूर्वपक्षं जैमिनिः सूत्रयामास 'स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात्' ॥१॥ (पू० मी० २-१-१३-२६)। 'आज्यैः स्तुवते' 'पृष्ठैः स्तुवते' 'प्रउगं 'शंसति' 'निष्केवल्यं शंसती'ति श्रूयते। तत्र स्तुतिः शंसनं च गुणिनिष्ठगुणाभिधानम्। 'इन्द्रस्य नु वीर्याणि प्रवोचमि'त्यत्र (ऋ० १-३२-१) दृष्टत्वात्। एवं सति याज्यान्यायेन गुणिन्या देवताया अभिधायकत्वेन स्तुतशस्त्रयोः संस्काररूपत्वमभ्युपेयम्। याज्यायास्तद्रूपत्वं दशमाध्यायस्य चतुर्थपादे दृष्टार्थलाभेन निर्णीतम्। तद्वदत्रापि। तुशब्दः प्रधानकर्मत्वं व्यावर्तयति। सिद्धान्ती तं पक्षं दूषयति—'अर्थेन त्वपकृष्येत देवतानाम्नश्चोदनार्थस्य गुणभूतत्वात्' इति ॥२॥ तुशब्देन संस्कारत्वं वारयति। संस्कारपक्षे प्रयोजनवशेन मन्त्रः स्वस्थानादपकृष्येत। कुतः। मन्त्रगतं देवतावाचकं यदिन्द्रादि नामास्ति तच्चोदनया मन्त्ररूपया प्रतिपाद्यस्य देवतारूपस्यार्थस्य गुणभूतम्। तस्माद्यत्र प्रधानभूतदेवताऽस्ति तत्र गुणभूतो मन्त्रो नेतव्यः। तद्यथा—माहेन्द्रग्रहसन्निधौ'अभित्वा शूर' (ऋ० ७-२२-१२) इत्ययं प्रगाथ आम्नातः। स चैन्द्रं प्रकाशयति न तु महेन्द्रम्। ततो यत्रैन्द्रं कर्म तत्रायं प्रगाथोऽपकर्षणीयः। तथा सति क्रमसन्निधी बाध्येयाताम् ॥ तदेतत्सिद्धान्तिनाभिहितं दूषणं पूर्वपक्षी समाधत्ते—

---

शब्दवाच्यं भवति। द्रव्यदेवताद्यनुद्दिश्य विधीयमानं यत्कर्म तत्प्रधानकर्म आरादुपकारकं कर्मेत्यभिधीयते। यथा—प्रयाजाज्यभागानूयाजादय इति मीमांसकसरणिः।

तत्र पूर्वं प्रदर्शितानि यानि स्तोत्राणि शस्त्राणि च, तानि किं यागीयदेवतास्मारकाणि सन्ति संस्कारकर्माणि? उतादृष्टफलजननद्वारा प्रधानकर्माणि? इति संशयः। तत्रायं पूर्वः पक्षः—याज्या पुरोनुवाक्यामन्त्रा यथा यागीयदेवताः स्मारयन्तः सन्निपत्योपकारकाः संस्कारकर्माणि भवन्ति, तथैव स्तोत्रशस्त्रमन्त्रा अपि यागसम्बन्धिनीर्देवताः प्रकाशयन्तस्सन्निपत्योपकारकाः संस्कारकर्माण्येवेति। अस्यैव पूर्वपक्षस्योपष्टम्भकं सूत्रम्—'स्तुतशस्त्रयोस्तु संस्कारो याज्यावद्देवताभिधानत्वात्' इति।

सिद्धान्तस्तु—स्तोत्राणि शस्त्राणि च प्रधानकर्माण्येवेति। स्तोत्रपदं प्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधाने शक्तम्, शस्त्रपदञ्च—अप्रगीतमन्त्रसाध्यगुणिनिष्ठगुणाभिधाने। यदि देवतास्मारकत्वमेषां तर्हि पूर्वोक्तशक्तिपरित्यागस्स्यात्, लाक्षणिकोऽर्थश्च स्वीकृतस्स्यात्। अतः श्रौतार्थस्य (शक्यार्थस्य) सङ्ग्रहायादृष्टफलजनकत्वमप्यङ्गीकृत्य स्तोत्राणां शस्त्राणाञ्च प्रधानकर्मत्वमेव।

लक्षणया देवतास्मारकत्वेऽङ्गीक्रियमाणे सिद्धान्ती दोषं प्रदर्शयति— 'अर्थेन त्वपकृष्येत देवतानाम्नश्चोदनार्थस्य गुणभूतत्वात्' इति। सोमयागे 'माहेन्द्रं ग्रहं गृह्णाति' इति माहेन्द्रग्रहो विहितः। तत्र 'अभित्वा शूर नोनुमः' इति शस्त्रमन्त्रोऽपि विहितः। मन्त्रस्येन्द्रदेवताकत्वम्। यागस्य च महेन्द्रदेवताकत्वम्। इन्द्रमहेन्द्रयोर्देवताभेदः। यागीयमहेन्द्रदेवतास्मारकत्वं मन्त्रस्य नास्तीति यत्रैन्द्रदेवताको यागस्तत्र मन्त्रस्योत्कर्षस्स्यात्, देवतापेक्षया मन्त्रस्य गुणभूतत्वात्। तथा सति माहेन्द्रग्रहसन्निधिः तत्क्रमश्च बाधितौ भवेताम्। अतः स्तोत्रस्य शस्त्रस्य वाऽदृष्टार्थत्वमङ्गीकृत्यात्रैव मन्त्रस्य निवेशे स्वीकृते प्रधानकर्मत्वमेव स्तोत्रशस्त्राणां समुचितं स्यादिति सिद्धान्तिन आशयः।

वशावद्वा[५८] गुणार्थं स्यादिति ॥३॥ वाशब्दः प्रगाथस्यान्यत्र नयनं वारयति। मन्त्रे यदेतदिन्द्रशब्दाभिधानं तदेतन्महत्त्वगुणोपलक्षणार्थं स्यात्। यथा 'सा वा एषा सर्वदेवत्या यदजा वशा वायव्यामालभेत' (तै० सं० ३-४-३-२) इत्यत्राजावशाशब्देन चोदिते कर्मणि छागशब्देन केवलेन युक्ता निगमा वशात्वगुणमप्युपलक्षयन्ति तद्वत्। तस्मान्महत्त्वगुणयुक्ते चोदिते कर्मणि निर्गुणेनेन्द्रशब्देनाभिधानमविरुद्धम्। लोकेऽपि महाराजे केवलराजशब्दप्रयोगमपि पश्यामः॥ तदेतत्समाधानं सिद्धान्ती दूषयति——

न श्रुतिसमवायित्वादिति ॥४॥ यदुक्तं वशान्यायेन राजन्यायेन वास्य ग्रहस्येन्द्रो देवता युज्यत इति। तन्न, देवतात्वस्य तद्धितश्रुतिसमवायित्वात्। माहेन्द्रो ग्रह इत्यत्र 'सास्य देवता' (पा० ४-२-२४) इत्यस्मिन्नर्थे महेन्द्राद् घाणौ च (पा० ४-२-२१) इति महेन्द्रशब्दादण्प्रत्ययो विहितः। तस्मान्महेन्द्र एव देवता न त्विन्द्रः॥ विपक्षे बाधमाह——

गुणश्चानर्थक इति ॥५॥ यदीन्द्रो देवता स्यात्तदानीमैन्द्रो ग्रह इत्येतावतैवार्थावगतौ माहेन्द्र इति महत्त्वगुणोऽनर्थकः स्यात्। चकारः पूर्वहेतुना समुच्चयार्थः॥ हेत्वन्तरमाह——

तथा याज्यापुरोरुचोरिति ॥६॥ इन्द्रमहेन्द्रयोर्देवतयोर्भेदे यथा महत्त्वगुणः सार्थकस्तथा याज्यापुरोऽनुवाक्ययोर्भेदोऽप्यस्मिन्नेव पक्ष उपपद्यते। ऐन्द्र सानसिम् (आ० श्रौ० १-६) इत्यादिके इन्द्रस्य याज्यापुरोऽनुवाक्ये। महाँ इन्द्रो य ओजसा (आ० श्रौ० १-६) इत्यादिकं महेन्द्रस्य॥ पूर्वपक्षिणोक्ते वशादृष्टान्ते वैषम्यमाह——

वशायामर्थसमवायादिति ॥७॥ या वशा विधिवाक्ये श्रुता तस्या एव निगमेषु छागशब्देन व्यवहारो न विरुद्धः। छागत्वलक्षणस्यार्थस्य वशायां समवेतत्वात्। तच्च प्रत्यक्षेणोप-

---

[५८] वशावद्वा। पूर्वपक्षिणस्सूत्रमिदम्। मन्त्रगतेन्द्रशब्दस्य महत्त्वगणोपलक्षकत्वे स्वीकृते मन्त्रस्य नोत्कर्षावकाशः। इन्द्र एव महेन्द्रः, राजा महाराज इतिवत्। यथा महाराजे राजशब्दप्रयोगः, तथा महेन्द्रे इन्द्रशब्दप्रयोगो न विरुध्यते। अतएव-वशात्व-(वन्ध्यात्व) गुणविशिष्टपशुद्रव्यके वायव्ययागे 'छागस्य वपाया मेदसोऽनुब्रूहि' इतिप्रकृतितः प्राप्ते प्रैषमन्त्रे छागपदेनैव यागीयपशुगतवशात्वगुण उपलक्ष्यते। नात्र 'अजाया वशाया मेदसोऽनुब्रूहि' इति कथ्यते। अतस्स्तोत्रशस्त्राणां देवतास्मारकत्वेऽपि नोत्कर्ष इति पूर्वपक्ष्याशयः। दृष्टान्तदार्ष्टान्तिकयोर्वैधर्म्यमुपपादयति सिद्धान्ती– 'न श्रुतिसमवायित्वात्' इति सूत्रचतुष्टयेन। वशायामजायां छागत्वजात्यवच्छिन्नत्वं प्रत्यक्षगम्यम्। अतश्छागपदेन वशात्वगुणविशिष्टाजाया बोधनं नानुचितम्। किन्तु 'माहेन्द्रं ग्रहम्' इत्यत्र तद्धितप्रत्ययो महेन्द्रशब्दादुत्पन्नः यागे महेन्द्रमेव देवतामवगमयति, न त्विन्द्रम्। न हीन्द्रत्वं नाम काचन जातिः छागत्वमिव। देवतायास्स्वरूपन्तु-अक्षरानुपूर्वीरूपमेव। आनुपूर्वीभेदाच्च देवताभेदः। तस्मात्कथमिन्द्रपदेन महेन्द्रस्योपलक्षणं भवितुमर्हति? यदीन्द्र एव महेन्द्रस्तर्हि महत्त्वगुणविशिष्टेन्द्रस्य यागीयदेवतात्वबोधनमनर्थकं स्यात्। किञ्च माहेन्द्रयागस्य महेन्द्रपदघटितयाज्यापुरोवाक्ये, ऐन्द्रयागस्य चेन्द्रपदघटितयाज्यापुरोनुवाक्ये पृथक् पृथगाम्नाते दृश्येते। अतोऽपीन्द्रमहेन्द्रयोर्भेदः। एवञ्च देवताभेदे सत्यैन्द्रमन्त्रस्योत्कर्षः स्याद् यदि गुणकर्मत्वं स्तोत्रशस्त्राणां स्यादिति सिद्धान्तिन आशयः।

लभ्यते। इन्द्रमहेन्द्रयोस्तु भेद उपपादितः। तस्माद्विषमो दृष्टान्तः। एवं संस्कारपक्षे प्रगाथस्यैन्द्रकर्मण्यपकर्षप्रसङ्गात्तद्वारयितुं स्तोत्रशस्त्रयोः प्रधानकर्मत्वमिति सिद्धान्तिनो मतम्। पुनरपि पूर्वपक्षी तदेतन्मतं निराचष्टे—

यत्रेति[69] वार्थवत्त्वात् स्यादिति ॥८॥ वाशब्दः सिद्धान्तिमतव्यावृत्त्यर्थः। यत्रैन्द्रं कर्म तत्र प्रगाथो नेतव्य इत्ययमेव पक्षः स्यात्। कुतः अर्थवत्त्वात्। ऐन्द्रो मन्त्र इन्द्रं प्रकाशयितुं समर्थ इत्यर्थवान् स्यात्। महेन्द्रं तु प्रकाशयितुमसमर्थत्वादानर्थक्यं प्रगाथस्य प्रसज्येत। तस्माद्देवताप्रकाशनरूपसंस्कारकर्मत्वमेव स्तोत्रशस्त्रयोर्युक्तमिति स्थितः पूर्वपक्षः। अथ सिद्धान्तमाह—

अपि वा श्रुतिसंयोगात् प्रकरणे स्तौतिशंसती क्रियोत्पत्तिं विदध्यातामिति ॥९॥ अपि वेत्यनेन संस्कारकर्मत्वं व्यावर्त्यते। स्तौतिधातुः शंसतिधातुश्चेत्येतावुभावपि स्वप्रकरण एव कस्याश्चित्क्रियाया उत्पत्तिं विदध्याताम्। कुतः? श्रुतिसंयोगात्। तयोर्धात्वोर्वाच्योऽर्थः श्रुतिरित्युच्यते। तत्संयोगः प्रधानकर्मत्वं सिध्यति। तथाहि गुणिनमुपसर्जनीकृत्य तन्निष्ठानां गुणानां प्राधान्येन कथनं स्तुतिः। यो देवदत्तः स चतुर्वेदाभिज्ञ इत्युक्ते सर्वे जनाः स्तुतिमव-गच्छन्ति। गुणस्योपसर्जनत्वे तु न स्तुतिः प्रतीयते। यश्चतुर्वेदाभिज्ञस्तमाकारयेत्युक्ते स्तुतिं न मन्यन्ते किन्त्वाह्वानप्राधान्यमवबुध्यन्ते। एवं मन्त्रेष्वपि या देवता सेयमीदृशैर्गुणैरुपेतेति गुणप्राधान्यविवक्षायां मुख्यः स्तौतिधात्वर्थो विधीयते। त्वत्पक्षे तु येयमीदृग्गुणयुक्ता सेयं देवतेति देवतास्मरणस्य प्राधान्यादियं स्तुतिर्न स्यात्। ततः श्रुतिवशादेते प्रधानकर्मणी। तथा सति देवताप्रकाशने तात्पर्याभावादैन्द्रोऽपि प्रगाथः स्वप्रकरणगतेमहेन्द्रकर्मण्येवावतिष्ठते। यदि देवतास्मरणरूपं दृष्टं प्रयोजनं न लभ्यते तर्ह्यदृष्टमस्तु। प्रधानकर्मत्वे हेत्वन्तरमाह—

---

[69] यत्रेति। भवतु मन्त्रस्योत्कर्षः। यत्रोत्कृष्यते मन्त्रः तत्र देवताप्रकाशकत्वेन तस्य प्रयोजनवत्त्वं सिध्यति। उत्कर्षाभावे तस्यादृष्टार्थत्वेनानर्थक्यं भवेत्। अतो गुणकर्मत्व-मेव स्तोत्रशस्त्राणामिति पूर्वपक्षी प्रत्यवतिष्ठते।

अत्र सिद्धान्ती समाधत्ते—'अपि वा' इत्यादिना। 'आज्यैः स्तुवते' 'प्रउगं शंसति' इति विधिवाक्यगतस्तौतिशंसत्योर्धात्वोः गुणकीर्तनं शक्तिः। गुणकीर्तनरूपा क्रियाऽत्र प्राधान्येन विधातव्या। यस्या देवताया गुणकीर्तनं क्रियते तेन सा स्तुता भवति। तत्र गुणकीर्तनक्रियायां सा देवतोपसर्जनतया भासते, गुणकीर्तनञ्च प्राधान्येन। उपसर्जनीभूतदेवतास्मारकत्वं स्तौति-शंसत्योर्यदि स्वीक्रियेत तर्हि तयोर्गुणकीर्तने या शक्तिः सा भज्येत। अतः शक्त्यनुसारेण स्तोत्र-शस्त्रयोर्देवतास्मारकत्वमनङ्गीकृत्य गुणकीर्तन एव प्रवृत्तिरङ्गीकार्या। तथा सति प्रधानकर्मत्वमेव स्तोत्रशस्त्राणां सिध्येत्।

किञ्च चत्वार्याज्यानि स्तोत्राणि, चत्वारि पृष्ठस्तोत्राणि, द्वादश स्तोत्राणि द्वादश शस्त्राणि इत्यादिप्रयोगाणामुपपत्तिः प्रधानकर्मत्व एव सिध्येत्। संस्कारकर्मत्वे देवतास्मारणं नाम कर्म सर्वत्र तुल्यं, तत्र संख्यावाचकशब्दस्य सङ्गतिः कथं भवेत्। प्रधानकर्मत्वे तु गुणकीर्तनक्रियायाः पवमानाज्यपृष्ठादिनामभेदेन भिन्नत्वात्संख्यावाचकशब्दस्य सङ्गति-र्नानुपपन्ना।

'शब्दपृथक्त्वाच्चे'ति ॥१०॥ द्वादशाग्निष्टोमस्य स्तोत्राणि द्वादश शस्त्राणीत्यत्र द्वादशशब्देन स्तोत्राणां पृथक्त्वमवगम्यते। देवताप्रकाशनपक्षे सर्वैरपि मन्त्रसङ्घैः कृतस्य प्रकाशनस्यैकत्वेन द्वादशत्वसङ्ख्यया न स्यात्। प्रधानकर्मणां त्वाज्यस्तोत्रपृष्ठस्तोत्रादिनामकानां भिन्नत्वाद् द्वादशत्वसङ्ख्योपपद्यते। एवं शस्त्रवाक्येऽपि योज्यम्। विपक्षे बाधकमाह—

'अनर्थकं च तद्वचनमि'ति ॥११॥ अग्निष्टुति श्रूयते[60] 'आग्नेया ग्रहा भवन्ती'ति। तत्रैव पुनरप्यन्यदुच्यते— 'आग्नेयीषु स्तुवते' आग्नेयीः शंसती'ति। त्वत्पक्षे तद्वचनमनर्थकं स्यात्। चोदकप्राप्तेषु स्तोत्रशस्त्रमन्त्रेष्वाग्नेयग्रहानुसारेण देवतापदस्योहे सत्याग्नेयत्वसिद्धेः। प्रधानकर्मत्वपक्षे तु देवताप्रकाशनरूपत्वाभावेनोहाभावादाग्नेयमन्त्रान्तरविधिवचनमर्थवद्भवति। पुनरपि हेत्वन्तरमाह—

'अन्यश्चार्थः प्रतीयत' इति ॥१२॥ 'सम्बद्धे वै स्तोत्रशस्त्रे' इति ह्याम्नातम्। सम्बन्धश्च द्वयोर्भवति न त्वेकस्य। तस्मात् स्तोत्रशस्त्रयोरर्थभेदः प्रतीयते। स च संस्कारपक्षे न सम्भवति। देवताप्रकाशनरूपस्यार्थस्यैकत्वात्। प्रधानकर्मत्वपक्षे तु स्तोत्रकर्म शस्त्रकर्म चेत्यर्थभेद उपपद्यते। यद्यपि ष्टुञ् स्तुतौ शंसु स्तुतौ इत्येकार्थौ धातू तथापि प्रगीतमन्त्रसाध्यं स्तोत्रम्। अप्रगीतमन्त्रसाध्यं शस्त्रमिति तयोर्विवेकः। हेत्वन्तरमाह—

'अभिधानञ्च कर्मवदि'ति ॥१३॥ यथा प्रधानकर्माग्निहोत्रं जुहोतीति द्वितीयासंयोगेनाभिहितं तथा 'प्रउगं शंसती'त्यभिधीयते। अतस्तत्सादृश्यात् प्रधानकर्मत्वम्। हेत्वन्तरमाह—

'फलनिर्वृत्तेश्चे'ति ॥१४॥ 'स्तुतस्य स्तुतमसि'[61] (तै० स० ३-२-७-१) इति स्तोत्रानु-

---

[60] अग्निष्टुति श्रूयते। अग्निष्टुन्नामकः कश्चन सोमयागः। अग्निष्टोमसंस्थाकज्योतिष्टोमस्य विकृतिः। 'त्रिवृदग्निष्टुदग्निष्टोमः' इति वाक्यविहितः स्वर्गफलकः। अत्र सर्वे ग्रहा आग्नेयाः कर्तव्या भवन्ति। प्रकृतितो विभिन्नदेवताकेषु स्तोत्रशस्त्रमन्त्रेष्वतिदेशेन प्राप्तेषु तत्र यागानामाग्नेयत्वानुसारेणाग्निपदोहेनैव स्तोत्रशस्त्रमन्त्राः प्रयोक्तुं शक्यन्ते पूर्वपक्षे। तथासति—'आग्नेयीषु स्तुवते' 'आग्नेयीः शंसति' इति विधिश्रवणमग्निष्टुति निरर्थकं स्यात्। सिद्धान्ते तु—स्तोत्रशस्त्राणां देवतास्मारकत्वाभावात् नोहस्य प्रयोजनम्, किन्तु प्राकृतमन्त्राणां बाधेन मन्त्रान्तरविधानमिति न तयोर्विध्योरानर्थक्यम्।

किञ्च स्तोत्रं शस्त्रमिति व्यपदेशभेदेनापि स्तोत्रशस्त्रयोर्न संस्कारकर्मत्वम्। देवतास्मारकत्वेनोभयोरेकरूपत्वात् स्तोत्रं शस्त्रमिति विभागस्यानुपयुक्तत्वं स्यात्। प्रधानकर्मत्वे तु व्यपदेशभेदस्सङ्गतो भवेत्। किञ्च प्रायः सर्वाणि प्रधानकर्मविधायकवाक्यानि द्वितीयान्तपदघटितानि भवन्ति। यथा— 'अग्निहोत्रं जुहोति' 'समिधो यजति' 'तनूनपातं यजति' इति, तथैव 'प्रउगं शंसति' 'निष्केवल्यं शंसति' इतीमान्यपि वाक्यानि। अतस्तत्सादृश्यात्प्रधानकर्मविधायकत्वमेवैषाम्।

[61] स्तुतस्य स्तुतमसि। स्तोत्रमनुमन्त्रयत इति स्तोत्रानुमन्त्रणम्। 'शस्त्रस्य शस्त्रमसि' शस्त्रमनुमन्त्रयत इति शस्त्रानुमन्त्रणम्। अनयोर्मन्त्रयोः स्तुतशस्त्रे प्रति फलनिष्पत्तिः प्रार्थ्यते—'इन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषम्, सा मे सत्याशीर्देवेषु भूयाद् ब्रह्मवर्चसं मा गम्यात्' इति। प्रार्थनाक्रियायाः 'वनामहे' इत्याद्यायाः कर्म स्तोत्रं शस्त्रञ्च, ननु

मन्त्रणमाम्नायवाक्यशेषे स्तोत्रफलमेवमाम्नातम्– 'इन्द्रियावन्तो वनामहे धुक्षीमहि प्रजामिषमि'ति (तै० सं० ३-२-७-२)। न तु देवताप्रयुक्तं फलमाम्नातम्। अतो न देवतासंस्कारः। किन्तु प्रधानकर्मं वेति स्थितम्। अनेन निर्णयेन फलं विकृतिषूहाभावः[62]। संस्कारपक्षे तु यस्यां विकृतौ देवतान्तरमस्ति तत्र तद्बोधकं पदमूहनीयं स्यात्। तन्मा भूदिति प्रधानकर्मत्वमुक्तम्। एतच्च दशमाध्याये सूत्रितम्– 'ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वाद् विकारः स्यात्'– (जै० १०-४-४९) इति। अत्र [63]संग्रहश्लोकौ—

प्रउगं शंसतीत्यादौ गुणतोत प्रधानता।
दृष्टा देवस्मृतिस्तेन गुणता स्तोत्रशस्त्रयोः॥
स्मृत्यर्थत्वे स्तौतिशंस्योर्धात्वोः श्रौतार्थबाधनम्।
तेनादृष्टमुपेत्यापि प्राधान्यं श्रुतये मतम्॥ इति (जै० न्या० २-१-५।)

अग्निष्टोमे सुत्यादिने सूर्योदयात् पूर्वं प्रेषितो होता प्रातरनुवाकमनुब्रूयात्। एतच्चैतरेयब्राह्मणे प्रपञ्चितम्– 'देवेभ्यः प्रातर्यावभ्यो होतरनुब्रूहीत्याहाध्वर्युः०' (ऐ० ब्रा० २-१५) इत्यादि ब्राह्मणम्। तस्मिंश्च प्रातरनुवाकेऽग्निमीळ इत्यादि सूक्तमन्तर्भूतम्। तच्च व्याख्यातम्। प्रातःसवने वैश्वदेवग्रहणादूर्ध्वं प्रउगशस्त्रं होत्रा शंसनीयम्। तच्च शस्त्रं 'वायवायाही'त्यादिसप्ततृचात्मकम्। एतच्च ब्राह्मणे 'ग्रहोक्थम्०' (ऐ० ब्रा० ३-१) इत्यादिखण्डे प्रपञ्चितम्, तथा पञ्चमाध्याये 'स्तोत्रमग्र शस्त्राद्०' (आ० श्रौ० ५-१०) इति खण्डे सूत्रितञ्च। अत्रेयमनुक्रमणिका– 'वायो वायव्यैन्द्रवायवमैत्रावरुणास्तृचाः, अश्विना द्वादशाश्विनैन्द्रवैश्वदेवसारस्वतास्तृचाः सप्तैताः प्रउगदेवताः' (अनु० १-१-) इति। अस्यायमर्थः—वायवायाहीत्यादिकं नवर्चं सूक्तम्। 'अग्निं नवे'त्यतो नवशब्दानुवृत्तेः। तत्राद्यस्तृचो वायुदेवताकः। द्वितीय इन्द्रवायुदेवताकः। तृतीयो मित्रावरुणदेवताकः। अश्विनेत्यादिकं द्वादशर्चं सूक्तम्। तत्राद्यस्तृच आश्विनः। द्वितीय ऐन्द्रः। तृतीयो वैश्वदेवः। चतुर्थः सारस्वतः। तेषु

---

तत्रोपसर्जनीभूता देवता। 'न हि स्वामिनि स्थिते कश्चिद्दासान् प्रार्थयते फलम्' इति न्यायेन स्तोत्रशस्त्रगुणभूतां देवतां प्रति प्रार्थनाऽनुचिता। स्तुतशस्त्रयोर्देवताप्रकाशनार्थत्वे तां प्रत्येव प्रार्थना समुचिता, किन्तु स्तुतशस्त्रे प्रत्येवात्र फलप्रार्थना प्रतीयते। तदिदं स्तुतशस्त्रयोः प्रधानकर्मत्व एवोपपद्यतेति सिद्धान्त्याशयः।

[62] विकृतिषूहाभावः। विचारस्य फलफलिभावं प्रशंसति—विकृतिष्विति। प्रकृतितः कार्यमुखेन विकृतौ प्राप्तस्यान्यथाभाव ऊहः। स चायमूहः स्तोत्रशस्त्रयोः संस्कारकर्मत्वे स्यात् प्रधानकर्मत्वे तु नोहः। ऊहाभाव एव निर्णीतो दशमे–'ग्रहाणाम्' इत्यधिकरणे।

[63] श्लोकयोरर्थः ५६ टिप्पण्यां विवृतः। 'अग्निष्टोमे' 'सुत्यादिने' प्रातरनुवाकम् इत्यादीनां शब्दानामप्यर्थः पूर्वमेव विवृतः। सुत्यादिने प्रातः यान्ति यज्ञभूमिमागच्छन्ति इति प्रातर्यावाणो देवाः–अग्निः उषा अश्विनौ च तेभ्यो हे होतः! अनुकूला ऋचो ब्रूहीति प्रैषवाक्यस्य 'देवेभ्यः प्रातर्यावभ्यः' इत्यस्यार्थः। 'वायो वायव्यैन्द्रवायव' इत्यनुक्रमणिकासूत्रार्थोऽपि तत्रैव विकृतः।

तृचेषु प्रतिपाद्या वाय्वादयः सरस्वत्यन्ताः सप्तसङ्ख्याकाः प्रउगशस्त्रस्य देवता इति। मधुच्छन्दसोऽनुवर्तनात् स एवर्षिः। तथैवानुवृत्त्या गायत्रं छन्दः। [64]वायव्ये तृचे प्रथमा प्रहस्यैन्द्रवायवस्यैका पुरोऽनुवाक्या। एतच्च ब्राह्मणे समाम्नातम्— 'वायव्या पूर्वा पुरोऽनुवाक्यैन्द्रवायव्युत्तरा' (ऐ० ब्रा० २-२६) इति। तथा सूत्रितञ्च— 'वायवायाहि दर्शतेन्द्रवाय इमे सुता इत्यनुवाक्ये' (आ० श्रौ० ५-५) इति।

॥ २ ॥

१-२

वायव्ये तृचे प्रथमामृचमाह। हे दर्शत[65] दर्शनीय वायो कर्मण्येतस्मिन्नायाहि आगच्छ। त्वदर्थमिमे सोमा अरंकृताः। अभिषवादिसंस्कारोऽलङ्कारः। तेषाम्— तान् सोमान्। यद्वा तेषामेकदेशमित्यध्याहारः। पाहि— स्वकीयं भागं पिबेत्यर्थः। तत्पानार्थं हवमस्मदीयमाह्वानं श्रुधि शृणु। अत्र यास्कः— 'वायवायाहि दर्शनीयेमे सोमा अरंकृता अलङ्कृतास्तेषां पिब शृणु नो ह्वानम्' (नि० १०-२) इति। दर्शतेत्यत्र [66]'भृमृदृशि०' (उ० ३-११०) इत्यादिसूत्रेण अतच्प्रत्यय औणादिकः। चित्त्वादन्तोदात्तस्यामन्त्रिततानुदात्तत्वम्। [67]'अर्तिस्तुसु०'

---

[64] वायव्ये तृचे। 'ऐन्द्रवायवं गृह्णाति' इति विहितयागस्य द्वे पुरोनुवाक्ये द्वे च याज्ये भवतः। तत्र पुरोऽनुवाक्ययोरनुष्टुप्छन्दस्कत्वं याज्ययोश्च गायत्रीच्छन्दस्कत्वमिति केषाञ्चन पक्षं प्रतिपाद्य, पुरोऽनुवाक्याया अधिकाक्षरवत्त्वं याज्याया अल्पाक्षरवत्त्वञ्चेति वैषम्यं तत्र प्रदर्श्य, याज्यापुरोऽनुवाक्ययोस्समसंख्याकाक्षरवत्त्वं पुरोऽनुवाक्यापेक्षया याज्याया अधिकाक्षरवत्त्वं वा यज्ञस्य समृद्धिकरमिति सिद्धान्तः कृत ऐतरेयब्राह्मणे। तस्मिन्प्रकरण इदं वाक्यमाम्नातम् 'वायव्या पूर्वा' इति। पूर्वा—प्रथमा पुरोऽनुवाक्या वायव्या—वायव्यतृचस्य प्रथमो मन्त्रः 'वायवायाहि दर्शत' इति। उत्तरा—द्वितीया पुरोऽनुवाक्या ऐन्द्रवायवी—'इन्द्रवायू इमे सुता' इति ब्राह्मणवाक्यस्यार्थः।

[65] हे दर्शत। वायो रूपरहितत्वाद्दर्शनीयत्वं यद्यपि बाधितम्, तथापि याज्ञिकाः वाय्वभिमानिनीं देवतां स्वीकृत्य तस्या विग्रहादिमत्त्वेन रूपवत्त्वं दर्शनीयत्वञ्चोररीकुर्वन्ति। मीमांसकास्तु शब्दमयीं देवतां स्वीकुर्वन्तस्तस्या गौणं दर्शनीयत्वं श्रवणेन्द्रियजन्यप्रत्यक्षविषयत्वेनोपपादयन्ति।

[66] 'भृ-मृ-दृशि-यजि-पर्वि-पच्यमि-तमि-नमि-हर्येभ्योऽतच्' इति सूत्रेणातच्प्रत्ययान्ताः—भरतः, मरतः, दर्शतः, यजतः, पर्वतः, पचतः, अमतः, तमतः, नमतः, हर्यत इति शब्दा निष्पद्यन्ते। तत्र 'दर्शत' इत्यस्य चित्त्वात् 'चितः' इति सूत्रेणान्तोदात्तस्वरः प्राप्तः 'आमन्त्रितस्य च' इत्यनेन बाध्यते। अतस्सर्वानुदात्तस्वरोऽयं शब्दः दर्शत इति।

---

[67] 'अर्ति-स्तु-सु-हु-सृ-धृ-क्षि-क्षु-भा-या-वा-पदि-यक्षि-नीभ्यो मन्' इति सूत्रेण मन्प्रत्ययान्ताः—अर्मः, स्तोमः, सोमः, होमः, सर्मः, धर्मः, क्षेमं, क्षोमम्, भामः, यामः, वामः, पद्मम्,

(उ० १-१४५) इत्यादिना मन्प्रत्ययान्तस्य सोमशब्दस्य नित्स्वरः। अलमित्यत्र छान्दसो रेफादेशः। [68]अरङ्कृतशब्दे समासान्तोदात्तत्वं बाधित्वाऽव्ययपूर्वपदप्रकृतिस्वरप्राप्तौ 'भूषणेऽलम्' (पा० १-४-६४) इत्यलंशब्दस्य गतिसंज्ञायां 'गतिकारक०' (पा० ६-२-१३९) इत्यादिना कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते तदपवादत्वेन 'गतिरनन्तरः' (पा० ६-२-४९) इति पूर्वपदप्रकृतिस्वरत्वम्। निपातत्वादलंशब्द आद्युदात्तः। पाहीत्यत्र पिबादेशाभावश्छान्दसः। श्रुधीत्यत्र 'श्रुशृणुपॄ०' (पा० ६-४-१०२) इत्यादिना हेर्धिभावः। [69]तिङन्तादुत्तरस्य निघातो नास्ति। 'सेह्यपिच्च' (पा० ३-३-८७) इति पित्त्वनिषेधादनुदात्ते निवारिते प्रत्ययस्वरः। हवमित्यत्र ह्वयतिधातोः 'बहुलं छन्दसि' (पा० ६-१-३४) इति सम्प्रसारणे सत्युकारान्तत्वाद् 'ऋदोरप्' (पा० ३-३-५७) इत्यप्प्रत्ययः। तस्य पित्त्वादनुदात्ते सति धातुस्वरः शिष्यते। संहितायां श्रुधीत्यस्य 'अन्येषामपि दृश्यते' (पा० ६-३-१३७) इति दीर्घः॥१॥

द्वितीयामृचमाह। हे वायो जरितार स्तोतार ऋत्विग्यजमानास्त्वामच्छ त्वामभिलक्ष्योक्थेभिराज्यप्रउगादिशस्त्रैर्जरन्ते—स्तुवन्ति। कीदृशाः? सुतसोमाः— अभिषुतेन सोमेनोपेताः। अहर्विदः— अहःशब्द एकेनाह्ना निष्पाद्येऽग्निष्टोमादिक्रतौ [70]वैदिकव्यवहारेण

---

यक्ष्मः, नेम इति शब्दास्सिध्यन्ति। नित्त्वात् 'ञ्नित्यादिर्नित्यम्' इति आद्युदात्ता इमे। तथाच—सोमाः इति स्वरसिद्धिः।

[68] अलमित्यर्थेऽरंशब्दः, तस्य 'कृत' शब्देन समासे सति 'समासस्य' इति सूत्रेणान्तोदात्तस्वरः प्राप्तः—अरङ्कृताः इति, तं बाधित्वा 'तत्पुरुषे तुल्यार्थ०' इत्यादिना पूर्वपदप्रकृतिस्वरः प्राप्तः, पूर्वपदस्य निपातत्वादाद्युदात्तः—अरङ्कृता इति स्थिते, अलंशब्दस्य गतिसंज्ञायां 'गतिकारकोपपदात्कृत्' इति कृदन्त 'कृत' पदप्रकृतिस्वरः प्राप्तः। तत्र क्तप्रत्ययस्योदात्तत्वात् अरङ्कृता इत्येव पुनर्जातम्। तस्याप्यपवादत्वेन 'गतिरनन्तरः' (कर्मार्थे क्तान्ते परेऽव्यवहितो गतिः प्रकृत्या) इति पूर्वपदप्रकृतिस्वर एव तिष्ठति। तथा च पदपाठे 'मात्रा ह्रस्वस्तावदवग्रहान्तरम्' इति प्रातिशाख्यनियमानुसारं 'अरङ्ऽकृता' इति स्वरसिद्धिः।

[69] 'तिङ्-अतिङः' इत्यत्रातिङन्तात्पदात्परस्यैव तिङन्तस्य निघातस्वरो विहितः। प्रकृते तु 'श्रुधि' इति तिङन्तं पदं 'पाहि' इति तिङन्तात्परमस्ति। अतो न निघातः, किन्तु प्रत्ययस्वर एव। तथाच श्रुधि इति भवति। संहितायां 'श्रुधि' इत्यत्र इकारस्य दीर्घश्छान्दसः।

[70] 'तिस्र एव सान्हस्योपसदः द्वादशाहीनस्य' इति (तै.सं. ६.२.५.) ज्योतिष्टोमप्रकरणे श्रूयते। 'सान्हस्य' समानेनान्हा सन्तिष्ठते यस्य सुत्या स क्रतुः सान्हः, एकदिनसाध्यसुत्याको ज्योतिष्टोमः, तस्य सान्हस्य ज्योतिष्टोमस्य तिस्र एवोपसदः—'या ते अग्नेऽयाशया' इत्यादिमन्त्रैः क्रियमाणा वैरिदुर्गोपसदनकार्यकारिण्य आहुतय उपसत्पदवाच्याः त्रित्वसंख्योपेताः 'अहीनस्य' द्विरात्राद्यहर्गणस्य ताः द्वादशसंख्योपेता भवन्तीति वाक्यस्यार्थः। एकदिनसाध्ये सोमयागे ज्योतिष्टोमेऽहःशब्दो वैदिकैर्व्यवह्रियते। अयमेव 'सान्ह'शब्देनोपात्तः। तत्र—अन्हा न हीयत इत्यहीन इति व्युत्पत्त्याऽहीनशब्दोऽपि ज्योतिष्टोमबोधको भवितुमर्हति, तदाऽव्ययपूर्व-

प्रसिद्धः। ऋत्वभिज्ञा इत्यर्थः। अर्चतिगायतीत्यादिषु चतुश्चत्वारिंशत्स्वर्चतिकर्मसु धातुषु 'जरते ह्वयति' (निघ० ३-१४) इति पठितम्। स्तुतेरप्यर्चनाविशेषत्वादौचित्येनात्र स्तुत्यर्थो जरतिधातुः। अच्छशब्दस्य संहितायां 'निपातस्य च' (पा० ६-३-१३६) इति दीर्घः। सुतसोमा इत्यत्र बहुव्रीहित्वात् पूर्वपदप्रकृतिस्वरः। अहर्विद इत्यत्र समासस्वरं बाधित्वा 'तत्पुरुषे तुल्यार्थ०' (पा० ६-२-२) इत्यादिना द्वितीयापूर्वपदप्रकृतिस्वरे प्राप्ते तदपवादत्वेन 'गतिकारकोपपदात्कृत्' (पा० ६-२-१३९) इति [71]कृदुत्तरपदप्रकृतिस्वरः ॥२॥

---

पदप्रकृतिस्वरेणाद्युदात्तस्स्यात्-अहीन इति। किन्तु मध्योदात्तोऽयं शब्दः पठ्यते वेदेषु अहीन इति। अतः 'अन्हः खः क्रतौ' इति वार्तिकेन 'तस्य समूहः' इत्यनुवृत्तिसहितेन अहन् शब्दस्य क्रतुसमूहवाचिखप्रत्ययान्तत्वं स्वीकृत्य तस्य 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' इति सूत्रेण ईनादेशविधानादयं शब्दः खप्रत्ययान्तो निष्पादनीयः। तथात्वे प्रत्ययादेरीकारस्य 'आद्युदात्तश्च' इतिप्रत्ययस्वरेण मध्योदात्तोऽयं शब्दस्सिध्यति। न च 'प्रत्ययः' 'परश्च' 'आद्युदात्तश्च' इति प्रत्ययसंज्ञासन्नियोगशिष्टेनाद्युदात्तस्वरेणान्तरङ्गत्वात् ईनादेशात्पूर्वप्रवृत्तेन ख- प्रत्ययाकारस्योदात्तत्वे सति खप्रत्ययान्तत्वेऽप्यहीनशब्दस्य कथं मध्योदात्तत्वमिति वाच्यम्। 'आयनादिषूपदेशिवद्वचनं स्वरसिध्यर्थम्' इति वार्तिके प्रत्ययोपदेशावस्थायामेवायनादिविधानेन ईनादेशस्य प्रत्ययसंज्ञाप्रवृत्तिदशायामेव प्रवर्तमानतया प्रत्ययस्वरेण तस्याद्युदात्तत्वे पूर्वस्याक्षरस्यानुदात्तत्वमुत्तरस्य च स्वरितत्वमित्यहीनशब्दस्य मध्योदात्तत्वोपपत्तेः। अतोऽहीनशब्दो द्विरात्रादिक्रतुगणवाचीति सिद्धम्।

अत्रायं वैदिकव्यवहारविवेकः—अहःशब्द एकदिनसाध्याग्निष्टोमपरः। तस्य विकृतय एकाहाः अहीनशब्दवाच्याः द्व्यादिद्वादशाहदिनसाध्याश्च सोमयागाः। तत्र द्वादशाहो द्विविधः—अहीनात्मकः सत्रात्मकश्चेति। सत्राहीनयोरयं भेदः—अहीनयागा एकेनैव यजमानेन सपत्नीकेन ऋत्विक्सहितेन यष्टव्याः। ते च यागा द्व्यादिद्वादशदिनपर्यन्ता एव भवन्ति। सत्रात्मकयागास्तु-द्वादशदिनादारभ्य सहस्रसंवत्सरसाध्या भवन्ति, तेषु च 'सप्तदशावराः चतुर्विंशतिपरमाः सत्रमासीरन्' इति विध्यनुसारं यजमानानां न्यूनसंख्या सप्तदश, परमसंख्या च चतुर्विंशति-र्भवति। सत्रेषु ये यजमाना त एवार्त्विज्यं कुर्युः। सत्रविधायकवाक्येषु 'आसीरन्' 'उपेयुः' इति पदानि भवन्ति, अहीनविधायकेषु च वाक्येषु यजतिपदमेव स्यात्। तत्र संवत्सरपर्यन्तं यानि सत्राणि तेषां सत्रात्मको द्वादशाहः प्रकृतिः। तत्रापि संवत्सरसाध्यं गवामयनं सत्रम् अन्येषां संवत्सरसाध्यानां सत्राणां प्रकृतिः। एवञ्च— अग्निष्टोमसंस्थाकज्योतिष्टोमस्य विकृतयः उक्थ्यादिसंस्थाः, सप्तसंस्थाकज्योतिष्टोमस्य विकृतयोऽहर्गणा द्वादशाहपर्यन्ता अहीनाः सत्रात्मको द्वादशाहश्च, सत्रात्मकद्वादशाहस्य संवत्सरपर्यन्तं साध्यास्सोमयागाः गवामयनञ्च विकृतयः, गवामयनस्य चान्ये संवत्सरसाध्यास्सोमयागा विकृतय इति स्थूलशः प्रकृतिविकृतिभावस्सिध्यति।

[71] मन्त्रगतपदानां स्वरास्तु पूर्ववदेव, तथापि सुखावबोधाय तान् प्रतिपदं बोधयामि।

वायो इति—'ओकार आमन्त्रितजः प्रगृह्यः' इति प्रातिशाख्यसूत्रेणौकारस्य प्रगृह्यसंज्ञायां 'प्रकृत्येतिकरणादौ प्रगृह्याः' (ऋक्प्राति० २.२७) (इतिकरणादौ परभूते प्रकृत्या प्रगृह्या भवन्ति) इति

तृतीयामृचमाह। हे वायो तव धेना वाक् सोमपीतये सोमपानार्थं दाशुषे दाश्वांसं दत्तवन्तं यजमानं जिगाति— गच्छति। हे यजमान त्वया दत्तं सोमं पास्यामीत्येवं वायुर्ब्रूत इत्यर्थः। कीदृशी धेना? प्रपृञ्चती— प्रकर्षेण सोमसम्पर्कं कुर्वती। सोमगुणं वर्णयन्तीत्यर्थः। उरूची— उरून् बहून् यजमानान् गच्छन्ती। ये ये सोमयाजिनस्तान् सर्वान्वर्णयन्तीत्यर्थः। [73]प्रपृञ्चतीत्यत्र 'शतुरनुमो०' (पा० ६-१-१७३) इति ङीबुदात्तः। श्लोको धारेत्यादिषु सप्तपञ्चाशत्सु वाङ्नामसु 'ग्ना धेना ग्नाः' (निघ० १-११) इति पठितम्। वर्तंतेऽयत इत्यादिषु

सूत्रेण प्रगृह्यस्य प्रकृतिस्वरः। अत्र 'वायो' इतिपदमामन्त्रितम्'। तस्य पादादौ वर्तमानत्वात् 'आमन्त्रितस्य च' इति षाष्ठिकाद्युदात्तस्वरः। 'अनुदात्तं पदमेकवर्जम्' इति ओकारस्यानुदात्तस्वरे प्राप्ते वायो इति सम्पन्नम्। संबुध्यन्तत्वादितिशब्देन पदपाठे विवरणे सति 'वायो इति' इति स्थिते इकारस्य निपाताद्युदात्तत्वे तकारोत्तरवर्तीकारस्यानुदात्तस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितस्वरः—'वायो इति' इति। उक्थशब्दस्य तृतीयाबहुवचने भिस ऐसादेशाभावश्छान्दसः। उक्थशब्दस्य प्रातिपदिकान्तोदात्तत्वम्, 'अनुदात्तं पदमेकवर्जम्' इत्युकारस्यानुदात्तत्वम्, भिसः सुप्त्वात् 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वे, 'उदात्तादनुदात्तस्य स्वरितः' इति तस्य स्वरितत्वे उक्थेभिः इति स्वरसिद्धिः। जरन्ते 'तिङ्ङतिङः' इति निघातः। त्वाम्-प्रातिपदिकान्तोदात्तस्वरः। अच्छ-'निपाता आद्युदात्ताः' इत्याद्युदात्तत्वे तत्परस्यानुदात्तस्य स्वरितः। जरितारः-तृजन्तं पदमिदम्। चित्त्वादन्तोदात्तस्वरः। 'अनुदात्तं पदं' इति जरि इत्यनयोरनुदात्तत्वे रेफोत्तराकारस्य स्वरितः। सुतसोमाः— सुतः सोमः यैस्ते इति बहुव्रीहौ 'बहुव्रीहौ पूर्वपदं प्रकृत्या' इति पूर्वपदप्रकृतिस्वरः। अहर्विदः-विदन्तीति विदः क्विप् प्रत्ययान्तः। अहः विदन्तीति अहर्विदः। 'समासस्य' इति समासान्तोदात्तः प्राप्तः। तस्यापवादः-'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युपमानाव्ययद्वितीयाकृत्याः' इति। तेन पूर्वपदप्रकृतिस्वरो जातः। अस्याप्यपवादः—'गतिकारकोपपदात्कृत्' इति। तेनोत्तरपदप्रकृतिस्वरः। उत्तरञ्च पदं विद् इति। तस्य 'धातोः' इत्यन्तोदात्तस्वरे जाते 'अनुदात्तं पदम्' इति पूर्वयोर्वर्णयोरनुदात्ते सति उत्तरस्यानुदात्तस्य स्वरितः।

[73] प्रपृञ्चती। पृची सम्पर्के इति धातुः। प्रकर्षेण पृणक्तीति प्रपृञ्चती। शतृप्रत्ययः, स्त्रीत्वे विवक्षिते ङीप् च। ङीपः पित्त्वात् 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तः प्राप्तः। तदपवादकम्—'शतुरनुमो नद्यजादी' (अनुम् यः शतृप्रत्ययस्तदन्तादन्तोदात्तात्परा नदी अजादिश्च शसादिर्विभक्तिरुदात्ता स्यात्) इति। अत्र शतृप्रत्ययान्तं पदं प्रपृञ्चत् इति, तच्चान्तोदात्तम्, तस्मात्परा 'यूस्त्र्याख्यौ नदी' इति ईकारस्य नदीसंज्ञायां तस्या उदात्तस्वरः। 'अनुदात्तं पदम्' इत्यवशिष्टानामनुदात्तस्वरः-प्रपृञ्चती इति स्वरसिद्धिः।

द्वाविंशाधिकशतसङ्ख्येषु गतिकर्मसु 'गाति जिगाति' (निघ० २-१४) इति पठितम्। [73]दाशुष इत्यत्र 'गत्यर्थकर्मणि०' (पा० २-३-१२) इति चतुर्थी। उरूचीत्यत्र गौरादित्वेन ङीषि कृते प्रत्ययस्वरः। [74]सोमपीतय इत्यत्र बहुव्रीहित्वाभावेऽपि व्यत्ययेन पूर्वपदप्रकृतिस्वरः॥३॥

ऐन्द्रवायवे तृचे प्रथमामृचमाह। [75]एतस्या ऋच ऐन्द्रवायवग्रहे द्वितीयपुरोऽनुवाक्यारूपेण विशेषविनियोगः पूर्वमेवोक्तः। हे इन्द्रवायू भवदर्थमिमे सोमाः सुताः—अभिषुताः। तैस्माद्युवां प्रयोभिरन्नैरस्मभ्यं दातव्यैः सहोपागतम्—अस्मत्समीपं प्रत्यागच्छतम्। हि यस्मादिन्दवः सोमा वां युवामुशन्ति—कामयन्ते। तस्मादागमनमुचितम्। [76]इन्द्रवायूशब्दस्यामन्त्रिताद्युदात्तत्वम्। प्रीणयन्ति भोक्तॄनिति प्रयांस्यन्नानि। प्रीञ् धातोरन्तर्भावितण्यर्थादसुन्प्रत्यये सति नित्स्वरः। गमिधातोर्लोण्मध्यमपुरुषद्विवचने 'बहुलं छन्दसि' (पा० २-४-६३) इति शपो लुकि सति 'अनुदात्तोपदेश०' (पा० ६-४-३७) इत्यादिना मकारलोपः। ततो गतमिति भवति। उन्दी क्लेदन इति धातो'रुन्देरिच्चादेः' (उ० १-१२) इत्युन्प्रत्ययः। आद्यक्षरस्येकारादेशः। तत इन्दुशब्दस्य नित्स्वरः। सोमरसस्य द्रवत्वात् क्लेदनं सम्भवति। युष्मच्छब्दादेशस्य वामित्येतस्य' अनुदात्तं सर्वमपादादौ'(पा० ८-१-१८) इत्यनुदात्तः। उशन्तीत्यस्य निघाते [77]'हि च' (पा० ८-१-३४) इति सूत्रेण प्रतिषिद्धे सति प्रत्ययस्वरः। हिशब्दस्य निपातस्वरः॥४॥

द्वितीयामृचमाह। अत्र चकारेणान्यः समुच्चीयते। सन्निहितत्वाद्वायुरेव। हे वायो त्वमिन्द्रश्च युवामुभौ सुतानामभिषुतान्सोमान् चेतथः—जानीथः। यद्वा—अभिषुतानां सोमानां विशेषमित्यध्याहारः। कीदृशौ युवाम्? वाजिनीवसू—वाजिनीशब्दो यद्यप्युषोनामसु पठितः, तथाप्यत्रासम्भवान्न गृह्यते। वाजोऽन्नम् तद्यस्यां हविःसन्ततावस्ति सा वाजिनी। तस्यां

---

[73] दाशृ दाने धातोः क्वसु प्रत्ययो निपातितः। दाश्वान् दाश्वांसौ दाश्वांसः, दाश्वांसं, दाश्वांसौ दाशुषः इत्यादिरूपाणि भवन्ति। 'दाशुषे' इति चतुर्थ्येकवचनम्। चतुर्थी च 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' इति। अत्र प्रत्यय उदात्तः, ततः पूर्वस्याक्षरस्यानुदात्तः, उत्तरस्य च स्वरितः—दाशुषे इति।

[74] सोमपीतये। सोमस्य पीतिः तस्मै सोमपीतये। अत्र समासान्तोदात्तस्वरेणैव भाव्यम्, तथापि लक्ष्यानुरोधेन पूर्वपदप्रकृतिस्वर एवेष्यते। पूर्वपदञ्च मन्प्रत्ययान्तं नित्स्वरेणाद्युदात्तम्।

[75] विषयोऽयं टिप्पण्या ६४ अङ्के विवेचितः।

[76] इन्द्रवायू। पादादौ विद्यमानं सम्बुध्यन्तमिदं पदम्। षाष्ठिकसूत्रेणाद्युदात्तस्वरः। इतिशब्देन युक्तत्वात् इकारात्पूर्वो वर्णोऽनुदात्त एव तिष्ठेत्। तथाच इन्द्रवायू इति स्वरसिद्धिः 'वायो इति' इतिवत्।

[77] निघातापवादकानि सूत्राणि टिप्पण्या ४४ अङ्के द्रष्टव्यानि।

वसत इति तौ वाजिनीवसू आमन्त्रितत्वादनुदात्तः। तौ तथाविधौ युवां द्रवत्क्षिप्रमुप समीप आयातम्—आगच्छतम्। षड्विंशतिसङ्ख्याकेषु क्षिप्रनामसु 'नु क्षिप्रं मक्षु द्रवद्' (निघ० २-१५) इति पठितम्। तत्र फिट्स्वरः ॥५॥

प्रथमस्य प्रथमे तृतीयो वर्गः।

ऐन्द्रवायवे तृचे तृतीयामृचमाह। हे वायो त्वमिन्द्रश्च सुन्वतः सोमाभिषवं कुर्वतो यजमानस्य निष्कृतं संस्कृतं संस्कर्तारं वा सोममुपायातम्— आगच्छतम्। नरा हे नरौ पुरुषौ पौरुषेण सामर्थ्येनोपेतौ। युवयोरागतयोश्च सतोर्धियाऽमुना कर्मणा मक्षु त्वरया संस्कारः सम्पत्स्यते। इत्था सत्यम्। वायो इत्यस्य 'आमन्त्रितस्य च' (पा० ६-१-१९८) इति षाष्ठिकमाद्युदात्तत्वम्। इन्द्रशब्द [78]'ऋज्रेन्द्र०' (उ० २-३१) इत्यादिना रन्प्रत्ययान्तत्वेन निपातितो 'ञ्नित्यादिर्नित्यम्' (पा० ६-१-१९७) इत्याद्युदात्तः। चशब्दः 'चादयोऽनुदात्ताः' फि० ४-१६) इत्यनुदात्तः। [79]सुन्वत इत्यत्र 'शतुरनुमो नद्यजादी' (पा० ६-१-१७३) इति विभक्तेरुदात्तत्वम्। निरित्येषः समित्येतस्य स्थाने (नि० १२-७) इति यास्कः। कृतशब्द आदिकर्मणि क्तः संस्कर्तुं प्रवृत्त इत्यर्थः। 'कुगतिप्रादयः' (पा० २-२-१८) इति [80]समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वे प्राप्ते 'थाथघञ्क्ताजबित्रकाणाम्' (पा० ६-२-१४४) इत्यन्तोदात्तः। 'गतिरनन्तरः' (पा० ६-२-४९) इति तु निस उदात्तत्वं न भवति। तद्धि कर्मणि क्ते विहितम्। निष्करोतीति निष्कृदिति क्विबन्तव्याख्याने तु 'गतिकारकोपपदात्कृत्' (पा० ६-२-१३९) इत्यकार उदात्तः स्यात्। धिया[81]। 'सावेकाचस्तृतीयादिः०' (पा० ६-१-१६८) इति विभक्तिरुदात्ता। नरा। 'सुपां सुलुक्०' (पा० ७-१-३९) इत्यादिना सम्बोधनद्विवचनस्य डादेशः। पदात्परत्वाद् 'आमन्त्रितस्य च' (पा० ८-१-१९) इत्याष्टमिको निघातः ॥६॥

मित्रं हुव इति मैत्रावरुणस्तृचो [82]गवामयन आरम्भणीये चतुर्विंशेऽहनि प्रातःसवने मैत्रा-

---

[78] 'ऋज्रेन्द्राग्रवज्र विप्र कुब्र चुब्र क्षुरखर भद्रोग्रभेर भेलशुक्र शुक्ल गौर वप्रे रा मालाः' इमे रन् प्रत्ययान्ता ऊनविंशतिसंख्याकाः।

[79] टिप्पण्या ७२ अङ्के प्रपृञ्चतीत्यत्र सूत्रार्थो विवृतः। अत्र ङस् विभक्तेरुदात्तस्वरः— 'सुन्वतः' इति।

[80] 'तत्पुरुषे तुल्यार्थ०' इत्यादिसूत्रेणाव्ययपूर्वपदप्रकृतिस्वरे निष्कृतम् इति प्राप्ते 'थाऽथघञ् क्ताजबित्रकाणाम्' (थ.अथ. घञ्.क्तअच्-अप्-इत्र-क इत्येतदन्तानां गतिकारकोपपदात्परेषामन्त उदात्तस्यात्) इति सूत्रेण क्तान्तत्वादस्यान्त उदात्तो भवति— निष्कृतम् इति।

[81] टिप्पण्या २८ अङ्के स्पष्टीकृतम्।

[82] गवामयने। टिप्पण्या ७० अङ्के सोमयागानां प्रकृतिविकृतिभावो विचारितः। तत्रैव सत्राहीनयोर्भेदोऽपि निरूपितः। गवामयनमिदं संवत्सरसाध्यं सत्रं सत्रात्मकद्वादशाहस्य

विकृतिः। द्वादशाहस्य स्वरूपमुत्तरत्र विवेचयिष्यामः। इदानीं गवामयनस्य स्वरूपं निरूपयामः—एकषष्ट्युत्तरत्रिशतं (३६१) दिनानि गवामयनस्य। पूर्वः पक्षः, विषुवम्, उत्तरः पक्ष इति दिनानां त्रेधा विभागः। तत्र पूर्वस्मिन् पक्षसि अशीत्युत्तरं शतं दिनानि (१८०) मध्ये विषुवं नामकं दिनम्, उत्तरस्मिंश्च पक्षसि अशीत्युत्तरं शतं दिनानि। पूर्वमुत्तरञ्च त्रिंशद्दिनात्मकाः षट् षट् मासा मध्ये च विषुवं दिनम्। पूर्वस्मिन् पक्षसि प्रथममासस्य द्वात्रिंशद्दिनानि, ततो द्वितीयादिपञ्चममासेषु प्रतिमासं त्रिंशद्दिनानि, षष्ठे च मासिअष्टाविंशतिदिनानि। उत्तरस्मिन् पक्षसि प्रतिमासं त्रिंशद्दिनानि इति विभागः। प्रतिदिनं 'एतेनान्हा सुत्यानि' (आश्व. श्रौ. ७.१.) इति दीक्षणीयेष्टिप्रभृतिरुदयनीयेष्ट्यन्तः सोमयागो भवन्ति। स च ज्योतिष्टोमान्तर्गतायाः कस्या अपि संस्थाया विकृतिर्भवति, सत्रात्मकद्वादशाहाच्च सत्रधर्मा अतिदिश्यन्त इति द्वादशाहस्यापि विकृतिर्गवामयनम्।

प्रथमे मासि दिनक्लृप्तिरेवं भवति—प्रथमं दिनं प्रायणीयसंज्ञकम्। प्रयन्त्यनेन स्वर्गं लोकं यजमाना इति व्युत्पत्त्या प्रायणीयशब्दो निष्पादित ऐतरेयब्राह्मणे (२.१)। आरम्भदिनमिति तदर्थः। 'अस्मिन्दिनेऽतिरात्रसंस्थाको यागः कर्तव्यः।

द्वितीयं दिनं चतुर्विंशमिति संज्ञितम्। अत्र क्रियमाणस्सोमयागः 'अथो खल्वाहुः उक्थमेव कार्यमन्हः समृद्ध्यै' इति ताण्ड्यमहाब्राह्मणवाक्यात् उक्थ्यसंस्थाकः। प्रकृतौ-उक्थ्यसंस्थाकज्योतिष्टोमे बहिष्पवमानादिषु स्तोत्रेषु त्रिवृत् पञ्चदशः सप्तदशः एकविंशः इति स्तोमाः—स्तोत्रसंख्या आसन्। किन्तु 'चतुर्विंशं भवति' (ताण्ड्य० ब्रा० ४.२.४.) इति ब्राह्मणेन सर्वेषु स्तोत्रेषु बहिष्पवमानादिषु चतुर्विंशस्तोमो विहितः। अतोऽस्य चतुर्विंशमिति नाम सम्पन्नम्। इदमेव दिनं गवामयनस्यारम्भणीयत्वेनापि परिगण्यते। अत 'आरम्भणीये चतुर्विंशे' इति वैदिका व्यवहरन्ति।

ततस्तृतीयदिनादभिप्लवषडहानुष्ठानम्। ३९ टिप्पण्याम् अभिप्लवषडहस्य संक्षिप्तं रूपं प्रदर्शितम्। इदानीमस्य विशेषतो विवरणं प्रदर्श्यते—अस्मिन् षडहे ज्योतिः गौः आयुः, आयुः गौः ज्योतिरिति क्रमेण षड्दिनानि व्यवह्रियन्ते। ज्योतिष्टोमः गोष्टोमः आयुष्टोम इति च व्यवहारः। तत्र प्रथमेऽन्हि ज्योतिष्टोमेऽग्निष्टोमसंस्था-त्रिवृद्बहिष्पवमानं पञ्चदशाज्यानि प्रातस्सवने, पञ्चदशो माध्यन्दिनः पवमानः सप्तदश पृष्ठानि माध्यन्दिने सवने, सप्तदश आर्भवपवमानः एकविंशोऽग्निष्टोम इति सायंसवने च स्तोत्रेषु स्तोमा भवन्ति। द्वितीयेऽन्हि गोष्टोमे उक्थ्यसंस्था—तत्र प्रातस्सवने बहिष्पवमानं पञ्चदशम् आज्यानि च त्रिवृत्स्तोमकानि माध्यन्दिनं सवनं सप्तदशम्, तृतीयसवनञ्चैकविंशमिति भेदः। तृतीयेऽन्हि आयुष्टोमोऽप्युक्थसंस्थाकः। स्तोमक्लृप्तिश्च ज्योतिष्टोमवत्। अस्यैव दिनत्रयस्य प्रतिलोमेन पुनरप्यनुष्ठानम्। तथा सति प्रथमं षष्ठञ्च दिनमग्निष्टोमसंस्थाकम्, मध्यवर्तीनि च चत्वारि दिनान्युक्थ्यसंस्थाकानि। अयुग्मेषु दिनेषु पृष्ठस्तोत्रे रथन्तरं साम गातव्यम्, युग्मेषु च दिनेषु तत्र बृहत्साम गातव्यम्। अयमभिप्लवष्षडहः। अयं चतुर्वारमावर्तनीयो भवति। तथा सति तृतीयदिनाच्चतुर्विंशतिदिनपर्यन्तं चत्वारोऽभिप्लवषडहा जायन्ते।

तदनन्तरं पञ्चविंशतिदिनात् पृष्ठ्यः षडह एकः। अयं पृष्ठ्यः षडहः द्वादशाहकृतौ द्वितीय-

दिनादारभ्य सप्तमदिनपर्यन्तमनुष्ठेयत्वेन विहितः। स एव गवामयनेऽप्यतिदिश्यते। तत्र प्रथमदिनेऽग्निष्टोमसंस्थाकः क्रतुः, सर्वेषु स्तोत्रेषु त्रिवृत्स्तोमः, पृष्ठस्तोत्रे च रथन्तरं साम भवति। द्वितीयतृतीययोर्दिनयोः उक्थ्यसंस्थाकौ क्रतू, सर्वेषु स्तोत्रेषु क्रमेण पञ्चदशः सप्तदशश्च स्तोमौ, पृष्ठस्तोत्रेश्च क्रमेण बृहद् वैरूपञ्च सामनी भवतः। चतुर्थे दिने षोडशिसंस्थाकः क्रतुः, स्तोत्रेषु-एकविंशः स्तोमः, पृष्ठस्तोत्रे च वैराजं साम भवति। पञ्चमषष्ठयोर्दिनयोः उक्थ्यसंस्थाकौ क्रतू, स्तोत्रेषु क्रमेण त्रिणव (२७) त्रयस्त्रिंशौ स्तोमौ, पृष्ठस्तोत्रे च शाक्वरं रैवतञ्चेति सामनी। अयं पृष्ठ्यषडहः। एवमभिप्लवस्य पृष्ठ्यस्य च षडहस्य भेदो ज्ञातव्यः। एवञ्च चत्वारोऽभिप्लवाः षडहाः एकश्च पृष्ठ्यषडह इति त्रिंशद्दिनात्मको मासः। आद्याभ्यां प्रायणीयचतुर्विंशदिनाभ्यां सह प्रथमे मासि द्वात्रिंशद्दिनानि जायन्ते।

आद्यं दिनद्वयं विहाय चतुर्णामभिप्लवषडहानामेकस्य च पृष्ठ्यषडहस्य द्वितीय-तृतीय-चतुर्थ-पञ्चमेषु च मासेषु आवृत्त्याऽनुष्ठानम्। तथा सति त्रिंशद्दिनात्मका इमे मासा भवन्ति।

षष्ठे मासि त्रयोऽभिप्लवषडहाः, एकः पृष्ठ्यषडह इति चतुर्विंशतिदिनानि जायन्ते। ततोऽभिजित्संज्ञकमेकमहः। अत्राग्निष्टोमसंस्थाकः क्रतुरनुष्ठीयते। अत्र स्तोत्रे त्रयस्त्रिंशः स्तोमः।

तदूर्ध्वं त्रयः स्वरसामानः। 'यज्ञा यज्ञा अपूर्वे' त्यस्यामृचि उत्पन्नानि सामानि स्वरसंज्ञकानि चत्वारि। तान्यत्र गीयन्त इतीमानि स्वरसामशब्देनाभिधीयन्ते। 'अग्निष्टोमा एव सर्वे कार्याः' (ताण्ड्य. ब्रा. ४. ५. २०.) इति विधिना त्रिष्वपि दिनेष्वग्निष्टोमसंस्थाकाः क्रतवो भवन्ति। 'सप्तदशा भवन्ति' (ताण्ड्य. ब्रा. ४.५.५.) इति विध्यनुसारमत्र सर्वेषु स्तोत्रेषु सप्तदश-स्तोमो भवति। पूर्वोक्तैश्चतुर्विंशतिसंख्याकैर्दिनैस्सह चत्वारीमानि दिनानीति षष्ठोऽयं मासो-ऽष्टाविंशतिदिनात्मकः। आद्याभ्यां सह त्रिंशद्दिनात्मकाः षण्मासा जायन्ते।

अनन्तरं विषुवाख्यमहः। गवामयन इदमहः प्रधानं परिगण्यते। अस्मिन्दिनेऽग्नि-ष्टोमसंस्थाकः क्रतुर्भवति। सर्वेषु स्तोत्रेष्वेकविंश एव स्तोमः। अग्निष्टोमसंस्थाकज्योति-ष्टोमापेक्षयाऽत्र सुमहद्वैलक्षण्यमाम्नातम्। तत्सर्वं ताण्ड्यमहाब्राह्मणस्य चतुर्थाध्यायषष्ठखण्डे द्रष्टव्यम्।

उत्तरस्मिन् पक्षसि पूर्वानुष्ठितस्य सर्वस्य प्रातिलोम्येनानुष्ठानं ब्राह्मणे विहितम्। 'प्रत्य-वरोहिणो मासा भवन्ति' इति ताण्ड्यब्राह्मणम्। पूर्वस्मिन् पक्षसि ये मासा अनुक्रान्तास्ते उत्तरस्मिन् पक्षसि प्रत्यवरोहिणः कार्याः। सप्तममासस्य प्रथमदिने तृतीयः स्वरसामा, द्वितीय-दिने द्वितीयः, तृतीयदिने प्रथमः, चतुर्थदिनेऽभिजित्स्थाने विश्वजित्, अनन्तरं पृष्ठ्यषडहः। त्रयस्त्रिंशारम्भतः त्रिवृदन्ततः कार्यः। अर्थात्तत्रत्यं षष्ठं दिनमत्र षडहे प्रथमं भवेत् प्रथमञ्च षष्ठं भवेत्। अनन्तरं त्रयोऽभिप्लवाः षडहाः। इमेऽपि प्रतिलोमा एव भवेयुः। आहत्य सप्तमे मास्यष्टाविंशतिदिनानि सम्पन्नानि।

ऊनत्रिंशञ्च (२९) दिनं महाव्रतमित्युच्यते। इदमपि विषुवद्दिनमिव प्राधान्येन परिगण्यते। अत्राग्निष्टोमसंस्थाकः क्रतुः कर्तव्यः। सर्वेषां स्तोत्राणां पञ्चविंशस्तोमकत्वम्।

वरुणस्य स्तोत्रियः। तत्रैवाभिप्लवषडहेऽपि विनियुक्तः। तथा चाश्वलायनेन [63]'चतुर्विंशे होताजनिष्टे'त्यादिखण्डे 'मित्रं वयं हवामहे मित्रं हुवे पूतदक्षम्' (आ० श्रौ० ७-२) इत्यादि सूत्रितम्। तथा 'अभिप्लवपृष्ठ्याहानि' इति खण्डे परिशिष्टानावापानुद्धृत्य 'मित्रं वयं हवामहे मित्रं हुवे पूतदक्षम्' (आ० श्रौ० ७-५) इति च।

तस्य मैत्रावरुणतृचस्य प्रथमामृचमाह। अहमस्मिन् कर्मणि हविःप्रदानाय पूतदक्षं पवित्रबलं मित्रं हुवे। तथा रिशादसं रिशानां हिंसकानामदसमत्तारं वरुणं हुवे—आह्वयामि। कीदृशौ मित्रावरुणौ ? घृतमुदकमञ्चति भूमिं प्रापयति या धीर्वर्षणकर्म तां घृताचीं धियं साधन्ता साधयन्तौ—कुर्वन्तौ। मित्रशब्दः पुंल्लिङ्गः प्रातिपदिकस्वरेणान्तोदात्तः। हुवे इति 'ह्वयतेर्बहुलं छन्दसि' (पा० २-४-७३) इति शपो लुकि 'ह्वः सम्प्रसारणम्' (पा० ६-१-३२) इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा० ६-१-३४) इति सम्प्रसारण उवङादेशश्च। 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघातः। पूतशब्दः प्रत्ययस्वरेणान्तोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। वरुणशब्दः 'कृवृदारिभ्य उनन्' (उ० ३-५३) इत्युनन्प्रत्ययान्तो नित्त्वादाद्युदात्तः। रिशन्ति हिंसन्तीति रिशाः शत्रवः। 'इगुपधज्ञाप्रीकिरः कः' (पा० ३-१-१३५) इति कः। प्रत्ययस्वरेणोदात्तः। तानस्यतीति रिशादाः तम्। 'सर्वधातुभ्योऽसुन्' (उ० ४-१९०) इत्यसुन्प्रत्ययः। नित्स्वरेणोत्तरपदमाद्युदात्तम्। कृदुत्तरपदप्रकृतिस्वरेण स एवावशिष्यते। शेषनिघाते सति एकादेश

---

अत्रापि प्रकृत्यपेक्षया सुमहद्वैलक्षण्यं ब्राह्मणे समाम्नातम्। अत्रत्यो विशेषः कश्चन चतुर्थसूक्ते वक्ष्यते।

सप्तममासस्यान्तिमे दिने त्रिसंस्थाकः क्रतुर्भवति। अयं सप्तमो मासः। अष्टमे मासि एकः पृष्ठ्यषडहः, चत्वारोऽभिप्लवषडहाः प्रातिलोम्येनानुष्ठेयाः। एवं नवमदशमैकादशमासा भवन्ति।

द्वादशे मासि क्रमेण त्रयोऽभिप्लवषडहाः, गोष्टोमः, आयुष्टोमः, द्वादशाहस्य मध्यवर्तीनि दशाहानि। आहत्य त्रिंशद्दिनानि जायन्ते। इदं गवामयनस्य स्वरूपम्।

एवञ्च विनियोगवाक्यस्यायमर्थः—गवामयने संवत्सरसाध्ये सत्रे यदारम्भरूपेण क्रियमाणं चतुर्विंशमहः तस्मिन्। यद्यपि चतुर्विंशमहो गवामयनस्य द्वितीयदिनम्, तथापि 'मुखं वा एतत् संवत्सरस्य' इति ब्राह्मण उक्तत्वादस्यारम्भणीयत्वोपपत्तेः। तत्र प्रातस्सवने यन्मैत्रावरुणकर्तृकमाज्यशस्त्रं तस्यायं स्तोत्रियः प्रथमपठनीयस्तृचः। स्तोत्रियानुरूपयोर्विवरणं टिप्पण्या ३९ अङ्के द्रष्टव्यम्।

[63] चतुर्विंशे। गवामयने चतुर्विंशेऽहनि होतुराज्यं शस्त्रं 'होताजनिष्ट' इति सूक्तं भवतीति सूत्रार्थः। अत्र हीनपादग्रहणात्सूक्तं ग्राह्यम्। अस्मिन् खण्डे—'आनो मित्रावरुणा' 'मित्रं वयं हवामहे' 'मित्रं हुवे पूतदक्षम्' 'अयं वां मित्रावरुणा' 'पुरूरुणा चिद्ध्यस्ति' 'प्रति वां सूर उदिते' इति षळहस्तोत्रिया मैत्रावरुणस्य' इति सूत्रितमाश्वलायनेन। इमे षट् तृचाः षळहस्तोत्रिसंज्ञया व्यवह्रियन्ते। अत्र प्रतीके पादग्रहणेन ऋच इति प्रतीयन्ते, किन्तु 'स्तोत्रिय' शब्दसामानाधिकरण्येन तृचानामेवात्र ग्रहणम्।

उदात्तेनोदात्तः' (पा० ८-२-५) इति सवर्णदीर्घोऽप्युदात्त एव। 'धीरित्यापः' (निघ० २-१) इत्यादिषड्विंशती कर्मनामसु पठितः। प्रातिपदिकस्वरेणान्तोदात्तः। [61]'घृतमञ्चतीति घृताची। 'ऋत्विग्दधृक्०'(पा० ३-२-५९)इत्यादिना क्विनि 'अनिदिताम्०'(पा०६-४-२४) इति नकारलोपः। 'अञ्चतेश्चोपसङ्ख्यानम्' (पा० वा० ४-१-६) इति ङीप्।' अचः' (पा० ६-४-१३८)इत्यकारलोपे 'चौ' (पा० ६-३-१३८) इति दीर्घत्वम्। घृतशब्दः 'नब्विषयस्यानिसन्तस्य' (फि० २-३) इत्याद्युदात्तं बाधित्वा 'घृतादीनां च' (फि० १-२२) इत्यन्तोदात्तः। 'समासस्य' (पा० ६-१-२२३) इत्यन्तोदात्तस्यापवादकं 'तत्पुरुषे तुल्यार्थ०' (पा० ६-२-२) इति पूर्वपदप्रकृतिस्वरं बाधित्वा 'गतिकारकोपपदात्कृत्' ( पा० ६-२-१३९) इति कृदुत्तरपदप्रकृतिस्वरेणोदात्तस्य धात्वकारस्य लोपे सति 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा० ६-१-१६१) इति

---

षळहस्तोत्रियसंज्ञया इमे तृचाः पृष्ठ्येऽभिप्लवे च षडहे सम्बद्धा भवन्ति। स एव सम्बन्धः—'परिशिष्टानावापान्' इत्यादिसूत्रेण बोध्यते। परिशिष्टा नाम षळहस्तोत्रियेषु ये स्तोत्रियत्वेनानुरूपत्वेन वा गृह्यन्ते ते तृचाः। तेषां क्वचिदावापो विहितः। एतादृशान् परिशिष्टानावापान् उद्धृत्य—अपसार्य,परिशिष्टावापस्थाने 'मित्रं वयं हवामहे, मित्रं हुवे पूतदक्षम्' इत्यादीनावपेदिति सूत्रार्थः।

[61] घृतमञ्चति। घृतमुदकमञ्चति प्रापयतीति घृताची। अञ्चु गतिपूजनयोरिति धातोः 'ऋत्विग् दधृक्स्रग् उष्णिग् अञ्चु युजिक्रुञ्चाञ्च' इति सूत्रेण क्विन्प्रत्ययः। धातोरुकार इत्। अञ्च् क्विन् इति स्थिते 'अनिदितां हल उपधायाः क्ङिति' (हलन्तानामङ्गानामुपधाया नस्य लोपस्स्यात् किति ङिति च परे) इति सूत्रेण नकारस्य लोपे सति अच् क्विन् इति स्थिते कनावितौ, इकार उच्चारणार्थः। अच्व् इति जाते 'वेरपृक्तस्य' इति वकारलोपे, 'अञ्चतेश्चोपसंख्यानम्' इति स्त्रीत्वविवक्षायां ङीपि कृते अच् ई इति स्थिते, 'अचः' (लुप्तनकारस्याञ्चतेर्भसंज्ञकाकारस्य लोपः) इत्यकारलोपे घृतपदयोगेन घृत च् ई इति जाते, 'चौ' (लुप्ताकारनकारेऽञ्चतौ परे पूर्वस्याणो दीर्घः) इति सूत्रेण तकारोत्तराकारस्य दीर्घे जाते, घृताची इति रूप सिध्यति।

अत्र घृतशब्दस्य क्लीबलिङ्गत्वात् [39]'नब्विषयस्यानिसन्तस्य' (नप् नपुंसकम्, तद्विषयस्य इसन्तभिन्नस्यादिरुदात्तस्स्यात्) इति फिट्सूत्रेणाद्युदात्तस्वरः प्राप्तः, तं बाधित्वा [40] 'घृतादीनाञ्च' इत्यन्तोदात्तो घृतशब्दो भवति। ङीपः पित्वादनुदात्तस्वरः। तथा च घृताची इति तिष्ठति। तत्र समासस्वरेऽन्तोदात्ते प्राप्ते 'तत्पुरुषे तुल्यार्थ०' इत्यादिना पूर्वपदप्रकृतिस्वर एव स्यास्यति। तमपि बाधित्वा 'गतिकारकोपपदात्कृत्' इत्युत्तरपदप्रकृतिस्वरः प्राप्तः। उत्तरपदन्तु धातुः। धातोरकारः 'अचः' इत्यनेन लुप्तः। तस्य लोपे सति 'अनुदात्तस्य च यत्रोदात्तलोपः'(यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तस्स्यात्)इति ङीपःउदात्तः प्राप्तः। तदाच घृताची इति सम्पद्यते। अनन्तर [42]'चौ' (लुप्ताकारेऽञ्चतौ परे पूर्वस्यान्तोदात्तस्स्यात्) इति सूत्रेण पूर्वपदान्तोदात्तत्वं जायते। तथा सति घृताची इति सिध्यति।

ङीप उदात्तत्वे प्राप्ते 'चौ' (पा० ६-१-१२२) इति पूर्वपदान्तोदात्तत्वम्। साधन्ता। राध साध संसिद्धावित्यस्मादन्तर्भावितण्यर्थाल्लटः शत्रादेशे श्नं बाधित्वा व्यत्ययेन शप्। अदुपदेशत्वादुपरि शतृप्रत्ययस्य लसार्वधातुकानुदात्तत्वम्। द्वितीयाद्विवचनस्य शपश्च 'अनुदात्तौ सुप्पितौ' (पा० ३-१-४) इत्यनुदात्तत्वे 'धातोः' (पा० ६-१-१६२) इति धातुस्वर एव शिष्यते। 'सुपां सुलुक्०' (पा० ७-१-३९) इत्यादिना विभक्तेराकारादेशः ॥७॥

द्वितीयामृचमाह। हे मित्रावरुणौ युवां क्रतुं प्रवर्तमानमिमं सोमयागमाशाथे—आनशाथे—व्याप्तवन्तौ। केन निमित्तेन? ऋतेन—अवश्यंभावितया सत्येन फलेन। अस्मभ्यं फलं दातुमित्यर्थः। कीदृशौ युवाम्? ऋतावृधौ—'ऋतमित्युदकनाम' (नि० २-२५), 'सत्यं वा यज्ञं वा' (नि० ४-१९) इति यास्कः। उदकादीनामन्यतमस्य वर्द्धयितारौ। अत एव ऋतस्पृशा—उदकादीन् स्पृशन्तौ। कीदृशं क्रतुम्? बृहन्तम्—अङ्गैरुपाङ्गैश्चातिप्रौढम्। ऋतशब्दो घृतादित्वादन्तोदात्तः। मित्रावरुणावित्यत्र मित्रश्च वरुणश्चेति मित्रावरुणौ। 'देवताद्वन्द्वे च' (पा० ६-३-२६) इति पूर्वपदस्यानङादेशः। ऋतस्य वर्द्धयितारावित्यर्थेऽन्तर्भावितण्यर्थाद् वृधेः क्विप्। 'अन्येषामपि दृश्यते' (पा० ६-३-१३७) इति पूर्वपदस्य दीर्घः। ऋतस्पृशा—'सुपां सुलुक्०' (पा० ७-१-३९) इति आकारादेशः। [85]मित्रावरुणावित्याद्यामन्त्रितत्रयस्य स्वस्वपूर्वपदात्परत्वाद् 'आमन्त्रितस्य च' (पा० ८-१-१९) इत्याष्टमिको निघातः।

---

[85] मित्रावरुणौ। 'ऋतेन मित्रावरुणौ' इति मन्त्रे मित्रावरुणादीनि त्रीणि पदान्यामन्त्रितानि। त्रयाणामपि 'आमन्त्रितस्य च' इत्याष्टमिकनिघातस्वरो दृश्यते। अत्र सायणाचार्यैः प्रदर्शितविचारस्य सारो निरूप्यते। [43] 'सुबामन्त्रिते पराङ्गवत्स्वरे' (आमन्त्रिते पदे परे सति सुबन्तं पदं परस्याङ्गवद्भवति स्वरे कर्तव्ये) इति सूत्रेण 'ऋतेन' इति पदं परस्य 'मित्रावरुणौ' इत्यस्याङ्गभावमापद्यते। आमन्त्रितानुप्रवेशेन तस्य पादादित्वात्षाष्टिकाद्युदात्तस्वरः प्राप्तः 'ऋतेन' इति। मध्योदात्तन्तु पदमिदं ऋतेन इति परिपठ्यते। कास्योपपत्तिरिति शङ्का।

तस्यास्समाधानम्—पराङ्गवद्भावः पदविधिरयम्। स च [44] 'समर्थः पदविधिः' इति सामर्थ्यमपेक्ष्य प्रवर्तते। ऋतेनपदस्य मित्रावरुणौपदेन सहान्वेतु यदि सामर्थ्यं तर्हि पदविधिरयं पराङ्गवद्भावः प्रवर्तेत। द्वावपि शब्दौ 'आशाथे' इति क्रियापदेनान्वितौ, न परस्परम्। अतः परस्परान्वयासामर्थ्यान्न पराङ्गवद्भाव इति मध्योदात्तम् ऋतेनपदमिति। यत्र च परस्परान्वयो वर्तते तत्र सामर्थ्ये सति पराङ्गवद्भावः, तेन चाद्युदात्तस्वरो भवत्येव। यथा—'मरुतां पितः' इति। अत्र मरुत्सम्बन्ध्यभिन्नः पिता इति शाब्दबोधात् षष्ठ्यन्तस्य मरुच्छब्दस्यामन्त्रितेन 'पितः' इत्यनेन पराङ्गवद्भावे जाते 'मरुतां' इत्याद्युदात्तः। यद्यपि मरुच्छब्द उतिप्रत्ययान्तः, प्रत्ययस्वरेण च मरुतां इत्येवान्यत्र भवति, तथापि 'मरुतां पितः' इत्यत्र सामर्थ्येन पराङ्गवद्भावे सत्याद्युदात्त एवायम्। ऋतेन मित्रावरुणावित्यत्र तु तादृशसामर्थ्याभावात् आद्युदात्तो न भवति। ऋतेन इत्येव तिष्ठति।

'ऋतावृधौ' इति द्वितीयामन्त्रितपदस्य द्वितीयपादादौ विद्यमानस्यापि (८९) 'आमन्त्रितं पूर्वमविद्यमानवत्' इति सूत्रेण पूर्वस्यामन्त्रितस्य 'मित्रावरुणौ' इत्यस्याविद्यमानवद्भावे जाते

ननु ऋतेनेत्येतस्य 'सुबामन्त्रिते पराङ्गवत्स्वरे' (पा० २-१-२) इति पराङ्गवद्भावेनामन्त्रितानुप्रवेशात्पादादित्वेन पदादपरत्वेन वाऽष्टमिकनिघाताभावाद् 'आमन्त्रितस्य च' (पा० ६-१-१९८) इत्याद्युदात्तेन भवितव्यमिति चेत्– न ; पराङ्गवद्भावस्य सुबामन्त्रिताश्रयत्वेन पदविधित्वात् 'समर्थः पदविधिः' (पा० २-१-१) इति नियमात्। इह च ऋतेन मित्रावरुणावित्यनयोराशाथे इत्याख्यातेनैवान्वयेन परस्परमसामर्थ्यात्। यत्र पुनः परस्परान्वयेन सामर्थ्यं तत्र पराङ्गवद्भावात्पादादेराद्युदात्तत्वं भवत्येव। 'मरुतां पितस्तदहं गृणामि' (तै० स० ३-३-९-१) इति यथा। 'मृग्रोरुतिः' (उ० १-९४) इत्युतिप्रत्ययान्तत्वेन 'पृश्निय वै पयसो मरुतो जाताः' (तै० सं० २-२-११-४) इत्यादावन्तोदात्तोऽपि हि मरुच्छब्दो 'मरुतां पितः' (तै० सं० ३-३-८-१) इत्यत्र सामर्थ्यात्पराङ्गवद्भावादेव ह्युदात्तो जातः। प्रकृते त्वृतेनेत्यस्यासामर्थ्यादेव न पराङ्गवद्भाव

---

ऋतेनपदात्परतस्त्वान्निघातस्वरे न काचित्क्षतिः। यथा– 'इमं मे गङ्गे यमुने सरस्वति शुतुद्रि स्तोमं सचता परुष्ण्या' इति मन्त्रस्य पदपाठे इमं मे गङ्गे यमुने सरस्वति शुतुद्रि इति पदानां स्वरेषु सत्सु यमुनेशब्दस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्यामन्त्रितस्य 'गङ्गे' इत्यस्याविद्यमानवद्भावे जातेऽपि मेपदात्परतस्त्वान्निघातो भवति।

अत्रेयमाशङ्का –मित्रावरुणोपदं विशेष्यम्, तस्य विशेषणमृतावृधाविति। तत्र ४६ 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (आमन्त्रिते समानाधिकरणे भिन्नप्रवृत्तिनिमित्तानामेकस्मिन्नन्वये वृत्तिरत्र सामानाधिकरण्यमभिप्रेतम्। अर्थाद् विशेष्यविशेषणभावेनैकार्थवाचिनि सति, 'सामान्यवचनं विशेषवचनं नाविद्यमानवद्भवति' इति सूत्रेण मित्रावरुणोपदस्याविद्यमानवद्भावाभावात् ऋतावृधोपदं पादादौ वर्तमानं कथं निहन्यते। अतएव 'इमं मे गङ्गे' इति मन्त्रे 'शुतुद्रि' पदं सम्बुध्यन्तं पादादौ वर्तमानं सरस्वतिपदस्याविद्यमानवद्भावाभावान्न निहन्यते, किन्त्वाद्युदात्तमेव। अतश्च ऋतावृधाविति पदेनाप्याद्युदात्तेन भवितव्यमिति।

अत्रेदं समाधानम्–सरस्वतिशुतुद्रिपदयोः परस्परान्वयाभावात्सामर्थ्यं नास्तीति न तत्र सरस्वतिपदस्य पराङ्गवद्भावः। अत एव पादादित्वात् शुतुद्रिपदमाद्युदात्तम्। मित्रावरुणावृतावृधावित्यत्र तु सामान्यविशेषरूपेण परस्परान्वये सामर्थ्यसत्त्वात् मित्रावरुणशब्दस्य पराङ्गवद्भावेन भवितव्यमिति विशेषस्य सत्त्वात् 'नामन्त्रित' इति अविद्यमानवद्भावनिषेधे सति पराङ्गवद्भावमाश्रित्य ऋतावृधाविति पदं निहन्यते। शुतुद्रिसरस्वतिपदयोश्च परस्परान्वयसामर्थ्याभावात् सरस्वतिपदस्य न पराङ्गवद्भाव इति शुतुद्रिपदमाद्युदात्तमेवेति।

पुनरपीयं शङ्का समुदेति–मित्रावरुणोपदस्य पराङ्गवद्भावे जाते तत्पादादावागच्छति। अतस्तत्राद्युदात्त एव, कथं तस्य निघात इति। तत्समाधानन्तु– 'मित्रावरुणौ' इत्यस्य निघातः ऋतेनपदाधीनः-पदात्परतो विद्यमानस्यामन्त्रितस्य 'आमन्त्रितस्य च' इत्यनेन निघातविधानात्। 'सुबामन्त्रित' इति पराङ्गवद्भावस्तु पूर्वं सुबन्तं परञ्चामन्त्रितमाश्रित्य प्रवर्तते। स च ऋतावृधावित्यत्रास्ति। अतस्तत्र निघात इति।

पराङ्गवद्भावो यथा सामर्थ्याधीनः पदविधिः, तथैव निघातोऽपि पदविधिः। ऋतेनपदस्य मित्रावरुणोपदेतत्योस्तु सामर्थ्याभावात्कथं मित्रावरुणोपदस्य निघात इति पुनरप्याशङ्का भवति।

इति। ऋतावृधावित्यत्र द्वितीयामन्त्रितस्य निघाते कर्तव्ये 'आमन्त्रितं पूर्वमविद्यमानवत' (पा० ८-१-७२) इति प्रथमामन्त्रितेनाविद्यमानवद्भवितव्यमिति चेत्, भवतु। अत एव तस्याव्यवधायकत्वावृतेनेति प्रथमपदात्परत्वेनैव द्वितीयामन्त्रितं निहनिष्यते। यथा 'इमं मे गङ्गे यमुने' (ऋ० सं० १०-७५-५) इत्यादौ गङ्गेशब्दस्याविद्यमानवद्भावेऽपि तस्याव्यवधायकत्वादेव मे इत्येतदेव पदमुपजीव्य यमुनेशब्दस्य निघातः। किञ्च प्रकृते मित्रावरुणावित्यामन्त्रितं सामान्यवचनम्। तस्य विशेषणतया विशेषवचनमृतावृधाविति। अतो 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' (पा० ८-१-७३) इति पूर्वस्याविद्यमानवद्भावप्रतिषेधादपि निरन्तरायो द्वितीयस्य निघातः। नन्वेवमपि '०अपादादौ' (पा० ८-१-१८) इत्यनुवृत्तेर्ऋतावृधावित्यस्य द्वितीयपादादित्वान्न भवितव्यं निघातेन। अत एवं हि 'इमं मे गङ्गे यमुने' (ऋ० स० १०-७५-५) इत्यत्र शुतुद्रिपदस्य पदात्परस्यामन्त्रितस्यापि पादादित्वादेवानिघातादाद्युदात्तत्वं जातम्। तद्वदत्रापि भवितव्यं वक्तव्यो वा विशेष इति। उच्यते—मित्रावरुणोपदस्य 'सुबामन्त्रिते०'

---

तस्यास्समाधानन्तु—मित्रावरुणोपदस्य निघातस्वरकरणाय ऋतेनपदमुपजीव्यमस्ति। उपजीव्योपजीवकयोरेकवाक्यस्थत्वमस्ति। एतेनैव निघातो भवितुमर्हति, नात्र सामर्थ्यसापेक्षा। एतदेवाभिधीयते— 'समानवाक्ये निघातयुष्मदादेशा वक्तव्याः' इति वार्तिकेन। अतो मित्रावरुणपदस्य निघाते न काचित्क्षतिरिति।

अयमेव विषयः तृतीयसूक्तस्य प्रथममन्त्रस्य भाष्येऽपि सायणाचार्येरुद्धृतः। तत्र मन्त्रस्य पदपाठे 'अश्विना यज्वरीः इषः, द्रवत्पाणी इति द्रवत्पाणी, शुभः पती। पुरुभुजा चनस्यतम्' इति पदानां स्वराः। अत्र-इष इति पदं प्रथमपादान्ते वर्तमानं 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति सूत्रेण पराङ्गवद्भावं-द्रवत्पाणीत्यामन्त्रितानुप्रवेशं यदि भजेत मित्रावरुणावृतावृधावित्यत्रेव, तर्हि ऋतावृधावित्यस्य यथा निघातः तथैव द्रवत्पाणीशब्दस्यापि द्वितीयपादादौ वर्तमानस्य निघात एवावश्यकः, कथमाद्युदात्तत्वमिति शङ्का भवति। तस्या इदमुत्तरम्—परस्परान्वये ययोः पदयोस्सामर्थ्यमस्ति तत्रैव 'सुबामन्त्रिते' इति सूत्रं प्रवर्तते। 'मित्रावरुणौ ऋतावृधौ' इत्यनयोः विशेष्यविशेष्यणभावेन परस्परान्वयोऽस्तीति पराङ्गवद्भावो मित्रावरुणोपदस्य। प्रकृते तु—इषः द्रवत्पाणीत्यनयोः न तादृशं सामर्थ्यमिति न 'इषः' इत्यस्य पराङ्गवद्भाव इति द्रवत्पाणीपदमाद्युदात्तमेव। यथा 'सरस्वति शुतुद्रि' इत्यत्र द्वितीयमामन्त्रितं शुतुद्रिपदम् इति।

एवं 'शुभ' इति पदं षष्ठ्यन्तम्। अस्य 'पती' इत्यामन्त्रितेनान्वयसामर्थ्यमस्ति, यथा 'मरुतां पितः' इत्यत्र। सामर्थ्ये सति पराङ्गवद्भावः। तेन चामन्त्रितानुप्रवेशेन तत्र निघातस्वरेण भवितव्यम्, कथमाद्युदात्तत्वमिति शङ्कायाम्-'आमन्त्रितं पूर्वमविद्यमानवत्' इति सूत्रानुसारं पूर्वस्यामन्त्रितस्य द्रवत्पाणीपदस्याविद्यमानत्वात् पदादौ शुभ इति पदं भवतीति न निघातस्तस्य, किन्त्वाद्युदात्तत्वमेवेति समाधानम्। 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति सूत्रन्तु प्रकृते न प्रवर्तते, शुभपदस्य द्रवत्पाणीपदस्य च विशेष्यविशेषणत्वाभावात्। 'मित्रावरुणौ ऋतावृधौ' इत्यत्र तु तदासीत्। अतस्तत्र सूत्रस्य प्रवृत्तिः।

(पा० २-१-२) इति पराङ्गवद्भावेन परानुप्रवेशादेव ऋतावृधावित्यस्य न पादादित्वम्। शुतुद्रिपदमपि तद्वदेवमेव पूर्वस्य सरस्वतिपदस्य पराङ्गवद्भावेन न पादादिरिति निहन्येतेति चेत् ; पराङ्गवद्भावस्तावत्सुबन्तमामन्त्रितं चाश्रित्य प्रवृत्तः पदविधिः। अतस्तयोः सत्येव परस्परान्वये

---

एवम्—'अश्विना पुरुदंससा' इति मन्त्रेऽपि विषयस्यास्य विचारः प्रवर्तितो भाष्यकारैः। अत्र—अश्विना पुरुदंससा नरा धिष्ण्या इति चत्वारि पदान्यामन्त्रितान्याद्युदात्तानि। प्रथम-चतुर्थामन्त्रितयोः पादादित्वादाद्युदात्तत्वं निर्विवादम्। द्वितीयतृतीययोर्विषये तस्योपपत्तिः कर्तव्या। तत्र 'आमन्त्रितं पूर्वमविद्यमानवत्' इति सूत्रेण प्रथमस्यामन्त्रितस्याविद्यमानवद्भावे सति द्वितीयस्यामन्त्रितस्य पादादित्वादाद्युदात्तत्वे न काचित् क्षतिः। अविद्यमानवद्भावनिषेध-स्तु 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इति सूत्रेण न भवति, अश्विपुरुदंसश्शब्दयोः सामान्यविशेषकत्वाभावात्। यथाऽश्विशब्दस्सामान्यवचनस्तथैव पुरुदंसश्शब्दोऽपि। उभाव-पि शब्दावश्विनोरूढौ। एकस्या एव देवतायाः प्रसिद्धाया अनेकनामविशेषोल्लेखनं स्तुत्युपयोगि भवतीति नानयोश्शब्दयोः पर्यायत्वम्। अत उभयोरपि सामान्यवचनत्वान्नात्राविद्यमान-वद्भावप्रतिषेध इति पूर्वस्यामन्त्रितस्याविद्यमानत्वात् द्वितीयस्याद्युदात्तत्वमेव। अत्रत्योऽन्यो विशेषस्तस्मिन्नेव मन्त्रे प्रतिपादयिष्यते।

एवमेव 'अग्निं दूतं वृणीमहे' इति द्वादशे सूक्ते पञ्चमे मन्त्रेऽपि विषयोऽयं भाष्यकारै-र्दर्शितः। तत्र 'घृताहवन दीदिवः' इति पदद्वयमामन्त्रितम्। प्रथमस्यामन्त्रितस्य पादादि-त्वादाद्युदात्तः स्वरः 'घृताहवन' इति। द्वितीयस्य च निघातस्वरः 'दीदिवः' इति। अत्र 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्याविद्यमानत्वे द्वितीयस्य पादादित्वादाद्युदात्तत्वमेव, न निघातः। अविद्यमानवद्भावनिषेधस्तु—'नामन्त्रिते' इति सूत्रेण न भवितुमर्हति, पदद्वय-स्यापि अग्नेपदस्य विशेषणत्वात् परस्परान्वयसामर्थ्याभावात्। अतः कथं द्वितीयामन्त्रितस्य निघात इति शङ्का। समाधानन्तु—लक्ष्यानुसारेण प्रथमामन्त्रितं विशेष्यं द्वितीयञ्च द्योतना-र्थत्वेन विशेषणम्, विशिष्टस्याग्नेर्विशेषणत्वमिति विवक्षायां 'नामन्त्रिते' इति सूत्रस्य प्रवृत्तिर्भवितुमर्हति। तेन च पूर्वस्यामन्त्रितस्य विद्यमानत्वाद् द्वितीयस्य निघातोपपत्तिरिति।

एवञ्चायमत्र निष्कर्षः—'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यस्योदाहरणम्—'मित्रावरुणा-वृतावृधौ' 'गङ्गे यमुने' 'द्रवत्पाणी शुभः' इति। प्रत्युदाहरणञ्च—'सरस्वति शुतुद्रि' 'घृताहवन दीदिवः' इति। 'नामन्त्रिते समानाधिकरणे सामान्यवचनम्' इत्यस्योदाहरणम्-'मित्रावरुणावृतावृधौ' 'घृताहवन दीदिवः' इति। प्रत्युदाहरणन्तु-'द्रवत्पाणी शुभः' 'अश्विना पुरु-दंससा' इति। 'सुबामन्त्रितं पराङ्गवत्स्वरे' इत्यस्योदाहरणम्—'मरुतां पितः' इति। प्रत्यु-दाहरणन्तु-ऋतेन मित्रावरुणौ' इति।

पराङ्गवद्भावेन भवितव्यम्, 'समर्थः पदविधिः' (पा० २-१-१) इति नियमात्। शुतुद्रि-सरस्वतिपदयोश्च न परस्परेणान्वयः किन्तु सचतेत्यनेनेत्यसामर्थ्यान्न पराङ्गवद्भावः। प्रकृते तु मित्रावरुणावृतावृधाविति द्वयोरपि सामानाधिकरण्येन परस्परान्वयादस्ति सामर्थ्यमिति भवितव्यं पराङ्गवद्भावेन। यथा 'मरुतां पितः' (तै० सं० (३-३-९-१) इत्यत्रेति विशेषः। नन्वत एव तर्हि मित्रावरुणौपदस्य पराङ्गवद्भावेन पादादित्वाद् '०अपादादावि'ति (पा० ८-१-१८) पर्युदासादामन्त्रितनिघातो न स्यादिति चेन्न। पूर्वं सुबन्तं परञ्चामन्त्रितमाश्रित्य यः स्वरः प्रवर्तते तत्र 'सुबामन्त्रिते०' (पा० २-१-२) इति पराङ्गवद्भावः। भवति चैवंविध ऋतावृधौ-पदनिघात इति। तत्र पूर्वस्य पराङ्गवद्भावेनापादादित्वात्स प्रवर्तते। मित्रावरुणौपदनिघातस्तु पूर्वमेव पदमुपजीवति न परमामन्त्रितमिति न पराङ्गवद्भावः। ननु पराङ्गवद्भाववन्निघातोऽपि पदविधिरिति ऋतेनेत्यनेनासामर्थ्यात्ततः पदात्परस्य मित्रावरुणौपदस्य न स्यादिति चेन्न; 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' (पा० वा० २-१-१) इति निघाते पदविधावपि समानवाक्यत्वमेव पर्याप्तं न पराङ्गवद्भाववत्परस्परान्वयोऽपीत्यलम्। क्रतुम्। 'कृञः क्तुः' (उ० १-७७)। प्रत्ययस्वरेणादिरुदात्तः। आशाथे--आनशाथे 'छन्दसि लुङ् लङ्लिटः' (पा० ३-४-६) इति वर्तमाने लिट्। नुडभावश्छान्दसः ॥८॥

तृतीयामृचमाह। मित्रावरुणावेतौ देवौ नोऽस्माकं दक्षं बलमपसं कर्म च दधाते पोषयतः। कीदृशौ? कवी--मेधाविनौ। तुविजातौ--बहूनामुपकारकतया समुत्पन्नौ। उरुक्षया--बहु-निवासौ। विप्रो धीर इत्यादिषु चतुर्विंशतिसंख्याकेषु मेधाविनामसु 'कविर्मनीषी' (निघ० ३-१५) इति पठितम्। उरुतुवीत्येतौ शब्दौ द्वादशसु बहुनामसु पठितौ (निघ० ३-१)। 'ओजः पाज' इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु बलनामसु 'दक्षो वीळु' (निघ० २-९) इति पठितम्। अपशब्दः षड्विंशतिसङ्ख्याकेसु कर्मनामसु पठितः (निघ० २-१)। मित्रावरुणा। मित्रशब्दः प्रातिपदिक स्वरेणान्तोदात्तः। वरुणशब्दो नित्स्वरेणाद्युदात्तः।[86] द्वन्द्वे 'देवताद्वन्द्वे च' (पा० ६-२-१४१) इत्युभाववशिष्येते। तुविजातौ। बहूनामुपकारकतया तत्सम्बन्धित्वेन जाताविति षष्ठीसमासे समासान्तोदात्तत्वम्। [87]चतुर्थीसमासे हि 'क्ते च' (पा० ६-२-४५) इति पूर्वपदप्रकृतिस्वरः स्यात। उरूणां बहूनां क्षयावुरुक्षयौ। [88]क्षि निवासगत्योरिति धातोः क्षियन्त्यस्मिन्निति क्षयः। अधिकरण

---

[86] द्वन्द्वे। [47]'देवताद्वन्द्वे च' (द्वन्द्वे समासे उभे देवतावाचिनी पदे युगपत्प्रकृत्या भवतः) इति सूत्रेण 'मित्रावरुणौ' इत्यत्र स्वरसिद्धिः। एवम् 'इन्द्रावरुणौ' इत्युदाहरणं बोद्धव्यम्।

[87] चतुर्थीसमासे। तुविभ्यो बहुभ्यो जातौ-तुविजातौ इति समासे 'क्ते च' (क्तान्ते परे चतुर्थ्यन्तं प्रकृत्या स्यात्) इति सूत्रेण तुविशब्दप्रकृतिस्वरः प्रातिपदिकान्तोदात्तः 'तुविजातौ' स्यादित्यर्थः।

[88] क्षि निवासगत्योः। इकारान्तो धातुः। क्षियन्त्यस्मिन्निति विग्रहे 'एरच'

'एरच्' (पा० ३-३-५६) इत्यच्प्रत्ययान्तस्य 'चितः' (पा० ६-१-१६३) इत्यन्तोदात्तत्वे प्राप्ते 'क्षयो निवासे' (पा० ६-१-२०१) इत्याद्युदात्तत्वं विहितम्। समासे तु 'समासस्य' (पा० ६-१-२२३) इत्यन्तोदात्तत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरेण प्राप्तमुत्तरपदाद्युदात्तत्वं यद्यपि थाथादि-स्वरेणान्तोदात्तेन बाध्यते, तथापि 'परादिश्छन्दसि बहुलम्' (पा० ६-२-१९९) इत्युत्तरपदाद्यु-दात्तत्वं द्रष्टव्यम्। दक्षम्। दक्षतेरुत्साहकर्मणो घञ्। ञित्त्वादाद्युदात्तः। [89]आप्यते फलमनेनेत्यपः कर्म। 'आपः कर्माख्यायां ह्रस्वो नुट् च' (उ० ४-१०७) इत्यसुनन्तस्य 'अपसस्पारे' इत्यादौ नित्त्वादाद्युदात्तस्याप्यपसङ्ग्रस्यात्र व्यत्ययेन प्रत्ययाद्युदात्तत्वम्॥९॥

प्रथमस्य प्रथमे चतुर्थो वर्गः।

---

(इवर्णान्ताद् धातोरच्प्रत्ययः) इति सूत्रेणाच्प्रत्ययः। क्षि अच् इति स्थिते चकारस्य 'हल-न्त्यमि'तीत्संज्ञायां लोपे सति क्षि अ इति जाते 'सार्वधातुकार्धधातुकयोः' इतीकारस्य गुणे एकारे क्षे अ इति दशायाम् 'एचोऽयवायावः' इत्येकारस्यायादेशे क्षय इति रूपं सिध्यति। चित्त्वादन्तोदात्तत्वेऽपि तं बाधित्वा [89]'क्षयो निवासे। (निवासार्थकक्षयशब्द आद्युदात्तस्यात्) इत्यनेनाद्युदात्तः। तत उरूणां क्षयौ इति समासे कृते समासान्तोदात्तः 'उरुक्षयौ' इति। इममपि स्वरं बाधित्वा कृदुत्तरपदप्रकृतिस्वरः प्राप्तः—'उरुक्षयौ' इति। अस्यापि बाधकत्वेन थाथघञ्'क्त्वाजबित्रकाणाम्' इत्यनेनाजन्तत्वात् अन्तोदात्तस्वरः प्राप्तः—'उरुक्षयौ' इति। अस्या-पि बाधकमिदं सूत्रं [90]परादिश्छन्दसि बहुलम्' इति। तेनोत्तरपदाद्युदात्तस्वर एव तिष्ठति। 'परादिश्छन्दसि बहुलम्' इति सूत्रं समासे 'सक्थ'शब्दस्य विकल्पेनाद्युदात्तस्वरं विधातुं प्रवृत्तम्। तत्रेदं वार्तिकम्—[91]'परादिश्च परान्तश्च पूर्वान्तश्चापि दृश्यते। पूर्वादयश्च दृश्यन्ते व्यत्ययो बहुलं मतः'॥ इति। परादेरुदाहरणम्—'तुविजाता उरुक्षया' इति। अत्र पदपाठे 'तुविऽजातौ' 'उरुऽक्षयौ' इति स्वराः। परान्तस्योदाहरणम्—'नियेन मुष्टि हत्यया' इति संहितायाः पदपाठे 'नि' "येन' 'मुष्टिऽहत्यया' इति स्वराः। पूर्वान्तस्य 'विश्वायुः' इत्युदाहरणम्।

[89] आप्यते फलम्। 'आपः कर्माख्यायाम्' इत्यसुन् प्रत्ययः, धातोः ह्रस्वश्च। प्रत्ययस्य नुडागमो विकल्पेन। नुडागमपक्षे 'अप्नः' इति अभावे 'अपः' इति च सिध्यति। धातो-र्ह्रस्वोऽपि विकल्पेनैव। तेन च 'अपः अपसी अपांसि, आपः आपसी आपांसि' इति रूपाणि भवन्ति। अत्र नित्स्वरस्याद्युदात्तत्वेऽपि व्यत्ययेनान्तोदात्तत्वमिति विशेषो बोद्धव्यः। स्वरसञ्चाराय प्रथमसूक्तापेक्षयाऽस्मिन् सूक्ते पञ्चदश सूत्राणि नूतनान्यपेक्ष्यन्ते। मिलित्वैकपञ्चाश-त्सूत्राणि।

॥ ३ ॥

१-३

आश्विनस्तृचः प्रातरनुवाकस्याश्विने क्रतौ विनियुक्तः। तथा च सूत्रितम्—[९०]'अथाश्विन एषो उषाः प्रातर्युजेति चतस्रोऽश्विना यज्वरीरिषः' (आ० श्रौ० ४-१५) इति।

तत्र प्रथमामृचमाह। हे अश्विनौ युवामिषो हविर्लक्षणान्यन्नानि चनस्यतम्—इच्छतम्। भुञ्जाथामित्यर्थः। यद्यपि चनःशब्दोऽन्नवाची तथापीष इत्यनेन सह नास्ति पुनरुक्तिदोषः, इच्छामभ्युपलक्षयितुं प्रवृत्तत्वात्। वक्तव्यमुवाच, समूलकाषं कषतीत्यादौ यथा पुनरुक्त्यभावस्तद्वत्। कीदृशीरिषः? यज्वरीः—यागनिष्पादिकाः। कीदृशावश्विनौ? द्रवत्पाणी—हविर्ग्रहणाय द्रवद्भ्यां धावद्भ्यां पाणिभ्यामुपेतौ। शुभस्पती—शोभनस्य कर्मणः पालकौ। पुरुभुजा—विस्तीर्णभुजौ बहुभोजिनौ वा। अश्विना। 'आमन्त्रितस्य च' (पा० ६-१-१९८) इति षाष्ठिकमाद्युदात्तत्वम्। [९१]यज्वरीः। यागकरणानामन्नानामसिद्धिच्छन्तीतिवस्त्वव्यापारे कर्तृत्वविवक्षया 'सुयजोर्ङ्वनिप्' (पा० ३-२-१०३) इति ङ्वनिप्प्रत्ययः। 'वनो र च' (पा० ४-१-७) इति ङीप्। तत्सन्नियोगेन रेफादेशः। प्रत्ययद्वयस्य 'अनुदात्तौ सुप्पितौ' (पा० ३-१-४) इत्यनुदात्तत्वाद्धातुस्वर एवावशिष्यते। इषःशब्दे शसोऽनुदात्तत्वात्प्रातिपदिकस्वर एव शिष्यते। [९२]द्रवन्तौ धावन्तौ पाणी ययोस्तयोः सम्बोधनं द्रवत्पाणी इति। तस्यामन्त्रिताद्युदात्तत्वं न पुनराष्टमिको निघातः, '०अपादादौ' (पा० ८-१-१८) इति प्रतिषेधात्। इष इति पूर्वपदस्य 'सुबामन्त्रिते०' (पा० २-१-२) इति पराङ्गवद्भावेन मित्रावरुणावृतावृधावितिवदपादादित्वमिति चेत्—न; तत्र सामानाधिकरण्येन परस्परान्वयात्। इह त्विषो द्रवत्पाणी इत्यनयोः सरस्वतिशुतुद्रिपदवदसामर्थ्येन प्रयुक्तत्वात्। शुभ इति शुभ शुम्भ दीप्तावित्यस्य सम्पदादित्वाद्भावे क्विबन्तस्य षष्ठ्येकवचनम्। 'षष्ठ्याः पतिपुत्र०' (पा० ८-३-५३) इति विसर्जनीयस्य सत्वम्। तस्य पती इत्यामन्त्रिते परतः पराङ्गवद्भावादामन्त्रिताद्युदात्तत्वम्, न पुनराष्टमिको निघातः। तस्मिन्कर्तव्ये द्रवत्पाणी इति पूर्वस्यामन्त्रितस्य 'आमन्त्रितं पूर्वमविद्यमानवत्'

---

[९०] अथाश्विनः। अत्रत्यो विषयः पूर्वं टिप्पण्यां निरूपितः। आग्नेयोषस्याश्विनक्रतुषु त्रिषु त्रिषु यानि सप्त सप्त च्छन्दांसि कीर्तितानि तेषां सर्वेषामेकैकं सूक्तं गृह्णीयात् एवं क्रियमाणे यावत्य ऋचस्सम्पद्यन्ते तास्सर्वा अपि प्रातरनुवाकान्तर्गता भवन्तीति वेदितव्यम्।

[९१] यज्वरीः। यज् धातोः "सुयजोर्ङ्वनिप्' इति ङ्वनिप् यज् ङ्वनिप् इति स्थिते ङकारस्य 'लशक्वतद्धिते' (तद्धितवर्जप्रत्ययाद्या लशकवर्गा इतस्स्युः) इतीत्संज्ञायां, 'हलन्त्यम्' इति पकारस्य चेत्संज्ञायां तयोर्लोपे, इकारस्य चोच्चारणार्थत्वे यज्वन् इति दशायां 'वनो रच' (वन्नन्तात्तदन्ताच्च प्रातिपदिकात् स्त्रियां ङीप् स्याद्रश्चान्तादेशः) इति ङीपि रेफादेशे च जाते शसि 'यज्वरीः' इति रूपम्। ङ्वनिब्ङीपोः पित्त्वादनुदात्तस्वरे धातुस्वरः। तथा च 'यज्वरीः' इति भवति।

[९२] अत्रत्यो विषयस्सर्वोऽपि टिप्पण्या ८५ अङ्के विचारितः।

(पा० ८-१-७२) इत्यविद्यमानवद्भावेन पादादित्वात् '०अपादादौ' (पा० ८-१-१८) इति प्रतिषेधात्। ननु मित्रावरुणावृतावधावितिवत् 'नामन्त्रिते समानाधिकरणे०' (पा० ८-१-७३) इत्यविद्यमानवद्भावप्रतिषेधेन भवितव्यमिति चेत्— न; मित्रावरुणोपदं हि सामान्यवचनमिति युक्तस्तस्याविद्यमानवत्त्वप्रतिषेधः। द्रवत्पाणीपदं तु न तथेति वैषम्यात्। पुरुभुजौ। पुरू विस्तीर्णौ भुजौ ययोस्तौ। आमन्त्रिताद्युदात्तत्वम्। 'सुपां सुलुक्०' (पा० ७-१-३९) इति डादेशः। पुरु बहु भुञ्जाते इति वा। [93]'चनस्यतमित्यत्र 'चायतेरन्ने ह्रस्वश्च' (उ० ४-२०२) इति चायृ पूजानिशामनयोरित्यस्यासुन्प्रत्यय आकारस्य ह्रस्वे चानुकृष्टे नुडागमे च 'लोपो व्योर्वलि' (पा० ६-१-६६) इति यकारलोपे चनश्शब्दोऽन्ननामसु पठितः। तदात्मन इच्छतीति 'सुप आत्मनः क्यच्' (पा० ३-१-८)। 'सनाद्यन्ताः०' (पा० ३-१-३२) इति धातुत्वाल्लोण्मध्यम-द्विवचनम्। क्यचः प्रत्ययस्वरेणोदात्तत्वम्। शपैकादेशे कृते 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इत्युदात्तः। उपर्यास्यातस्य लसार्वधातुकानुदात्तत्वे स्वरितत्वम्। न च 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघातः। पूर्वस्यामन्त्रितस्याविद्यमानवद्भावेन पदादपरत्वात्पादादित्वात् तदप्राप्तेः ॥१॥

द्वितीयामृचमाह। अश्विना हे अश्विनौ युवां गिरोऽस्मदीयाः स्तुतीर्धियाऽऽदरयुक्तया बुद्ध्या वनतम्——सम्भजतम्, स्वीकुरुतम्। कीदृशावश्विनौ? पुरुदंससा——बहुकर्माणौ। षड्विंशतिसङ्ख्याकेषु कर्मनामसु दंसः (निघ० २-१) 'इति पठितम्। नरा——नेतारौ। धिष्ण्या। धाष्टर्ययुक्तौ, बुद्धिमन्तौ वा। कीदृश्या धिया? शवीरया——गतियुक्तया। अप्रतिहत-प्रसरयेत्यर्थः। अश्विनेत्याद्यामन्त्रितचतुष्टयस्य षाष्ठिकमामन्त्रिताद्युदात्तत्वम्। पादादित्वान्नाष्टमिको निघातः। पुरुदंससेत्यपि हि पादादिरेव। 'आमन्त्रितं पूर्वमविद्यमानवत्' (पा० ८-१-७२) इति पूर्वस्याविद्यमानवत्त्वात्। [94]'नामन्त्रिते समानाधिकरणे०' (पा० ८-१-७३)

---

[93] चनस्यतम्। चायृ धातुः। ऋकार उच्चारणार्थः। 'सर्वधातुभ्योऽसुन्' इत्यसुन् प्रत्ययः। 'चायतेरन्ने ह्रस्वश्च' इति धात्वाकारस्य ह्रस्वे चकारान्नुडागमे च सति चयन् अस् इति स्थिते 'लोपो व्योर्वलि' (वकारयकारयोर्लोपो वलि परे) इति यकारस्य लोपे चन् अस् इति जाते सकारस्य रुत्वे विसर्गे च सति 'चनः' इति रूपम्। चनः आत्मन इच्छतीत्यर्थे क्यच्, ककार-चकारयोरित्संज्ञायां लोपे चनस्य इति जाते 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां शप्, चनस्य अ इति जाते एकादेशो लोण्मध्यमपुरुषस्य थसः तमादेशे चनस्यतम् इति रूपम्। यकारस्य प्रत्ययस्वर उदात्तः 'अनुदात्तं पदं' इति पूर्वपोर्वर्णयोरनुदात्तः। तिङश्च लसार्वधातुकानुदात्तः। तस्य चोदात्तादनुदात्तस्य स्वरितः। तथाच चनस्यतम् इति स्वरसिद्धिः। 'आमन्त्रितं पूर्वमविद्यमानवत्' इति पूर्वस्याविद्यमानवद्भावादस्य न निघातः।

[94] नामन्त्रिते। सामान्यवचनम् आमन्त्रिते परे नाविद्यमानवद्भवति इत्युक्ते परस्यामन्त्रितस्य विशेषवचनत्वमवगम्यते। सामान्यविशेषवचनयोरेव सामानाधिकरण्यं नीलो घट इत्यादावनुभूयते। अत्र नीलशब्दस्य प्रवृत्तिनिमित्तं गुणः, घटशब्दस्य च जातिः। भिन्न-प्रवृत्तिनिमित्ताविमौ शब्दौ प्रथमान्ततयोपात्तौ सामानाधिकरण्यमेकार्थवाचित्वरूपमनुभवतः। अर्थात्——नीलशब्दस्य नीलगुणावच्छिन्ने घटे लक्षणामङ्गीकृत्य तत्र च घटपदस्य तात्पर्यग्राहकत्वं

इति पूर्वस्य सामान्यवचनत्वेनास्य विशेषवचनत्वेन नाविद्यमानवत्त्वमिति चेत्– न ; अश्विशब्दवत्पुरुदंससश्शब्दस्याप्यश्विनोरेव रूढ्या प्रयुज्यमानतया सामान्यशब्दत्वात्। सामान्यवचनं नाविद्यमानवदित्युक्तेऽर्थात्परस्य विशेषवचनत्वावगमात्। उभयोः सामान्यवचनत्वे पर्यायत्वेन पौनरुक्त्यात्सहाप्रयोग इति चेन्न। गुणविशेषसंकीर्तनवत्प्रसिद्धानेकनामविशेषसम्बन्धसंकीर्तनस्यापि स्तुत्युपयोगेन सप्रयोजनत्वान्निष्प्रयोजनपुनर्वचनस्यैव पुनरुक्तत्वात्। अश्विपुरुदंससश्शब्दयोरेकार्थवृत्तित्वेऽपि पर्यायत्वादेव प्रवृत्तिनिमित्तभेदाभावेनासामानाधिकरण्यादपि नाविद्यमानवत्त्वप्रतिषेधः। भिन्नप्रवृत्तिनिमित्तानामेव ह्येकस्मिन्नर्थे वृत्तिः सामानाधिकरण्यम्। अश्विशब्दस्याश्वसम्बन्धो निमित्तं पुरुदंससश्शब्दस्य तु बहुकर्मसम्बन्ध इति प्रवृत्तिनिमित्तभेद इति चेत्– न ; तद्धि द्वयं व्युत्पत्तिनिमित्तमात्रं न प्रवृत्तिनिमित्तम्। व्युत्पत्तिनिमित्तभेदमात्रेणापि सामानाधिकरण्याभिधाने वृक्षमहीरुहशब्दयोरपि तथात्वप्रसङ्गः। अत एव 'इळे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुति एतानि ते अघ्निये नामानि' (तै० सं० ७-१-६-८) इत्यत्र [95]सहस्रतमीप्रशंसोपयोगित्वेनेडादिशब्दानामेतानि ते अघ्निये नामानीति वचनेन पर्यायाणामप्यनेकविशिष्टनामसम्बन्धनिबन्धनस्तुत्यर्थत्वेनैव सहप्रयोगः। स्तुत्युपयोगेनैव व्युत्पत्तिनिमित्तभेद-

---

स्वीकृत्य नीलाभिन्नो घट इति शब्दबोधस्स्वीक्रियते। एवं घटः कलश इत्यनयोः प्रथमान्ततयोपात्तयोरपि पूर्वोक्तं सामानाधिकरण्यं न भवति, द्वयोरपि प्रवृत्तिनिमित्तत्वस्यैकत्वात्। व्युत्पत्तिनिमित्तन्तु द्वयोर्भिन्नम्-घट चेष्टायामच्प्रत्ययान्तो घटशब्दः, शृ गतौ 'अन्येभ्योऽपि दृश्यते' इति उप्रत्यये कृते कलं शवतीति कलश इति। व्युत्पत्तिनिमित्तभेदमात्रेण नानयोस्सामानाधिकरण्यम्। व्युत्पत्तिनिमित्तमन्यत् अन्यच्च प्रवृत्तिनिमित्तम्। वाच्यत्वे सति वाच्यवृत्तित्वे च सति वाच्योपस्थितीयप्रकाराश्रयत्वं प्रवृत्तिनिमित्तत्वम्। भिन्नप्रवृत्तिनिमित्तानामेवैकार्थवृत्तित्वरूपसामानाधिकरण्यमत्र सूत्रे विवक्षितम्। तच्च सामान्यविशेषयोरेव शब्दयोर्भवति न भिन्नव्युत्पत्तिनिमित्तयोर्द्वयोस्सामान्ययोः। प्रकृते-अश्विना पुरुदंससा इत्यनयोस्सामान्यवाचित्वमेव विवक्षितम्, न सामान्यविशेषवाचित्वम्। यद्यपि द्वयोस्सामान्यवाचित्वे पौनरुक्त्यं दोषः प्रतिभायात्, तथापि पुरुदंससा इत्यस्य गुणविशेषसङ्कीर्तनपरत्वस्वीकारान्न पौनरुक्त्यं दोषः। गुणविशेषसङ्कीर्तनञ्च व्युत्पत्तिविशेषलभ्यम्। प्रशस्ता अश्वास्सन्ति ययोः तावश्विनौ। इनि प्रत्ययान्तः। अश्वोऽस्ति जनकत्वेन ययोर्वा, इन् प्रत्ययान्तः। अश्विन्यां जातावश्विनौ। अणप्रत्ययान्तो वा। अणो 'नक्षत्रेभ्यो बहुलम्' इति लुकि 'लुक्तद्धितलुकि' इति ङीपः लुक्। 'सुपां सुलुक्' इति आदेशे 'अश्विना' इति व्युत्पद्यते। पुरुशब्दो बहुवाची, दंसश्शब्दश्च कर्मवाची। बहुकर्मसम्बन्धवत्त्वात्पुरुदंसश्शब्दो निष्पन्नः। तावता न सामानाधिकरण्यसिद्धिः। प्रवृत्तिनिमित्तन्तु द्वयोरेव देवतारूपम्। तद्भेद एव सामान्यविशेषभावः। अतो नात्र पूर्वस्याविद्यमानवद्भावप्रतिषेध इति पुरुदंससा इत्याद्युदात्तस्वर एव। अन्यत्सर्वं पूर्वमेव निरूपितम्।

[95] सहस्रतमी। गर्गत्रिरात्रनामा त्रिरात्रोऽहीनस्सोमयागः। तस्मिन् सहस्रं गावो दक्षिणात्वेन विहिताः। प्रतिदिनं तासु त्रयस्त्रिंशदधिकशतत्रयं गावो देयाः। तत्रैका गौरवशिष्टा भवति सा सहस्रतमी। अस्याः प्रतिनिधित्वेन कल्याणी लक्षणवती गां दक्षिणात्वेन

विवक्षायामपि पर्यायत्वेनासामानाधिकरण्यादेव 'नामन्त्रिते०' (पा० ८-१-७३) इति निषेधाभावात्'आमन्त्रितं पूर्वमविद्यमानवत्'(पा० ८-१-७२)इति पूर्वस्याविद्यमानवत्त्वात्सर्वेषां वाष्ठिकमाद्युदात्तत्वम्। तद्वत्प्रकृतेऽपि। 'कॄशॄपॄकटिपटिशौटिभ्य ईरन्' (उ० ४-३०) इत्यत ईरन्नित्यनुवृत्तौ [96]बहुलवचनादन्यत्रापीत्यनेन शु श्रु गताविति धातोरीरन्प्रत्यये कृते सति नित्त्वाच्छवीरयाशब्द आद्युदात्तः। धियेत्यत्र 'सावेकाचः०' (पा० ६-१-१६८) इति विभक्तिरुदात्ता। वनतमित्यत्र शपः पित्त्वाल्लोण्मध्यमद्विवचनस्य लसार्वधातुकत्वाच्च वन षण सम्भक्ताविति धातूदात्तत्वमेव शिष्यते। न च 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघातः। पूर्वस्यामन्त्रितस्याविद्यमानवत्त्वेन पादादित्वात्। गिरः। सुपोऽनुदात्तत्वे प्रातिपदिकस्वरः शिष्यते ॥२॥

तृतीयामृचमाह। अत्राश्विनेत्यनुवर्तते। हे अश्विनावायातमस्मिन्कर्मण्यागच्छतम्। किमर्थमिति तदुच्यते—सुता युष्मदर्थं सोमा अभिषुताः। तान् स्वीकर्तुमिति शेषः। कीदृशावश्विनौ? [97]दस्रा—शत्रूणामुपक्षयितारौ। यद्वा देववैद्यत्वेन रोगाणामुपक्षयितारौ। 'अश्विनौ वै देवानां भिषजौ' (तै० सं० २-३-११-२। ऐ० ब्रा० १-१८) इति श्रुतेः। [98]नासत्या—असत्यमनृतभाषणम्, तद्रहितौ। अत्र यास्कः—'सत्यावेव नासत्यावित्यौर्णवाभः। सत्यस्य

---

दद्यादिति विधाय तस्याः कर्णे जप्तव्यत्वेन मन्त्रोऽयं विहितः- 'इडे रन्तेऽदिते सरस्वति प्रिये प्रेयसि महि विश्रुत्येतानि ते अघ्निये नामानि सुकृतं मा देवेषु ब्रूतात्' इति। अत्र पदपाठे 'इडे' इत्यादीनामाद्युदात्तत्वमेव। पर्यायाणामप्येषां स्तुत्युपयोगिविशेषसम्बन्धप्रतिपादनार्थत्वात्सह प्रयोगो न दोषाय भवति, तथा-'अश्विना पुरुदंससा' इत्यत्रापीत्यर्थः।

[96] बाहुलकाद् 'अन्यत्रापि दृश्यत इति वक्तव्यम्' इति वार्तिकेन शुधातोः ईरन् प्रत्यये नकारस्येत्त्वे लोपे च शु ईर इति स्थिते 'सार्वधातुकार्धधातुकयोः' इति धातूकारस्य गुणे शोईर इति दशायां 'एचोऽयवायावः' इत्यवादेशे शवीर इति जाते स्त्रीत्वे विवक्षिते टापि शवीरा इति रूपम्। तस्य तृतीया शवीरया इति। 'ञ्नित्यादिर्नित्यम्' इति नित्स्वरे 'शवीरया' इति स्वरः।

[97] दस्रा। दसु उपक्षये धातोः 'स्फायितञ्चिवञ्चि०' इत्यादिना रक्प्रत्ययान्तो दस्रशब्दः। दस्यतः क्षिपतो रोगान् शत्रून्वेति दस्रौ। 'सुपां सुलुक्' इति डादेशे दस्रा इति प्रथमाद्विवचने रूपम्। पादादित्वादामन्त्रिताद्युदात्तस्वरः-दस्रा इति।

[98] नासत्यौ। सति साधु सत्यम्। न सत्यं ययोस्तावसत्यौ, न असत्यौ नासत्यौ। 'नभ्राण्नपान्नवेदानासत्या०' इत्यादिना नञः प्रकृतिभावे 'सुपां सुलुक्' इति डादेशे नासत्या इति रूपम्। पादादित्वादाद्युदात्तः नासत्या इति सम्पद्यते। अश्विनाविमौ सत्यमेव ब्रूतः न कदाचिदप्यसत्यम्। तस्मान्नासत्यावित्युच्येते। नञ्द्वयस्य प्रकृतार्थस्य दार्ढ्यबोधकत्वम्। इदमौर्णवाभाचार्यमतेन। आग्रयणाचार्यस्तु—सत्यस्य उदकस्य यज्ञस्य वा प्रणेतारौ नासत्यावित्यभिप्रैति।

प्रणेतारावित्याग्रयणः' (नि० ६-१३) इति। [99]रुद्रवर्तनी—रुद्रशब्दस्य रोदनं प्रवृत्तिनिमित्तम्। यदरोदीत्तद्रुद्रस्य रुद्रत्वम्' इति तैत्तिरीयाः। (तै० सं० १-५-१-१) 'तद्यद्रोदयन्ति तस्माद्रुद्राः' इति वाजसनेयिनः। रुद्राणां शत्रुरोदनकारिणां शूरभटानां वर्तनिर्मार्गो घाटीरूपो ययोस्तौ रुद्रवर्तनी। यथा शूरा घाटीमुखेन शत्रून् रोदयन्ति तद्वद्देतावित्यर्थः। युवाकव इत्यभिषुतानां सोमानां विशेषणम्। [100]वसतीवरीभिरेकधनाभिश्चाद्भिर्मिश्रिता इत्यर्थः। [101]वृक्तबर्हिषः—वृक्तानि मूलैर्वर्जितानि बर्हींष्यास्तरणरूपाणि येषां सोमानां ते वृक्तबर्हिषः। यद्वा भरता इत्यादिष्वष्ट-स्वृत्विङ्नामसु वृक्तबर्हिषः (निघ० ३-१८) इति। तदानीं तृतीयार्थे प्रथमा। ऋत्विग्भि-रभिषुता इत्यन्वयः। दस्रा। 'आमन्त्रितस्य च' (पा० ६-१-१९८) इत्याद्युदात्तः। युवाकवः।

---

99 रुद्रवर्तनी। रुदिर् अश्रुविमोचने इति धातोः बाहुलकाद्रक्प्रत्यये कृते रुद्रशब्दो निष्पद्यते। एवं रुद्रशब्दस्य निष्पादने सोऽरोदीत् यदरोदीत्तद्रुद्रस्य रुद्रत्वमि'ति तैत्तिरीय-निर्वचनं प्रमाणम्। रोदयत्यसुरानिति अर्थकल्पने 'रोदेर्णिलुक् च' इति रक्प्रत्ययः णेश्च लुक्। अत्र वाजसनेयिनां श्रुतिः प्रमाणम। वृतु वर्तने इति धातोः 'वृतेश्च' इत्यनिप्रत्ययः। वर्तन्तेऽनेनेति वर्तनिः। रुद्राणां वर्तनी रुद्रवर्तनीनि प्रथमाद्विवचनम्। शत्रुरोदनकारिणां भटानामश्विनौ मार्गरूपावित्यर्थः। रुद्रशब्दस्य रोदननिमित्तकत्वं श्रुतावभिहितम्। 'बर्हिषि रजतं न देयम्' इति निषिद्धस्य रजतस्य निन्दितत्वप्रतिपादनायायमर्थवादः—'यदरोदीत्' इति। देवा असुरैस्सह योद्धुं गच्छन्तः स्वीयं धनराशिं संरक्षितुमग्निं नियुक्तवन्तः। गतेषु देवेष्वग्नि-र्लोभपरीतः सर्वं धनं स्वयमनुभवितुमिच्छया तद् गृहीत्वाऽधावत्। प्रतिनिवृत्य देवा दूरे गच्छन्त-मग्निं प्राप्य तमताडयन्। तेन सोऽरोदीत्। यस्मादरोदीत् तस्मात्तद्रजतं रुद्रत्वमभजत। अश्रुजन्यत्वात्तस्य यागे दानं निन्दितमिति प्रकृतनिषेधेन तस्यार्थवादस्य सम्बन्धः। आमन्त्रितनिघातः-रुद्रवर्तनी इति।

----

100 वसतीवरीभिः। सोमोपसर्गार्था आपो वसतीवर्यः। ज्योतिष्टोमेऽग्नी-षोमीयदिने वपाहोमं परिसमाप्य सुब्रह्मण्यञ्च निर्वर्त्य, गिरिं भित्त्वा याः प्रवहन्ति नद्यः तासामापः कुम्भेन गृह्यन्ते। 'आहुत्यर्था वसतीवरीः कुम्भेन गिरिभिदां वहन्तीनां प्रत्यङ् तिष्ठन् गृह्णाति' इत्यापस्तम्बः (आप. श्रौ. ११.२०.५.)। इमा आपः सोमरसवर्द्धनकार्ये उपयुज्यन्ते। एवमेकधनशब्दवाच्यघटेषु गृहीता आपोऽपि सोमरसवर्द्धनार्था भवन्ति। 'युवाकव' इति सोमानां विशेषणमिममेवार्थं द्योतयति। 'यु मिश्रणामिश्रणयोः' इति बाहुलकात्काकुप्रत्ययः। ककारस्येत्संज्ञायां लोपे यु आकु इति स्थिते कित्त्वाद् गुणाभावः, उवङादेशश्च। तथाच युवाकु शब्दस्य सिद्धिः। ततो जसि गुणेऽवादेशे च सति युवाकव इति रूपं सिध्यति।

101 वृक्तबर्हिषः। वृजी वर्जने इति धातोः कर्मणि क्तप्रत्ययः। वृक्तानि छिन्नानि बर्हींषि कुशाः येषां ते यागाः। तत्सम्बन्धिनस्सोमा अपि वृक्तबर्हिषः। अत्रान्यपदार्थो याग एव, तथापि तत्सम्बन्धिनां सोमानामपि तत्त्वेन ग्रहणमभिप्रेतम्। दैविकेषु कर्मसु छिन्नमूलानां बर्हिषामुपयोगः, पैतृकेषु तु समूलानामिति विवेकः। सोमानां वृक्तबर्हिष्ट्वं क्लेशेन कल्पनीयमिति प्रकारान्तरमाह-यद्वेति।

यु मिश्रणे। युवन्ति मिश्रीभवन्ति वसतीवरीप्रभृतिभिः श्रयणद्रव्यैरिति युवाकवः। कटिकुट्यादिष्वगणितस्यापि यौतेर्बहुलग्रहणात् काकुप्रत्ययः। तस्य कित्त्वेन गुणाभावादुवङादेशः। प्रत्ययस्वरेणाकार उदात्तः। न विद्यतेऽसत्यमनयोरिति नासत्यौ। 'नभ्राण्नपान्नवेदानासत्या०' (पा० ६-३-७५) इत्यादिना प्रकृतिभावान्नञो नलोपाभावः। पादादित्वेन निघाताभावादामन्त्रिताद्युदात्तत्वम्। वृक्तबर्हिषः। वृक्तं मूलैर्वर्जितं बर्हिरास्तीर्णं येषां ते वृक्तबर्हिषः। पूर्वपदप्रकृतिस्वरेण क्तप्रत्ययस्वर एव शिष्यते। आ इत्यत्र 'उपसर्गाश्चाभिवर्जम्' (फि० ४-१३) इत्युदात्तः। रुद्रवर्तनी। 'आमन्त्रितस्य च' (पा० ८-१-१९) इत्यामन्त्रितनिघातः ॥३॥

ऐन्द्रे तृचे प्रथमामृचमाह। चित्रभानो चित्रदीप्ते हे इन्द्रास्मिन् कर्मण्यायाहि—आगच्छ। सुता अभिषुता इमे सोमास्त्वायवस्त्वां कामयमाना वर्तन्ते। अण्वीभिः। अण्व इत्यादिषु द्वाविंशतिसङ्ख्याकेष्वङ्गुलिनामस्वण्व्यः (निघ० २-५) इति पठितम्। ऋत्विजामङ्गुलिभिः सुता इत्यन्वयः। किञ्च एते सोमास्तना नित्यं पूतासः पूताः शुद्धाः,[102]दशापवित्रेण शोधितत्वात्। इन्द्रशब्दं[103] यास्को बहुधा निर्वक्ति (नि० १०-८) 'इन्द्र इरां दृणातीति वेरां ददातीति वेरां दधातीति वेरां दारयतीति वेरां धारयतीति वेन्दवे द्रवतीति वेन्दौ रमत इति वेन्धे भूतानीति वा तद्यदेनं प्राणैः समैन्धंस्तदिन्द्रस्येन्द्रत्वमिति विज्ञायत इदंकरणादित्याग्रायण इदंदर्शनादित्यौपमन्यव इन्दतेर्वैश्वर्यकर्मण इदञ्छत्रूणां दारयिता वा द्रावयिता वा दरयिता च यज्वनाम्' इति। अस्यायमर्थः— दृ विदारण इति धातुः। इरामन्नमुद्दिश्य तन्निष्पादकजलसिद्ध्यर्थं दृणाति मेघं विदीर्णं करोतीतीन्द्रः। डुदाञ् दाने इति धातुः। इरामन्नं वृष्टिनिष्पादनेन ददातीतीन्द्रः। धाञ् पोषणार्थः। इरामन्नं तृप्तिकारणं सस्यं दधाति जलप्रदानेन पुष्णातीतीन्द्रः। इरामुत्पादयितुं कर्षकमुखेन भूमिं विदारयतीतीन्द्रः। पूर्वोक्तपोषणमुखेनेरां धारयति विनाशराहित्येन स्थापयतीतीन्द्रः। इन्दुः सोमवल्लीरसः। तदर्थं यागभूमौ द्रवति धावतीतीन्द्रः। इन्दौ यथोक्ते सोमे रमते क्रीडतीतीन्द्रः। ञिइन्धी दीप्ताविति धातुः। भूतानि प्राणिदेहान् इन्धे जीवचैतन्यरूपेणान्तः प्रविश्य दीपयतीतीन्द्रः। एतदेवाभिप्रेत्य वाजसनेयिन आमनन्ति—'इन्धो ह वै नामैषः योऽयं दक्षिणेऽक्षन्पुरुषः। तं वा एतमिन्धं सन्तमिन्द्र इत्याचक्षते परोक्षेण। परोक्षप्रिया इव हि देवाः

---

[102] दशापवित्रेण। दशापवित्रं वासःखण्डः। तेनाभिषुतस्य सोमस्य पावनं विहितम्– 'दशापवित्रेण सोमं पावयति' इति। एवंपावनेन सोमाः शुद्धा भवन्तीति।

[103] यास्को बहुधा। इन्द्रशब्दस्य यावन्ति निर्वचनानि यास्काचार्यैः कृतानि तैरिन्द्रस्य कर्माणि प्रदर्श्यन्ते। इमानि कर्माणि प्रवृत्तिनिमित्तदर्शनभेदेनेन्द्रस्य सिध्यन्ति। ऐन्द्रीषु ऋक्षु नैकविधानि कर्माणीन्द्रस्य स्तुतये प्रतिपादितानीति प्रवृत्तिनिमित्तभेदः। तत्र प्रथममष्टौ कर्माणि धातुभिर्निर्दिश्य निर्वचनानि यास्काचार्यैः प्रदर्शितानि। अनन्तरमाग्रायणमतेन इदङ्करत्वमिन्द्रस्य प्रतिपादितम्। पूर्वोक्तमिदं सर्वमिन्द्रः करोतीति स इदङ्कर इति प्रदर्श्य, पूर्वोक्तमिदं सर्वमसाविन्द्रोऽद्राक्षीदित्यौपमन्यवमतमुक्तम्। तदूर्ध्वमिदिधातुनेन्द्रशब्दनिष्पत्तिं प्रदर्श्य तस्य परमैश्वर्यसम्पन्नत्वमङ्गीकृत्य, इन्-ईश्वरः, तद्रूप इन्द्रः शत्रूणां दारयिता द्रावयिता, यागानुष्ठातॄणामादरयिता इति व्युत्पत्तित्रयेणेन्द्रस्य कर्माणि प्रदर्शितानि।-

प्रत्यक्षद्विषः' (बृ० उ० ४-२-२) इति। तद्यदित्यादिकं ब्राह्मणान्तरवाक्यम्। तत्तत्रेन्द्रविषये निर्वचनमुच्यत इति शेषः। यद्यस्मात्कारणादेनं परमात्मरूपमिन्द्रं देवं प्राणवाक्चक्षुरादीन्द्रियैः प्राणापानादिवायुभिश्च सहितं समैन्धन् उपासका ध्यानेन सम्यक् प्रकाशितवन्तः—तत्तस्मात्कारणादिन्द्रनाम सम्पन्नम्। अस्मिन्पक्ष इध्यते दीप्यते इति कर्मणि व्युत्पत्तिः। आग्रयणनामको मुनिरिदंकरणादिन्द्र इति निर्वचनं मन्यते। इन्द्रो हि परमात्मरूपेणेदं जगत्करोति। औपमन्यवनामको मुनिरिदंदर्शनादिन्द्र इति निर्वचनमाह। इदमित्यापरोक्ष्यमुच्यते। विवेकेन हि परमात्मानमापरोक्ष्येण पश्यति। एतदेवाभिप्रेत्यारण्यकाण्डे समाम्नायते—'स एतमेव पुरुषं ब्रह्म ततममपश्यदिदमदर्शमिती३। तस्मादिदन्द्रो नामेदन्द्रो ह वै नाम तमिदन्द्रं सन्तमिन्द्र इत्याचक्षते परोक्षेण परोक्षप्रिया इव हि देवाः' (ऐ० आ० २-४-३) इति। इदि परमैश्वर्ये इति धातुः। स्वभावतो जगद्रूपत्वं परमैश्वर्यम्। तद्योगादिन्द्रः। अनेनाभिप्रायेण श्रूयते—'इन्द्रो मायाभिः पुरुरूपः' (ऋ० सं० ६-४७-१८) इति। इनशब्दस्येश्वरवाचकस्याकारलोपे सति नकारान्तमिन्द्रिति पदं भवति। दृ भये इति धातुः। स च परमेश्वरः शत्रूणां दारयिता भीषयितेतीन्द्रः। द्रु गताविति धातुः। शत्रूणां द्रावयिता पलायनं प्रापयितेतीन्द्रः। यज्वनां यागानुष्ठायिनामादरयिता भयस्य परिहर्ता। एवमेतानि निर्वचनानि द्रष्टव्यानीति। इन्द्रेत्यत्रामन्त्रिताद्युदात्तत्वम्। आ इत्यत्र निपातत्वेनाद्युदात्तः। [104]चित्रभानो। पदात्परत्वादामन्त्रितनिघातः। [105]त्वामिच्छतीत्यर्थे युष्मच्छब्दात् 'सुप आत्मनः क्यच्' (पा० ३-१-८) 'प्रत्ययोत्तरपदयोश्च'

---

104 चित्रभानो। चित्रा विचित्रा भानवो यस्य तस्य सम्बुधौ 'चित्रभानो' इति रूपम्। अत्र समासस्य' इति समासान्तोदात्तत्वे प्राप्ते 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरः। पूर्वपदन्तु प्रातिपदिकान्तोदात्तम्। तथाच-चित्रभानो इति सम्पन्नम्। ततः आमन्त्रिताष्टमिकनिघाते चित्रभानो इति सम्पद्यते। अस्य पदपाठावसरे इति कारेण सन्धाय चित्रभानो इति चित्रभानो इति द्विरावर्त्य तत्र प्रथमपदे निघातस्वरं प्रदर्श्य 'इति' शब्दस्य निपातत्वादाद्युदात्तत्वे तकारेकारस्य स्वरितत्वम्, द्वितीयपदे संहितास्वरत्वं प्रदर्शनीयम्। अत्र प्रातिशाख्यरीत्या द्वितीयपदे चित्रपदोत्तरमवग्रहः भानोपदगतौकारस्य प्रगृह्यत्वञ्च सिध्यतः। तथाच-चित्रभानो इति चित्रऽभानो इति सिद्धं भवति। चित्रपदोत्तरमवग्रहः मात्राकालावद्योतकः 'मात्रा ह्रस्वः तावदवग्रहान्तरम्' इति प्रातिशाख्यसूत्रसिद्धः, ओकारस्य प्रगृह्यत्वञ्च 'ओकार आमन्त्रितजः प्रगृह्यः' इति सूत्रसिद्धम्।

105 त्वामिच्छन्ति। युष्मच्छब्दात्क्यच्, मपर्यन्तस्य भागस्य 'प्रत्ययोत्तरपदयोश्च' (मपर्यन्तयोरेकार्थयोस्त्वमौ स्तः प्रत्यये उत्तरपदे च) इति त्वादेशः। त्वद्क्यच् इत्यत्र ककारचकारयोरित्संज्ञायां लोपे त्वद्य इति स्थिते 'क्याच्छन्दसि' (क्यप्रत्ययान्तादुप्रत्ययः स्यात् तच्छीलादिषु छन्दसि) इत्युप्रत्यये त्वद्युशब्दो निष्पद्यते। तस्य प्रथमाबहुवचने त्वद्यव इति रूपम्। तत्र 'युष्मदस्मदोरनादेशे' (युष्मदस्मदोराकारः स्यादनादेशे हलादौ परे) इति विभक्त्यभावदशा-

(पा० ७-२-९८) इति मपर्यन्तस्य त्वादेशः। 'क्याच्छन्दसि' (पा० ३-२-१७०) इति क्यजन्ता-दुप्रत्ययः। त्वद्यव इति प्राप्तौ 'युष्मदस्मदोरनादेशे' (पा० ७-२-८६) इत्यविभक्तावपि हलादौ व्यत्ययेनात्वम्। उकारः प्रत्ययस्वरेणाद्युदात्तः। अणुशब्दः सौक्ष्म्यवाचकः। तद्योगात्प्रकृते-ऽङ्गुलिषु वर्तते। 'वोतो गुणवचनात्' (पा० ४-१-४४) इति ङीषि प्राप्ते व्यत्ययेन ङीन्। नित्वादाद्युदात्तः। तनेत्ययं निपातो नित्यमित्यर्थे। निपातत्वादाद्युदात्तः। पूतासः। 'आज्जसेरसुक्' (पा० ७-१-५०) इत्यसुक् ॥४॥

द्वितीयामृचमाह। इन्द्र त्वमायाह्यस्मिन्कर्मण्यागच्छ। किमर्थम्? वाघत ऋत्विजो ब्रह्माणि वेदरूपाणि स्तोत्राण्युपैतुम्। कीदृशस्त्वम्? धियाऽस्मदीयया प्रज्ञयेषितः प्राप्तः। अस्मद्भक्त्या प्रेरित इत्यर्थः। विप्रजूतः—यथा यजमानभक्त्या प्रेरितस्तथाऽन्यैरपि विप्रै-र्मेधाविभिर्ऋत्विग्भिः प्रेरितः। कीदृशस्य वाघतः? सुतावतः— अभिषुतसोमयुक्तस्य। केत इत्यादिष्वेकादशसु प्रज्ञानामसु धीः (निघ० ३-९)इति पठितम्। चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु विप्रो धीरः (निघ० ३-१५) इति पठितम्। भरता इत्यादिष्वष्टस्वृत्विङ्नामसु वाघतः (निघ० ३-१८) इति पठितम्। [106]इषित इत्यत्रेव गतावित्यस्मान्निष्ठायामिडागमः। 'आगमा अनुदात्ताः' (पा० वा० ३-१-३) इतीटोऽनुदात्तत्वात् क्तस्वरः शिष्यते। [107]विप्रजूतः टुवप् बीजतन्तुसन्ताने इति धातोर्'ऋज्रेन्द्राग्रवज्रविप्र०' (उ० २-२७) इत्यादिना रन्प्रत्ययान्तो

---

यामपि व्यत्ययेनाकारे सति त्वायव इति रूपं सिध्यति। अत्र उप्रत्ययस्वर आद्युदात्तः। तथाच त्वायवः इति स्वरस्सिध्यति।

[106] इषितः। इष् धातोः क्तप्रत्ययः इडागमश्च। इष्इत इति स्थितम्। अत्र धातुस्वरस्य प्रत्ययस्वरेण निवृत्तिः। प्रत्ययस्वरश्चाद्युदात्तः। स च प्रकृते षकारोत्तरेकारस्य प्राप्तः। तथा सति इषितः इति सम्पन्नम्। इकारस्यागमरूपत्वेन 'आगमा अनुदात्ताः' इति विशेषशास्त्रेण तस्यानुदात्तत्वे प्रत्ययस्वरः क्तप्रत्ययाकारस्यैव। तथाच शेषयोरनुदात्तत्वे इषित इति स्वरसिद्धिः।

[107] विप्रजूतः। विपूर्वकप्राधातोः कप्रत्ययान्तत्वेन विप्रशब्दो निष्पद्यते। अथवा डुवप्धातोः 'ऋज्रेन्द्रे' त्यादिना निपातनाद्रन् प्रत्ययान्तत्वेन निष्पद्यते। तत्र प्रथमपक्षे 'वि' इत्यनेन प्रशब्दस्य समासे गतिस्वरेण ककारोत्तरेकारस्योदात्तत्व आद्युदात्तं विप्रपदम्। द्वितीय-पक्षे नित्प्रत्ययान्तत्वादाद्युदात्तत्वं सिध्यति। जूधातोः क्तप्रत्यये जूतशब्दो निष्पद्यते। विप्रैर्जूत इति तृतीयासमासः। अत्र 'समासस्य' इत्यन्तोदात्तः प्राप्तः तद्बाधकेन 'तत्पुरुषे तुल्यार्थतृतीया सप्तम्युपमानाव्ययद्वितीया कृत्या' इति सूत्रेण विहितपूर्वपदप्रकृतिस्वरेण निवृत्तः। तथा सति 'विप्रजूत' इति सम्पद्यते। अस्यापि बाधकं 'थाथघञ् क्ताजबित्रकाणाम्' इति सूत्रम्। तेन चान्तोदात्तः पुनः प्राप्तः। तस्यापि निवर्तकं सूत्रम् 'तृतीया कर्मणि' (क्तान्ते-पदे परे तृतीयान्तं प्रकृत्या स्यात्) इति। तथाच विप्रजूतः इति स्वरसिद्धिः।

न्प्रशब्दो निपातितः। निपातनादुपधाया इकारो लघूपधगुणाभावश्च। नित्स्वरादाद्युदात्तः। तैर्भूतः प्राप्तः। जू इति सौत्रो धातुर्गत्यर्थः। 'श्र्युकः किति' (पा० ७-२-११) इतीट्प्रतिषेधः। 'तृतीया कर्म्मणि' (पा० ६-२-४८) इति पूर्वपदप्रकृतिस्वरत्वम्। सुतावतः। छान्दसं दीर्घत्वम्। मतुपोऽनुदात्तत्वात्क्तप्रत्ययस्य स्वर एव शिष्यते। ब्रह्माणि। 'नब्विषयस्यानिसन्तस्य' (फि० २-३) इत्याद्युदात्तः। वाघच्छब्द ऋत्विङ्नामसु पठितः। प्रातिपदिकस्वरः ॥५॥

तृतीयामृचमाह। हरिशब्द इन्द्रसम्बन्धिनोरश्वयोर्नामधेयम्। 'हरी इन्द्रस्य रोहितोऽग्नेः' (निघ० १-१५) इति तदीयाश्वनामत्वेन पठितत्वात्। हे हरिवः—अश्वयुक्तेन्द्र। त्वं ब्रह्माण्युपैतुमायाहि। कीदृशस्त्वम्? तूतुजानः—त्वरमाणः। आगत्य चास्मिन्सुते सोमाभिषवयुक्ते कर्मणि नोऽस्मदीयं चनोऽन्नं हविर्लक्षणं दधिष्व—धारय। स्वीकुर्वित्यर्थः। [108]तूतुजानः। तुजेर्लिटि 'लिटः कानज्वा' (पा० ३-२-१०६) इति कानजादेशः। 'तुजादीनां दीर्घोऽभ्यासस्य' (पा० ६-१-७) इत्यभ्यासस्य दीर्घत्वम्। 'अभ्यस्तानामादिः' (पा० ६-१-१८९) इत्याद्युदात्तत्वम्। [109]हरिव इत्यत्र हरयोऽस्य सन्तीति मतुपि 'छन्दसीरः' (पा० ८-२-१५) इति मकारस्य वत्वम्। सम्बुद्धौ 'उगिदचाम्' (पा० ७-१-७०) इति नुम्। संयोगान्तलोपः (पा० ८-२-२३)। नकारस्य 'मतुवसो रुः सम्बुद्धौ छन्दसि' (पा० ८-३-१) इति रुत्वम्। आष्टमिको निघातः। ब्रह्माणीत्यस्य हरिव इत्यनेनासामर्थ्यात् 'समर्थः पदविधिः' (पा० २-१-१) इति नियमात्सुबामन्त्रित-पराङ्गवद्भावाभावेनामन्त्रितनिघाताभावादाद्युदात्तत्वे सत्युपेत्यकारस्य सन्नतरः। [110]दधिष्वेत्यत्र दधातेर्लोटि थास्। 'थासः से' (पा० ३-४-८०) 'सवाभ्यां वामौ' (पा० ३-४-९१) इत्येकारस्य वादेशः। 'छन्दस्युभयथा' (पा० ३-४-११७) इति सार्वधातुकार्द्धधातुकसंज्ञयोः सत्योः सार्वधातु-

---

[108] तूतुजानः। तुजेर्लिटि कानच् प्रत्ययः। प्रत्ययगतककारचकारयोरित्संज्ञायां लोपे सति तुजान इति स्थिते 'लिटि धातोरभ्यासस्य' इति लिट्कार्ये द्वित्वे 'पूर्वोऽभ्यास' इति पूर्वस्याभ्यासत्वे च जाते तुतुजान इति दशायां 'तुजादीनां दीर्घोऽभ्यासस्य' इति प्रथमस्य तुकारस्य दीर्घः। तथाच तूतुजान इति रूपम्। चित्प्रत्ययान्तत्वादस्यान्तोदात्तत्वं प्राप्तम् 'अभ्यस्तानामादिः' इति सूत्रेणास्याद्युदात्तस्वरः। तथाच 'तूतुजानः' इति स्वरसिद्धिः।

[109] हरिवः। हृधातोरिन् प्रत्यये हरिरिति रूपम्। ततो मतुप् प्रत्ययः। हरिम इति स्थिते 'छन्दसीरः' (इवर्णान्ताद्रेफान्ताच्च परस्य मतोर्मस्य वः स्यात्) इति मकारस्य वकारे जाते हरिव इति स्थिते 'उगिदचां सर्वनामस्थानेऽधातोः' इत्यनेन नुम्। नुमि मकार इत् उकार-उच्चारणार्थः। हरिवन् इति स्थिते, 'मतुवसो रु सम्बुद्धौ छन्दसि' इति (मत्वन्तस्य वस्वन्तस्य च रुः स्यात्) नकारस्य रुत्वं विसर्गश्च भवतः। तथाच हरिवः इति रूपम्। तस्य चामन्त्रिते चेति हरिवः इति स्वरः।

[110] दधिष्व। दधातेर्लोटि थास्, तस्य सेभावः, तस्य 'सवाभ्याम्' इति वकारादेशे छान्दसत्वात्सार्वधातुकार्धधातुकेत्युभयसंज्ञावत्त्वेन, सार्वधातुकत्वात् शप्, तस्य श्लुः द्वित्वादि च। आर्धधातुकत्वादिडागमे दधिष्व इति रूपम्। अत्र 'अभ्यस्तानामादिः' इति प्रथमस्य वर्णस्योदात्तस्वरः प्राप्तः 'तिङ्ङतिङः' इत्यनेन सर्वानुदात्तो भवति।

कत्वेन शपि तस्य श्लौ च द्विर्भावः। आर्द्धधातुकत्वेनेडागमश्च। 'आतो लोप इटि च' (पा० ६-४-६४) इत्याकारलोपः। चनः। 'चायतेरन्ने ह्रस्वश्च' (उ० ४-२०१) इत्यसुन्प्रत्ययः। चकाराद्युडागमे यलोपः॥६॥

इति प्रथमस्य प्रथमे पञ्चमो वर्गः।

वैश्वदेवतृचे प्रथमामृचमाह। हे विश्वे देवास एतन्नामका [131]देवविशेषाः। दाशुषो हविर्दत्तवतो यजमानस्य सुतमभिषुतं सोमं प्रत्यागत— आगच्छत। ते च देवा ओमासो रक्षकाः। चर्षणीधृतो मनुष्याणां धारकाः। दाश्वांसः फलस्य दातारः। मनुष्या इत्यादिषु पञ्चविंशतिसङ्ख्याकेषु मनुष्यनामसु चर्षणिशब्दः पठितः (निघ० २-३)। अश्विनावित्यादि-ष्वेकत्रिंशत्सङ्ख्याकेषु देवविशेषनामसु विश्वेदेवाः साध्या (निघ० ५-६) इति पठितम्। एतामृचं यास्क एवं व्याख्यातवान्—'अवितारो वाधनीया वा मनुष्यधृतः सर्वे च देवा इहागच्छत दत्तवन्तो दत्तवतः सुतमिति। तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दशतयीषु विद्यते यत्तु किञ्चिद् बहुदैवतं तद्वैश्वदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिः' (नि० १२-४०) इति। अत्र विश्वशब्दः सर्वशब्दपर्याय इति यास्कस्य मतम्। देवविशेषस्यैवासाधारणं लिङ्गमिति शाक-

---

[131] देवविशेषाः। कर्मसु त्रिविधा देवता इज्यन्ते। एकत्वावछिन्नाः काश्चन यथा अग्निः, बृहस्पतिः, इन्द्रः, मित्रः, वरुणः, पूषा इत्यादयः। द्वित्वावच्छिन्नाश्चापराः यथा—इन्द्राग्नी, मित्रावरुणौ, द्यावापृथिव्यौ इत्यादयः। बहुत्वावच्छिन्नाश्चान्याः। यथा—रुद्रा वसव आदित्या मरुतः साध्या इत्यादयः। इमाश्च ता देवता गणदेवता इत्यप्यभिधीयन्ते- तत्र विश्वशब्दस्यापि सङ्घविशेष एवाभिधेयः। तत्र 'अग्ने महाँ असि ब्राह्मण भारत। ब्रह्मवै देवानां बृहस्पतिः' इति श्रुत्याऽग्नेर्बृहस्पतेश्च ब्राह्मणत्वम्, 'यान्येतानि देवताक्षत्राणीन्द्रो वरुणः सोमो रुद्रः पर्जन्यो यमो मृत्युरीशानः' इतीन्द्रादीनां क्षत्रत्वम्, 'यान्येतानि देवजातानि गणश आख्यायन्ते वसवो रुद्रा आदित्या विश्वे देवा मरुतः' इति वस्वादीनां वैश्यत्वम्, 'तमथ शौद्रं वर्णमसृजत पूषणम्' इति पूष्णः शूद्रत्वञ्चेति विभागो देवेषु प्रतिपादितः। अनेन विश्वेषां देवानां गणदेवतात्वञ्च वैश्यत्वञ्च सिद्धं भवति। देवतानां स्तुत्यवसरे ये मन्त्राः प्रयुज्यन्ते तेषु तत्तद्देव-तापदं सङ्कुटितं भवति। क्वचिद्देवतावाचकपदाभावेऽपि तस्या देवताया असाधारणगुणवाचकस्य पदस्य प्रयोगो भवत्येव। तत्र दाशतय्यां विश्वेषां देवानां गायत्रच्छन्दोयुतैर्मन्त्रैः स्तुत्यर्थमेकमेव वैश्वदेवं सूक्तमुपलभ्यते। कर्मसु तदधिकसूक्तापेक्षायां किं कर्तव्यमिति शङ्कायां निरुक्तकारेण पक्षद्वयमुक्तम्—विश्वशब्दस्य बह्वर्थत्वमङ्गीकृत्य बहुदेवतोपेतं सूक्तं वैश्वदेवे कर्मणि उपयोक्तव्यम्, अथवा विश्वशब्दस्य देवतावाचित्वमङ्गीकृत्य विश्वशब्दोपेतस्यैव सूक्तस्य तत्र विनियोग इति। प्रथमपक्षो यास्कस्य, द्वितीयश्च शाकपूणेः। तदिदमुक्तं यास्केन— 'तदेतदेकमेव वैश्वदेवं गायत्रं तृचं दाशतयीषु विद्यते यत्तु किञ्चिद्बहुदैवतं तद्विश्वेदेवानां स्थाने युज्यते यदेव विश्वलिङ्गमिति शाकपूणिः' इति शाकपूणिमतमेवाश्रित्य भाष्यकारा वदन्ति— 'एतन्नामका देवविशेषाः' इति।

पूर्णमंतम्। [112]अवन्तीत्योमासो देवाः। मन्निरत्यनुवृत्तौ'अविसिविसिशुषिभ्यः कित्' (उ० १-१४९) इति मन्प्रत्ययः। 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (पा० ६-४-२०) इत्यूठ्। मनः कित्त्वेऽपि बाहुलकाद्गुणः। 'आज्जसेरसुक्' (पा० ७-१-६०) इति जसेरसुगागमः। आमन्त्रिताद्युदात्तत्वम्। चर्षणयो मनुष्यास्तान्वृष्टिदानादिना धारयन्तीति [113]चर्षणीधृतो देवाः। पूर्वस्या-

---

[112] अवतेर्धातोः 'अविसिविसि शुषिभ्यः कित्' इत्यौणादिकसूत्रेण मन्प्रत्यये ततो जसि प्रथमाबहुवचने अव् म अस् इति स्थिते 'ज्वरत्वरे'त्यादिना अव् इत्यस्य ऊठि ऊम अस् इति जाते, 'सार्वधातुकार्धधातुकयोः' इति ऊ इत्यस्य ओकारे गुणे सति ओम अस् इति जाते सवर्णदीर्घे ओमास् इति दशायां 'आज्जसेरसुक्' (अवर्णान्तादङ्गात्परस्य जसोऽसुक स्यात्) इत्यसुकि सकारस्य रुत्वविसर्गौ। तथाच ओमास इति रूपम्। आमन्त्रितत्वादस्य षाष्टिक आद्युदात्तः।

ओमास इति स्वरसिद्धिः।

[113] चर्षणीधृतः। चरतेर्धातोः 'अर्तिसृ' इत्यादिना बहुवचनादत्रापि अनिप्रत्ययप्रवृत्तौ पुगागमे च बाहुलकाच्चर्षणिशब्दः। चरणशीला इति तदर्थः। अथवा कृषेः 'कृषेरादेश्च चः' इत्यनिप्रत्यये चकारादेशे चर्षणिशब्दः। आकर्षका इति तदर्थः। अथवा चायृधातोः बाहुलकादनिप्रत्यये पुगागमे धात्वन्तस्य रेफादेशे ह्रस्वे च चर्षणिशब्दः। चायितारो द्रष्टार इति तदर्थः। अथवा चरन्ति सनन्तीति चर्षणयः। सञ्चरणशीलाः दातारश्चेति तदर्थः। चर्षण्युपपदाद् धृधातोः क्विपि तदन्ताज्जसि चर्षणीधृत इति रूपम्। चर्षणीनां धृतः इति समासे समासान्तोदात्तः चर्षणीधृच्छब्दः। तदूर्ध्वं जसःसुप्त्वादनुदात्तत्वे सति उदात्तपरत्वात्स्वरितस्वरः। तथाच चर्षणीधृतः इति स्वराः प्राप्ताः, किन्त्वस्यामन्त्रितत्वेनाष्टमिकनिघातः पदपाठे भवति चर्षणीधृतः इति।

अत्रेयं शङ्का—'आमन्त्रितं पूर्वमविद्यमानवत्' इति सूत्रेण पूर्वस्य 'ओमास' इत्यामन्त्रितस्याविद्यमानवत्त्वे सति द्वितीयस्य पादादित्वात्कथं निघात इति। समाधानन्तु 'विभाषितं विशेषवचने (बहुवचनम्)' इति (आमन्त्रितान्ते विशेषणे परे पूर्वं बहुवचनान्तमविद्यमानवद्वा स्यात्) सूत्रेण पूर्वस्य बहुवचनान्तस्याविद्यमानवद्भावनिषेधात् पादादौ द्वितीयमामन्त्रितं नास्तीति निघातस्य न हानिरिति।

पुनरप्यत्रेयं शङ्का—'सुबामन्त्रिते पराङ्गवत्स्वरे' इति सूत्रेण प्रथमस्य ओमास इत्यस्य पराङ्गवत्त्वे सति एकपदीभावेन चर्षणीधृत इत्यस्य पादादित्वात्कथं निघात इति। तत्समाधानन्तु—सूत्रे 'पराङ्गवत्' इत्येवोक्तं न तु पराङ्गं भवतीति। तेन वत्करणेन पदभेदोऽपि सिद्धो भवति। तदा पदभेदप्रयुक्तस्य निघातस्य व्याघाताभाव इति। अथवा—एकपदत्वेऽपि ओमासश्चर्षणीधृत इत्यत्र ओकारस्योदात्तत्वे सति 'अनुदात्तं पदमेकवर्णम्' इति शिष्टानामनुदात्तस्वरे निघातसिद्धिरिति।

अत्रैवं पुनश्शङ्का—पूर्वोक्तयैव रीत्या 'द्रवत्पाणी शुभस्पती' इत्यत्रापि पूर्वस्य पराङ्गवद्भावेनैकपदत्वमङ्गीकृत्योत्तरस्य निघातः कुतो न भवति। तत्र 'द्रवत्पाणी शुभः पती' इति स्वराः

मन्त्रितस्य सामान्यवचनस्य 'विभाषितं विशेषवचने बहुवचनम्' (पा० ८-१ ७४) इत्यविद्यमानवत्त्वप्रतिषेधात्पादादित्वेन निघातः। नन्वत एव विद्यमानवत्त्वात्'सुबामन्त्रिते०' (पा० २-१-२) इति पराङ्गवत्त्वेनैकपदीभावात्पदादपरत्वेन कथं निघात इति चेन्न। 'तत्करणं स्वाश्रयमपि यथा स्यादिति' वचनात्पदमेवप्रयुक्तस्य निघातस्याप्युपपत्तेः। ऐकपद्येऽप्याद्युदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' (पा० ६-१-१५८) इति सुतरामेव निघातो भविष्यति। इत्थमेव तर्हि 'द्रवत्पाणी शुभस्पती' इत्यत्रापि पराङ्गत्वेनैकपद्यादुत्तरस्य शेषनिघातप्रसङ्ग इति चेन्न। तत्र पराङ्गवद्भावस्य परेण'आमन्त्रितं पूर्वमविद्यमानवत्' (पा०८-१-७२) इत्यविद्यमानवद्भावेन बाधितत्वात्। इह पुनः 'विभाषितं विशेषवचने बहुवचनम्' (पा० ८-१-७४) इत्यविद्यमानवत्त्वस्य निषेधात् पूर्वस्याप्यामन्त्रितस्य विद्यमानवत्त्वात्पराङ्गत्वं स्वीकृतमिति वैषम्यम्। [114]विश्वे पादादित्वादाद्युदात्तः। गणदेवतावचनश्चात्र विश्वशब्दो न सर्वपर्याय इति विशेष्यपरतया सामान्यवचनत्वादोमास इत्यनेन न सामानाधिकरण्यम्। सामानाधिकरण्ये हि पूर्वस्य पदस्य पराङ्गवद्भावे सति मित्रावरुणावृतावृधावित्यादाविवात्राप्यामन्त्रिताद्युदात्तता न स्यात्। विश्वे इत्यस्य विशेषणं देवास इति। दीव्यन्तीति देवाः प्रकाशवन्तः। ननु[115]'अवयवप्रसिद्धेः समुदायप्रसिद्धि-

---

कथं स्वीकृता इति। अत्रेदमुत्तरम्—'द्रवत्पाणीत्यत्र 'आमन्त्रितं पूर्वमविद्यमानवत्' इति शास्त्रेण पूर्वस्याविद्यमानत्वात् 'सुबामन्त्रित' इति पराङ्गवद्भावो बाधित इति न परस्य निघातः, किन्तु शुभ इत्यस्याद्युदात्त एव। 'ओमास' इत्यत्र तु 'आमन्त्रितं पूर्वमविद्यमानवत्' इत्यविद्यमानत्वं 'विभाषितं विशेषवचने बहुवचनम्' इत्यनेन निषिद्धमिति पूर्वमामन्त्रितं 'ओमास' इति विद्यमानमेव भवति। अतस्तस्य पराङ्गत्वं सिध्यतीति चर्षणीधृत इत्यस्य निघात इति।

[114] विश्वे। शाकपूणिमतमाश्रित्य विश्वेपदं देवताविशेषवाचि विशेष्यम्। देवास इति पदन्तु दीव्यन्तीति व्युत्पत्त्या विशेषणम्। उभे अपि पदे आमन्त्रिते। तत्र विश्वेपदस्य पादादित्वात् षाष्ठिकाद्युदात्तत्वम्, देवास इत्यस्य तु निघातस्वर इति स्थितिः। अत्रेयं शङ्का—'मित्रावरुणी ऋतावृधौ' इत्यत्र 'ऋतावृधौ'पदं द्वितीयपादादौ विद्यमानमपि निहन्यते तथा द्वितीयपादादौ विद्यमानं विश्वेपदं किमिति न निहन्यत इति। समाधानन्तु—तत्र सामान्यविशेषभावेन परस्परान्वयसामर्थ्यात्सामानाधिकरण्यमस्तीति पराङ्गवद्भावमाश्रित्य ऋतावृधौपदं निहन्यते, अत्र तु विश्वेशब्दस्य विशेष्यत्वेन सामान्यवचनत्वान्न पूर्वेण सह सामानाधिकरण्यम्। अतः पराङ्गवद्भावाभावात् विश्वेपदं पादादौ तिष्ठतीति न निहन्यते किन्त्वाद्युदात्तमेवेति।

'देवास' इत्यस्य तु निघात एव। अत्र 'आमन्त्रितं पूर्वमविद्यमानवत्' इति न प्रवर्तते, येनास्य पादादित्वमाश्रित्याद्युदात्तत्वं स्यात्, 'विभाषितं विशेषवचने बहुवचनम्' इत्यविद्यमानत्वं प्रतिषेधात्। विषयोऽयं पूर्वं टिप्पण्या ८५ अङ्के प्रदर्शितः।

[115] नन्ववयवप्रसिद्धेः। देवास इत्यस्य 'दीव्यन्तीति देवाः प्रकाशवन्त' इति योगार्थो भाष्यकारेण प्रदर्शितः। तेन चेदं पदं विश्वेपदस्य विशेषणं भवति। तत्र 'योगाद्रूढिर्बलीयसी' इति न्यायेन देवास इत्यस्य रूढ्यर्थ एव किमिति न स्वीक्रियते। योगार्थग्रहणे चावयवार्थसव्यपेक्षताऽस्ति, तेन बोधो विलम्बेन भवेत्, रूढ्यर्थग्रहणे तु झटिति बोधो भवेत्। तथाहि—'वर्षासु रथकारोऽग्नीनादधीत' इति वाक्यमुदाहृत्य मीमांसायां रथकाराधिकरणे

बलीयसीति रूढ एवार्थो देवशब्दस्य ग्राह्यो न यौगिकः। यौगिकत्वे हि अवयवार्थानुसन्धान-व्यवधानेन प्रतिपत्तिर्विक्षिप्ता स्यात्। समुदायप्रसिद्धौ तु न विक्षेप इति चेत्—न; समुदाय-प्रसिद्धौ हि देवशब्दस्य सामान्यपरतया विशेषवचनत्वाभावाद् 'विभाषितं विशेषवचने बहुवचनम्' (पा० ८-१-७४) इत्यनेनानिषिद्धत्वाद्विद्यमानत्वेन शुभस्पती इतिपदवद्देवासः इत्यस्यापि आद्युदात्तत्वं स्यात्। स्वरानुसारेण च रूढित्यागेनापि देवशब्दस्य योगस्वीकारो युक्त एव। आ गत–[116]आगच्छत। 'बहुलं छन्दसि' (पा० २-४-७३) इति शपो लुकि सति 'अनु-दात्तोपदेश०' (पा० ६-४-३७) इत्यादिना मकारलोपः। आङः पदात्परत्वान्निघातः। [117]दाश्वांसः। दाशृ दाने इत्यस्य क्वसौ 'दाश्वान्साह्वान्मीढ्वांश्च' (पा० ६-१-१२) इति निपातनात् क्रादिनियम-प्राप्त इडागमो द्विर्वचनं च न भवति। प्रत्ययस्वरेण क्वसोरुदात्तत्वम्। दाशुष इत्यत्र 'वसोः संप्रसारणम्' (पा० ६-४-१३१) इति सम्प्रसारणम्। 'संप्रसारणाच्च' (पा० ६-१-१०८) इति पूर्वरूपत्वम्। 'शासिवसिघसीनां च' (पा० ८-३-६०) इति षत्वम् ॥७॥

---

चिन्तितम्—रथं करोतीति व्युत्पत्त्या रथकारशब्दः त्रैवर्णिकवाची उत रूढ्या जातिवाचीति। यौगिकमर्थं स्वीकृत्य रथकारशब्दस्त्रैवर्णिकवाच्येव, तेषामेवोपनयनद्वारा विद्यावत्त्वम्, विद्यावतामेव श्रौतकर्मस्वधिकारः। अतस्त्रैवर्णिका एवास्मिन्नाधानेऽधिकुर्युरिति पूर्वपक्षे प्राप्ते—सिद्धान्तितम्—उपनयनद्वारा विद्याभावेऽपि श्रुतिबलाच्चतुर्थस्यापि वर्णस्य तावन्मात्रमधिकारस्स्वीकर्तव्यः, योगाद्रूढेर्बलीयस्त्वात्। अतस्सौधन्वनापरपर्यायस्य रथकारस्य चतुर्थवर्णस्यैवाधिकार इति। तथैव प्रकृतेऽपि देवास इत्यस्य योगार्थो न स्वीकर्तव्यः किन्तु रूढ्यर्थ एवेति शङ्कते—नन्विति। समाधत्ते—नेति। रूढ्यर्थग्रहणे देवास इति पदं विशेष्यं स्यात्। तदा 'आमन्त्रितं पूर्वमविद्यमा-नवत्' इत्यनेन पूर्वस्याविद्यमानवत्त्वे देवास इति पदं पादादौ भवद् आद्युदात्तमेव भवेत्। सर्वानुदात्तञ्च तत्पदं श्रूयते। अतस्तदनुरोधेन रूढ्यर्थं परित्यज्य यौगिकार्थ एव ग्राह्यः। तथात्वेऽस्य विशेषवचनत्वसिद्धौ 'विभाषितं विशेषवचने बहुवचनम्' इत्यविद्यमानवत्त्वस्य निषेधो भवेत्। अन्यथा 'शुभस्पती' इत्यत्रेवाद्युदात्तस्वर एव प्राप्नुयाद् 'देवास' इत्यस्य। अतो 'योगाद्रूढिर्बलीयसी' इति न्यायोऽत्र परित्यज्यते। किञ्च—प्रोक्षण्यधिकरणन्यायो रथकारा-धिकरणन्यायापवादकः। प्रोक्षण्यधिकरणे प्रोक्षणीशब्दस्य रूढ्यर्थत्वं परित्यज्य यौगिकत्वमेव सिद्धान्तितम्। रथकारशब्दस्यानुशासनबलेन रूढ्यर्थत्वेऽपि प्रोक्षणीशब्दस्य रूढिकल्पने प्रमाणा-भावाद्यौगिकत्वमेवाश्रितम्। तन्न्यायेन देवास इत्यस्य लक्ष्यानुरोधेन यौगिकत्वमेवाश्रीयत इति समाधातुरभिप्रायः।

[116] गत। गमधातोर्लोटि शपि मध्यमपुरुषबहुवचने प्रत्ययस्य तादेशे गम अत इति स्थिते 'बहुलं छन्दसि' इति शपो लोपः, ५५ 'अनुदात्तोपदेशवनतितनोत्यादीनामनु-नासिकलोपो झलि क्ङिति' इति गमेरनुदात्तोपदेशत्वादनुनासिकस्य धातुमकारस्य लोपे गत इति रूपम्।

[117] दाश्वांसः। दाश्वस्शब्दस्य प्रथमाबहुवचने रूपम्। दाश्वान् दाश्वांसौ दाश्वांस इति। दाशृ दाने धातोः छन्दसि लिट्, तस्य च 'क्वसुश्च' इति क्वसुप्रत्ययः। 'दाश्वान्-

द्वितीयामृचमाह। विश्वे देवास एतन्नामकगणरूपा देवविशेषाः सुतं सोममागन्त––आगच्छन्तु। कीदृशाः? अप्तुरः––तत्तत्काले वृष्टिप्रदा इत्यर्थः। तूर्णयः––त्वरायुक्ताः। यजमानमनुग्रहीतुमालस्यरहिता इत्यर्थः। विश्वेषां देवानां सोमं प्रत्यागमने उस्रा इत्यादि-दृष्टान्तः। उस्राः सूर्यरश्मयः स्वसराण्यहानि प्रत्यालस्यरहिता यथा समागच्छन्ति तद्वत्। खेदय इत्यादिषु पञ्चदशसु रश्मिनामसु उस्रा वसवः (निघ० १-५) इति पठितम्। वस्तोरित्यादिषु द्वादशस्वहर्नामसु स्वसराणि घ्रंसो घर्मः (निघ० १-९) इति पठितम्। तच्च पदं यास्केन व्याख्यातम्। 'स्वसराण्यहानि भवन्ति स्वयंसारीण्यपि वा स्वरादित्यो भवति स एनानि सारयति। उस्रा इव स्वसराणीत्यपि निगमो भवति' (नि० ५-४) इति। देवासः। पचाद्यजन्तश्चित्त्वा-दन्तोदात्तः। [118]अप्तुरः। तुर त्वरणे। श्लुविकरणी। तुतुरति त्वरयन्तीत्यर्थे 'क्विप् च' (पा० ३-२-७६) इति क्विप्। 'गतिकारकोपपदात्कृत्' (पा० ६-२-१३९) इत्युत्तरपदप्रकृति-स्वरत्वम्। [119]आगन्त। आगच्छन्त्वित्यर्थे व्यत्ययेन मध्यमपुरुषबहुवचनम्। 'बहुलं छन्दसि' (पा० २-४-७३) इति शपो लुक्। तस्य 'तप्तनप्तनथनाश्च' (पा० ७-१-४५) इति तबादेशे '०अपित्' (पा० १-२-४) इति प्रतिषेधादङित्त्वादनुनासिकलोपाभावः। 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघातः। ञित्वरा सम्भ्रम इति धातोस्त्वरन्ते इति तूर्णयः। निरित्यनु-वृत्तौ 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' (उ० ४-५२) इति नित्। नित्त्वादाद्युदात्तः।

---

साह्वान्मीढ्वांश्च' इति सूत्रेण निपातनात् द्वित्वादिकं न भवति। तत्र प्रत्ययस्वरेणान्तोदात्तः दाश्वान् इति शब्दः। तस्य जसि नुमि दीर्घे दाश्वांस इति रूपम्। तस्य षष्ठ्येकवचने क्वसोः प्रत्ययस्य सम्प्रसारणे पररूपत्वे दाशुष इति रूपम्। दाश्वान् दाश्वांसौ दाश्वांसः, दाशुषः, इति सर्वत्र स्वराः।

[118] अप्तुरः। आप्धातोः 'आप्नोतेर्ह्रस्वश्च' इति सूत्रेण क्विपि अकारस्य ह्रस्वे च अप् इति पदम्। तुर धातोः 'क्विप् च' इति क्विपि तुर् इति। अप्तुर्-शब्दयोस्समासे ततो जसि अप्तुरः इति रूपम्। अत्र प्रथमाकारस्य 'धातोः' इत्युदात्तः, तु इत्युकारस्यापि धातोरि-त्युदात्तः प्राप्तः। समासेन समासस्वर अन्तोदात्तः प्रथमस्य चानुदात्तः। रेफोत्तराकारस्य सुप्त्वा-दनुदात्तत्वे तस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितः। अप्तुरः इति स्वराः। अथवा गतिकारकोपपदात्कृत्' (एभ्यः कृदन्तं प्रकृतिस्वरं स्यात्तत्पुरुषे) इत्युत्तरपदप्रकृतिस्वरः।

[119] गन्त। गमधातोर्लोटि मध्यमपुरुषबहुवचनम्। गम् शप् थ। अत्र 'बहुलं छन्दसि' इति शपो लोपः। थ-प्रत्ययस्य 'तस्थस्थमिपां तान्तन्तामः' इति तादेशे, तस्यापि 'तप्तनप्तनथ-नाश्च' इति तबादेशे गमत इति दशायां 'सार्वधातुकमपित्' इति पितो ङित्त्वाभावस्योक्ते-रङित्त्वेन 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्युपधालोपाभावे मकारस्यानुनासिके परसवर्णे च गन्त इति रूपम्।

[120]उस्रा इवेत्यत्रेवेन नित्यसमासो विभक्त्यलोपः 'पूर्वपदप्रकृतिस्वरत्वञ्च' (पा० वा० २-१-४) इति समासे पूर्वपदप्रकृतिस्वरत्वं नित्यम्। सरतीति सरः सूर्यः। पचाद्यच्। स्वः सरो येषां तानि स्वसराण्यहानि। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा० ६-२-१) इति स्वसरशब्द आद्युदात्तः ॥८॥

तृतीयामृचमाह। विश्वे देवास एतन्नामका देवविशेषा मेधं हविर्यज्ञसम्बद्धं जुषन्त—सेवन्ताम्। कीदृशाः? अस्रिधः—क्षयरहिताः शोषरहिता वा। एहिमायासः—सर्वतो व्याप्तप्रज्ञाः। यद्वा 'सौचीकमग्निमप्सु प्रविष्टमेहि मा यासीरिति यदवोचन्' तदनुकरणहेतुकोऽयं विश्वेषां देवानां व्यपदेश एहिमायास इति। अद्रुहः—द्रोहरहिताः। वन्हयो वोढारः। धनानां प्रापयितारः। [121]अस्रिधः—स्रिधेः क्षयार्थस्य शोषणार्थस्य वा संपदादिभ्यो भावे क्विपि नञा बहुव्रीहिः। पूर्वपदप्रकृतिस्वरं बाधित्वा 'नञ्सुभ्याम्' (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम्। [122]एहिमायासः। ईह चेष्टायाम्। आ समन्तादीहत इत्येहिः। '०इन्' (उ० ४-११९) इति सर्वधातुसाधारण इन्प्रत्ययो नित्वादाद्युदात्तः। एहिर्माया प्रज्ञा येषामिति बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। अथवा आङ् उदात्तादुत्तरस्येहीति लोण्मध्यमैकवचनस्य 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघात 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इत्येकार

[120] उस्रा इव। वस्धातोरक्प्रत्ययः, बाहुलकात्सम्प्रसारणे उस्रशब्दः। बाहुलकात् षत्वाभावः। वसन्त्येषु रसा इति उस्राः। इवेन सह नित्यसमासः। अत्र पूर्वपदप्रकृतिस्वरः। पूर्वञ्च पदं प्रत्ययस्वरेणान्तोदात्तम्। तथा च उस्राऽइव इति स्वराः।

[121] अस्रिधः। स्रिध् धातोः क्विप्, नञा बहुव्रीहिः न स्रिध् क्षयो येषान्ते अस्रिधः। क्विपः पित्वाद्धातुस्वरः। नञो निपातत्वात् 'निपाता आद्युदात्ताः' इत्याद्युदात्तत्वम्। ततो बहुव्रीहौ समासान्तोदात्तस्वरे प्राप्ते 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरो जातः—अस्रिधः इति। अस्यापवादकं सूत्रं 'नञ्सुभ्याम्' (एताभ्यां बहुव्रीहावुत्तरपदान्तोदात्तस्यात्) इति। 'अनुदात्तौ सुप्पितौ' इति सुपो जसोऽनुदात्तः, 'उदात्तादनुदात्तस्य स्वरितः' इति तस्य स्वरितः। तेन अस्रिधः इति स्वराः।

[122] एहिमायासः। आङ्पूर्वादीहधातोः इनिप्रत्यये एहिशब्दो निष्पद्यते। माङ् धातोर्यप्रत्यये स्त्रियां टापि माया-शब्दः। तस्य एहि-शब्देन एहिर्माया प्रज्ञा येषामिति बहुव्रीहौ जसि असुगागमे च रूपम् एहिमायास इति। अथवा—आङ्पूर्वादिण्-धातोर्लोटि शपि तल्लुकि लोटो मध्यमैकवचने सिपि तस्य स्थाने 'हि' इत्यादेशेऽपित्वान्ङित्वेन पूर्वगुणाभावे 'इहि' इति पदम्, तस्याङा गणे एहि इति सिध्यति। तत्पूर्वपदं 'मा यासीः' इति वाक्यीयमाया इत्यंशानुकरणमायाशब्देन बहुव्रीहौ जसोऽसुगागमे पूर्ववद् एहिमायास इति रूपं भवति। प्रकारद्वयेऽपि बहुव्रीहौ पूर्वपदं प्रकृत्या' इति पूर्वपदप्रकृतिस्वरः। पूर्वन्तु 'एहि' इति पदं प्रथमपक्षे नित्वादाद्युदात्तम्, द्वितीयपक्षे चाङस्स्वर उदात्त इत्याद्युदात्तत्वे शेषनिघाते द्वितीयवर्णस्य स्वरितः, तृतीयचतुर्थपञ्चमानां प्रचयः। तेन—एहिमायास इति स्वरविन्यासः।

उदात्तः। एहीत्येतत्पदमुक्तं मा यासीरित्यत्र मायेत्यक्षरद्वयं येषां त एहिमायासः। पूर्वपदप्रकृतिस्वरः। अद्रुहः। द्रुह जिघांसायाम्। सम्पदादित्वाद्भावे क्विपि बहुव्रीहौ 'नञ्‌सुभ्याम्' (पा० ६-१-१७२) इत्युत्तरपदान्तोदात्तत्वम्। मेधम्। मेधृ संगमे च। मेध्यते देवैः संगम्यत इति मेधं हविः। कर्मणि घञ्। ञित्स्वरादाद्युदात्तः। जुषन्त सेवन्तामित्यर्थं 'छन्दसि लुङ्लङ्लिटः'(पा० ३-४-६) इति धातुसम्बन्धे लङ्। यत उक्तरूपा विश्वे देवा अतो जुषन्तेति द्रुहादिपदार्थैः सम्बन्धात्। 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६-४-७५) इत्यडागमाभावः। वन्हयः। निरित्यनुवृत्तौ 'वहिश्रि०' (उ० ४-५२) इत्यादिना विहितस्य निप्रत्ययस्य नित्स्वरादाद्युदात्तत्वम्॥९॥

सारस्वते तृचे या प्रथमा [123]सान्वारम्भणीयेष्टौ सरस्वत्याः पुरोऽनुवाक्या। तथा दर्शपूर्णमासावारप्स्यमान इत्यस्मिन्खण्डे 'पावकाः नः सरस्वती पावीरवी कन्या चित्रायुः' (आ० श्रौ० २-८) इति सूत्रितम्। तामेतामृचमाह—

सरस्वती देवी वाजेभिर्हविर्लक्षणैरन्नैर्निमित्तभूतैः। यद्वा यजमानेभ्यो दातव्यैरन्ननिमित्तभूतैर्नोऽस्मदीयं यज्ञं वष्टु कामयताम्। कामयित्वा च निर्वहत्वित्यर्थः। तथा चारण्यकाण्डे श्रुत्यैवं व्याख्यातम्—'यज्ञं वष्टि्वति यदाह यज्ञं वहत्वित्येव तदाह (ऐ० आ० १-१-४) इति। कीदृशी सरस्वती पावका—शोधयित्री। वाजिनीवती—अन्नवत्क्रियावती। धियावसुः—कर्मप्राप्यधननिमित्तभूता। वाग्देवतायास्तथाविधं धननिमित्तत्वमरण्यकाण्डे श्रुत्या व्याख्यातम्—'यज्ञं वष्टु धियावसुरिति। वाग्वै धियावसुः (ऐ० आ० १-१-४) इति। श्येनः सोम इत्यादिषु पञ्चत्रिंशत्संख्याकेषु देवताविशेषवाचिषु पदेषु सरमा सरस्वती (निघ० ५-५)

---

[123] अन्वारम्भणीयेष्टौ। 'दर्शपूर्णमासावारप्स्यमानोऽन्वारम्भणीयां निर्वपेत्' इति वाक्यविहितेष्टिरन्वारम्भणीया दर्शपूर्णमासारम्भं निमित्तीकृत्यानुष्ठेया भवति। आरम्भणीयाशब्देनापीयं व्यवह्रियते। 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति यावज्जीवकर्तव्यत्वेन विहितेयमिष्टिर्नित्या। आहिताग्निरिमामिष्टिं यदाऽरभते ततः पूर्वमिमां सकृत्कुर्याद्यजमानः। प्रतिमासं दर्शपूर्णमासयोरारम्भे विद्यमानेऽपि तस्य प्रयोगरूपारम्भत्वान्न प्रतिप्रयोगमन्वारम्भणीयेष्टिः प्रवर्तते। दर्शपूर्णमासप्रयोगभेदेऽपि कर्मण एकत्वात्तदारम्भोऽप्येक एव। अतः सकृदेवेयमनुष्ठेयेति मीमांसायां विचार्य निर्णीतम्। अस्यामिष्टौ चतस्रो देवताः–अग्नाविष्णू, सरस्वती, सरस्वान्, अग्निर्भगी च। अग्नाविष्ण्वोः–एकादशकपालः पुरोडाशो द्रव्यम्, सरस्वत्याः–चरुः, सरस्वतः–द्वादशकपालः, अग्नेर्भगिनः–अष्टाकपालः पुरोडाशः। पौर्णमासेष्टौ 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इति विहितस्याग्नेययागस्येयं विकृतिः। अतः पौर्णमासतन्त्रमत्र प्रवर्तते। अस्यामिष्टौ चतुर्णामपि प्रधानयागानां याज्यापुरोनुवाक्ये भिन्ने। तत्राग्नाविष्ण्वोः– 'अग्नाविष्णू सजोषसा' 'अग्नाविष्णू महि धाम प्रियम्' इति, सरस्वत्याः– 'पावका नस्सरस्वती' 'पावीरवी कन्या चित्रायुः' इति, सरस्वतः–'पीपिवांसं सरस्वतः' 'दिव्यं सुपर्णं वायसम्' इति, अग्नेर्भगिनः– 'आ सर्वं सवितुर्यथा' 'स नो राधांस्याभर' इति। अत्र पूर्वो मन्त्रः पुरोनुवाक्या, उत्तरश्च याज्या। इदमन्वारम्भणीयेष्टेः स्थूलं स्वरूपम्। अत्र सरस्वतीयागस्य 'पावका नः' इति मन्त्रः पुरोनुवाक्येति भाष्यवाक्यस्यार्थः।

इति पठितम्। एतामृचं यास्क एवं व्याचष्टे—'पावका नः सरस्वत्यन्नैः अन्नवती यज्ञं वष्टु धियावसुः कर्मवसुः' (नि० ११-२६) इति। पवनं पावः शुद्धिस्तं कायतीति पावका। कै गै रै शब्दे। 'आतोऽनुपसर्गे कः' (पा० ३-२-३)। कृदुत्तरपदप्रकृतिस्वरत्वेनान्तोदात्तत्वम्। यद्वा—पुनातीत्यर्थे ण्वुलि प्रत्ययस्थात्कात्पूर्वस्यात 'इदाप्यसुपः' (पा० ७-३-४४) इतीत्वस्याभावोऽन्तोदात्तत्वं च छान्दसं द्रष्टव्यम्। सरश्शब्दः सर्तेरसुन्नन्तत्वादाद्युदात्तः। मतुब्ङीपोः पित्त्वादनुदात्तत्वम्। वाजेभिः। वाजशब्दो वृषादित्वादाद्युदात्तः। स ह्याकृतिगणः। वाजोऽन्नमास्विति वाजिन्यः क्रियाः। 'अत इनिठनौ' (पा० ५-२-११५) इतीनिप्रत्ययः। ताः क्रिया यस्याः सन्ति सा सरस्वती [124]वाजिनीवती। 'छन्दसीरः' (पा० ८-२-१५) इति मतुपो वत्वम्। मतुब्ङीपोः पित्त्वेनानुदात्तत्वादिनेः प्रत्ययस्याद्युदात्तत्वमेव शिष्यते। यज्ञम्। 'यजयाच' ० (पा० ३-३-९०) इत्यादिना नङ्प्रत्ययस्वरेणान्तोदात्तः। [125]वष्टु। वश कान्तौ। कान्तिरभिलाषः। 'अदिप्रभृतिभ्यः शपः' (पा० २-४-७२) इति शपो लुक्। निघातः। [126]धियावसुः। धिया कर्मणा वसु यस्याः सकाशाद्भवति सा धियावसुः। 'सावेकाचः०

---

[124] वाजिनीवती। वाजो बलमन्नं वा, तेन युक्ता वाजिनी तद्वती वाजिनीवती। वाजशब्दादिन् ततो मतुप्। वाजोऽन्नमास्विति वाजिन्यः क्रियाः। 'अत इनिठनौ' इति इनिप्रत्ययः। ताः क्रियास्सन्त्यस्यामिति वाजिनी सरस्वती। तत्र वाजशब्दो वृषादिगणपठितत्वादाद्युदात्तः— वाजः इति। तत इनिप्रत्यये प्रत्ययस्वरेणान्तोदात्तो वाजिशब्दः। ततस्त्रियां 'ऋन्नेभ्य' इति ङीप्। तस्य पित्त्वादनुदात्तत्वम्—वाजिनी इति मध्योदात्तः, ततो मतुपि तस्य पित्त्वादनुदात्तत्वे वाजिनीवत् इति जायते। ततः स्त्रियां 'उगितश्च' इति ङीपि तस्यापि पित्त्वादनुदात्तत्वम्—वाजिनीवती इति। तत्र प्रथमस्याचः 'उदात्तस्वरितपरस्य सन्नतरः' इति सन्नतरस्स्वरः। तृतीयस्याचः उदात्तपरत्वात् 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितः। चतुर्थपञ्चमयोस्तु 'स्वरितात्परेषामनुदात्तानाम्' इति प्रचयः। तथाच वाजिनीवती इति स्वरसिद्धिः।

[125] वष्टु। वशधातोर्लोटि शपि तल्लोपे प्रथमपुरुषैकवचने तिप्रत्ययस्येकारस्य 'एरुः' इत्युकारे जाते 'व्रश्च-भ्रस्ज-सृज-मृज-यज-राज-भ्राज-च्छशां षः' इति सूत्रेण धात्वन्तस्य शकारस्य षत्वे सति प्रत्ययतकारस्य 'ष्टुना ष्टुः' इति ष्टुत्वे वष्टु इति रूपम्।

[126] धियावसुः। धीशब्दस्य तृतीयैकवचने टाप्रत्यये तस्मिन्परतो [illegible]कारस्य 'अचिश्नुधातुभ्रुवां य्वोरियङुवङौ' इति इयङादेशे धियाशब्दः। वसधातोरौणादिक उप्रत्यये वसुशब्दः। धिया वसुः धनं यस्येति बहुव्रीहिः। विभक्त्यलोपश्छान्दसः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरः। पूर्वं पदं धियेति। तत्र 'धातोः' इति धीकारस्योदात्तत्वे तदनन्तरं ट प्रत्ययस्य

(पा० ६-१-१६८) इति विभक्तिरुदात्ता। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा० ६-२-१) इति विभक्तिस्वर एव शिष्यते। छान्दसस्तृतीयाया अलुक् ॥१०॥

द्वितीयामृचमाह। या सरस्वती सेयमिमं यज्ञं दधे—धारितवती। कीदृशी? सूनृतानां प्रियाणां सत्यवाक्यानां चोदयित्री प्रेरयित्री। सुमतीनां शोभनबुद्धियुक्तानामनुष्ठातॄणां चेतन्ती— तदीयमनुष्ठेयं ज्ञापयन्ती। [127]चोदयित्री। चुद प्रेरणे। ण्यन्तात्तृच्। चित्त्वादन्तोदात्तः। 'ऋन्नेभ्यो ङीप्' (पा० ४-१-५) इति ङीप्। तस्य 'उदात्तयणो हल्पूर्वात्' (पा० ६-१-१७४) इत्युदात्तत्वम्। सूनृतानाम्। ऊन परिहाणे इत्यतः 'क्विप् च' (पा० (३-२-७६) इति क्विपि सुतरामूनयत्यप्रियमिति सून् इति प्रियमुच्यते। तच्च तदृतं सत्यञ्चेति सूनृतम्। 'परादिश्छन्दसि बहुलम्' (पा० ६-२-१९९) इत्युत्तरपदान्तोदात्तत्वम्। चेतन्ती। चिती सञ्ज्ञाने। अत्र शपो ङीपश्च पित्त्वादनुदात्तत्वम्। शतुश्चाद्युपदेशाल्लसार्वधातुकस्वरेणानुदात्तत्वम्। धात्वन्तस्वर एव शिष्यते। [128]सुमतिशब्दस्य मतुपि ह्रस्वत्वात् 'नामन्यतरस्याम्' (पा० ६-१-१७७) इति विभक्तेरुदात्तत्वम् ॥११॥

---

सुप्त्वेनानुदात्तत्वे तस्य स्वरितः प्राप्तः धिया इति, किन्तु 'सावेकाचस्तृतीयादिर्विभक्तिः,' इति सूत्रेण विभक्तेरुदात्तस्वरः। तथासति 'अनुदात्तं पदमेकवर्जम्' इति पूर्वस्यानुदात्तत्वम् धिया इति। समासानन्तरमप्ययमेव स्वरः। वकाराकारस्यानुदात्तस्योदात्तपरत्वात्स्वरितः। ततः परस्योकारस्य प्रचयः, तेन धियावसुः इति स्वरसिद्धिः।

[127] चोदयित्री। चुदधातोर्ण्यन्तात् तृच् प्रत्ययः, स्त्रियां ङीप्। चोदयति प्रेरयतीति चोदयित्री 'चितः' इत्यनेनान्तोदात्तः। तत्र ङीपः पित्त्वादनुदात्तत्वे चोदयित्री इति स्वरः स्यात्। किन्तु 'उदात्तयणो हल्पूर्वात्' (उदात्तस्थाने यो यण् हल्पूर्वस्तस्मात्परा नदी शसादिर्विभक्तिश्च उदात्ता स्यात्) इति ङीप उदात्तत्वम्। तृच् प्रत्ययान्ताच्चोदयितृशब्दात् 'ऋन्नेभ्यो ङीप्' इति स्त्रियां ङीप्। चोदयितृई इति स्थिते ऋकारस्य यणादेशः। सच हल्पूर्वः उदात्तस्थाने चास्ति। तस्मात्परा या नदी ई इति तस्या उदात्तत्वे चोदयित्री इति शेषनिघातेन स्वरसिद्धिः।

[128] सुमतिशब्दस्य। मनु अवबोधने धातोः क्तिच् प्रत्ययान्तो मतिशब्दोऽन्तोदात्तः। तस्य सुशब्देन समासः—शोभना मतिर्येषान्त इति। तत्र समासान्तोदात्तस्वरे सुमतीनां इति जाते 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' इति पूर्वपदप्रकृतिस्वरः सुमतीनां इति। अस्याप्यपवादकेन 'नञ्सुभ्याम्' इत्यनेनोत्तरपदान्तोदात्तः प्राप्तः सुमतीनां इति। सुमतिशब्दस्य षष्ठीबहुवचने आमो नुटि 'नामी'ति दीर्घे सुमतीनामिति पदसिद्धिः। तत्रामः सुप्त्वेनानुदात्तस्वरः प्राप्तः। तत्र

तृतीयामृचमाह। द्विविधा हि सरस्वती विग्रहवद्देवता नदीरूपा च। तत्र पूर्वाभ्यामृग्भ्यां विग्रहवती देवता प्रतिपादिता। अनया तु नदीरूपा प्रतिपाद्यते। तादृशी सरस्वती केतुना कर्मणा प्रवाहरूपेण महो अर्णः प्रभूतमुदकं प्रचेतयति। प्रकर्षेण ज्ञापयति। किञ्च स्वकीयेन देवतारूपेण विश्वा धियः सर्वाण्यनुष्ठातृप्रज्ञानानि विराजति। विशेषेण दीपयति। अनुष्ठानविषयबुद्धीः सर्वदोत्पादयतीत्यर्थः। सरस्वत्या द्विरूपत्वं यास्को दर्शयति— 'तत्र सरस्वतीत्येतस्य नदीवद्देवतावच्च [129]निगमा भवन्ति' (नि० २-२३) इति। एकशतसङ्ख्याकेषूदकनामस्वर्णः क्षोदः (निघ० १-१२) इति पठितम्। एतामृचं यास्को व्याचष्टे— 'महदर्णः सरस्वती प्रचेतयति प्रज्ञापयति केतुना कर्मणा प्रज्ञया वेमानि च सर्वाणि प्रज्ञानान्यभिविराजति' (नि० ११-२७) इति। महो अर्णः। महदिति तकारस्य व्यत्ययेन सकारः। तस्य रुत्वोत्वगुणाः। प्रातिपदिकस्वरेणान्तोदात्तः।[130] 'एङः पदान्तादति' (पा० ६-१-१०९) इति पूर्वरूपे प्राप्ते 'प्रकृत्यान्तः पादमव्यपरे' (पा० ६-१-११५) इति प्रकृतिभावः। अर्तीत्यर्णः। 'उदके नुट् च' (उ० ४-१९८) इत्यसुन्प्रत्ययो नुडागमश्च। केतुना। प्रातिपदिकस्वरेणान्तोदात्तः। विश्वाः। विश्वशब्दः क्वन्प्रत्ययान्त आद्युदात्तः ॥१२॥

इति प्रथमस्य प्रथमे षष्ठो वर्गः ॥

---

प्रकृते सुमतिशब्दान्मतुपस्सम्भावनायां ह्रस्वान्तत्वेन ततो विहितस्य नामः 'नामन्यतरस्याम्' (मतुपि यो ह्रस्वस्तदन्तादन्तोदात्तात्परो नामुदात्तो वा स्यात्) इति पाक्षिक उदात्तः। तथाच सुमतीनाम् इति स्वरास्सिध्यन्ति।

[129] देवतावच्च। ऋग्वेदे सरस्वती नदीवत् देवतावच्च स्तूयते। तत्र नदीनां स्तुतिः कर्मसु कथमुपयुज्येत तासामचेतनत्वादिति शङ्का भवेत्। अचेतनानामपि तदभिमानिदेवतास्वीकारेण स्तुत्युपपत्तिः याज्ञिकैराश्रीयत इति न दोषः।

[130] एङःपदान्तादति। महो अर्ण इत्यत्र संहितायां पूर्वरूपं प्राप्तम्, तदपवादकं सूत्रं [59]'प्रकृत्यान्तःपादमव्यपरे' इति। ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यात् अति परे ननु वकारयकारपरेऽति इति तदर्थः।

प्रथमसूक्तगतमन्त्राणां स्वरसञ्चाराय प्राधान्येन षट्त्रिंशत्सूत्राणि, द्वितीयसूक्तगतमन्त्राणां स्वरसञ्चाराय ततोऽधिकानि पञ्चदश सूत्राणि, ततोऽप्यधिकानि नव सूत्राणि तृतीयसूक्तस्यावश्यकानीति सूक्तत्रयं मिलित्वा षष्टिसूत्राणि स्वरसञ्चारायावश्यकानि ॥३॥

॥ ४ ॥

१-४

प्रथमे मण्डले द्वितीयानुवाके चत्वारि सूक्तानि। सुरूपेत्यादिकं दशर्चं प्रथमं सूक्तम्। [131]'सुरूपकृत्नु दश' (अनु० १-१) इत्यनुक्रान्तत्वात्। पूर्ववन्मधुच्छन्दसो गायत्रस्य चानुवृत्तेस्ते एवर्षिच्छन्दसी। इन्द्रं पृच्छेति चतुर्थ्यामृचि [132]लिङ्गदर्शनादिन्द्रो देवता। [133]अभिप्लवषडहे

---

[131] सुरूपकृत्नु दश। अनुक्रमणिकाकारः 'ऋषिदैवतच्छन्दांस्यनुक्रमिष्यामः' इति प्रतिज्ञाय प्रतिसूक्तं मन्त्रगतसंख्यां देवतां छन्दः ऋषिञ्च निर्दिशति। यत्रैतेष्वेकमेव निर्दिशेत्तत्रान्यत्पूर्ववदवगन्तव्यम्। पूर्वस्मिंस्तृतीयसूक्ते द्वादशर्चः, गायत्रीच्छन्दः, वैश्वामित्रो मधुच्छन्दाश्चर्षिः। अस्मिन् सूक्ते 'दश' इति संख्यामात्रस्य निर्देशात् छन्दः ऋषिश्च पूर्ववदेवेति प्रत्येतव्यम्। तदिदं भाष्यकारः प्रदर्शयति पूर्ववदिति।

[132] लिङ्गदर्शनात्। सूक्तगतासु दशस्वृक्षु चतुर्थपञ्चमषष्ठनवमदशमेष्वेवेन्द्रशब्दो दृश्यते। अत एतासामृचामिन्द्रदेवताकत्वं स्पष्टम्, किन्तु सूक्तस्य समग्रस्य का देवता ? इति शङ्कायामाह--लिङ्गेति। पूर्वमीमांसायां प्रथमाध्यायस्य चतुर्थपादे तत्सिद्धिपेटिकायां 'लिङ्गसमवायात्' इति सूत्रयन् जैमिनिः 'प्राणभृत उपदधाति' इत्यत्र प्राणभृच्छब्दः प्राणभृदप्राणभृत्समुदायवाचीति निर्णीतवान्। तथाहि--'प्राणभृत उपदधाति' इति विधेः प्राणशब्दं मन्त्रद्वारा बिभ्रतीति व्युत्पत्त्या प्राणशब्दकमन्त्रोपधेयेष्टका उपदध्यादित्यर्थः। तत्रोपधेया इष्टकाः पञ्चाशत्संख्याकाः। तासु तिस्रः प्राणभृतः। इतरास्सप्तचत्वारिंशदिष्टका अप्राणभृतः। प्राणशब्दवतां मन्त्राणामल्पत्वेऽपि प्राणभृच्छब्दस्य प्राणभृदप्राणभृत्सु लिङ्गसमवायाद्वृत्तिः। लिङ्गं प्राणप्रतिपादनसामर्थ्यम्, तस्य समवायः सम्बन्धमात्रम्। तदादाय वनस्यैकदेशे पुष्पितेऽपि 'वनं पुष्पितम्' इति यथा तद्वत् प्राणभृच्छब्दः प्राणभृदप्राणभृत्समुदाये वर्तते। अयमेव छत्रिन्याय इति लोके व्यवह्रियते। छत्रिष्वच्छत्रिषु गच्छत्सु कतिपयानां छत्रित्वमादाय 'छत्रिणो गच्छन्ति' इत्यत्र छत्रिपदं छत्र्यच्छत्रिसमुदाये प्रयुज्यते, तथैव पञ्चसु मन्त्रेष्विन्द्रसम्बन्धमादाय समग्रं सूक्तमैन्द्रमित्यवगन्तव्यमिति भाष्याशयः।

[133] अभिप्लवषडहे। अभिप्लवषडहस्य स्वरूपं टिप्पण्या ८२ अङ्के प्रदर्शितम्। अस्मिन् षडहे प्रथमतृतीयपञ्चमानि दिनानि रथन्तरपृष्ठानि, रथन्तरेण साम्ना पृष्ठस्तोत्रस्य गीयमानत्वात्, द्वितीयचतुर्थषष्ठानि च बृहत्सामानि, बृहता साम्ना पृष्ठस्तोत्रस्य गीयमानत्वात्। प्रथममन्तिमञ्च दिनमग्निष्टोमसंस्थाके, मध्यवर्तीनि चत्वारि दिनान्युक्थ्यसंस्थाकानीत्युक्तम्। तत्र सामगाः निर्दिष्टेषु तृचेषु सामानि गायन्तः 'त्रिवृद्बहिष्पवमानम्' 'पञ्चदशान्याज्यानि' 'सप्तदशानि पृष्ठानि' 'एकविंशमग्निष्टोमसाम' इति विध्यनुसारं स्तोत्रेषु संख्यासम्पत्तिं कुर्वन्ति। प्रतितृचमृक्त्रये विद्यमानेऽपि ताण्ड्यमहाब्राह्मणोक्तरीत्याऽऽवृत्तिं कुर्वाणास्तास्तास्संख्यासम्पादयन्ति। इमा एव संख्याः स्तोमशब्देनोच्यन्ते। अतएव बहिष्पवमानं स्तोत्रं त्रिवृत्स्तोमकम्, अर्थान्नवसंख्यायुक्तम्, आज्यस्तोत्राणि पञ्चदशस्तोमकानि--पञ्चदशसंख्यायुक्तानि इत्येवं व्यवहारः। तत्तत्संख्यासम्पत्तय आवृत्तिप्रकाराः ताण्ड्यब्राह्मणे प्रतिपादिताः। इम एव प्रकारा

ब्राह्मणाच्छंसिनः प्रातःसवने स्तोमवृद्धावावापार्थानि सुरूपकृत्नुमित्यादीनि षट् सूक्तानि। सूत्रितञ्चाभिप्लवपृष्ठ्यषहानीति खण्डे 'ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति षट् सूक्तानि' (आ० श्रौ० ७-५) इति। आद्यानि त्रीणि सूक्तानि [184]महाव्रते निष्केवल्य औष्णिहतृचाशीतौ

---

विष्टुतिशब्देन कीर्त्यन्ते। ते च प्रकारास्ताण्ड्यब्राह्मणभूमिकायामस्मत्पूज्यपादैः प्रदर्शिताः। तत एव तेऽवगन्तव्याः। तत्राभिप्लवषडहे स्तोत्रेषु त्रिवृत् पञ्चदशः सप्तदश एकविंशश्चेति चत्वार एव स्तोमास्सन्ति। ते चोत्तरोत्तरं वृद्धियुक्ताः। सामगाः यत्रैव स्तोत्रे स्तोमवृद्धिं कुर्युः, तत्र होत्रकैरपि मित्रावरुणब्राह्मणाच्छंस्यच्छावाकैः नित्यं शंसनीया ऋचश्शस्त्वा स्तोमवृद्धिनिमित्तमधिका ऋचश्शंसनीयाः। शंसनेऽधिकानामृचां प्रक्षेप एवावाप इत्युच्यते। तस्य तस्य होत्रकस्यावापयोग्या ऋच आश्वलायनेन प्रदर्शिताः। 'होत्रकाः परिशिष्टानावापानुद्धृत्य मित्रं वयं हवामहे, मित्रं हुवे पूतदक्षम्, अयं वां मित्रावरुणौ, आ नो मित्रावरुणेति तृचाः —————————————— यच्चिद्धिते विश इति वारुणम्, एतस्य तृचमावपेत मैत्रावरुणो नित्यादधिकं स्तोमकरणात्' (आश्व. श्रौ. ७।५.) इति सूत्रम्। अस्यार्थः— होत्रकाः—मैत्रावरुणब्राह्मणाच्छंस्यच्छावाकाः, परिशिष्टान्—षडहस्तोत्रियेषु स्तोत्रियत्वेनानुरूपत्वेन वा गृहीतान् तृचान्, उध्दृत्य—संगृह्य, एतस्य— 'मित्रं वयं हवामहे' इति प्रदर्शितानामृचां समुदायस्य तृचं गृहीत्वा परिशिष्टावापस्थाने मैत्रावरुण आवपेत, नित्यात् स्वीयाच्छस्त्रादधिक शंसेत्। अत्र निमित्तं प्रदर्शयति—स्तोमकरणादिति। स्तोमातिशंसनप्रयोजनकारितोऽयमावाप इति। प्रदर्शितादृक्समुदायाद्यथेच्छमावापो न कर्तुं शक्यते, किन्तु स्तोमानुगुणा एव ऋच आवप्तव्या इत्याह सूत्रकारः— 'एकया द्वाभ्यां वा प्रातस्सवने' इति। तत्रापि स्तोमविशेषानुसारमावप्तव्यानामृचां संख्याम्— 'पञ्च सप्तदशे, नवैकविंशे, द्वादशचतुर्विंशे, पञ्चदशत्रिणवे, एकविंशतिं त्रयस्त्रिंशे, द्वात्रिंशतं चतुश्चत्वारिंशे, षट्त्रिंशतमष्टाचत्वारिंशे' (आ. श्व. श्रौ. ७. ५) इति। एवं ब्राह्मणाच्छंसिन आवप्तव्या ऋचः प्रदर्शयति— ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति षट् सूक्तानि' इति। एवञ्च- अभिप्लवषडहे—गवामयने तत्तन्मासि क्रियमाणे षडहसाध्ये सोमयागे, ब्राह्मणाच्छंसिनः—तन्नाम्नो होत्रकस्यर्त्विजः शस्त्रे, प्रातस्सवने स्तोमवृद्धौ—स्तोत्रगतसंख्यायां पूर्वोक्तप्रकारेण वृद्धौ सत्याम्, आवापार्थानि—अधिकतया शंसनीयानि सुरूपकृत्नुमूतय इति षट् सूक्तानि विनियुज्यन्त इति भाष्यार्थः।

[134] महाव्रते। गवामयनस्वरूपं टिप्पण्या ८२ अङ्के प्रदर्शितम्। तत्र सप्तममासस्योपान्तिमं दिनं महाव्रतमित्युक्तम्। तत्र षष्ठे मासि त्रयोऽभिप्लवषडहाः, एकः पृष्ठ्यषडहः, अभिजिदेकाहः, त्रयः स्वरसामान इत्यष्टाविंशतिदिनानि प्रतिपाद्य, अस्यैव मासस्य प्रतिलोमतया सप्तमे मासि कर्मणामनुष्ठानमित्यप्युक्तम्। तथा सति सप्तममासस्याप्यष्टाविंशतिदिनानि जायन्ते। त्रिंशद्दिनात्मकमासस्य कल्पनायोपान्तिमदिने महाव्रतमन्तिमे च दिनेऽतिरात्रः। एवमनुष्ठानप्रकारः कश्चन। सप्तममासस्योपान्तिमदिने महाव्रतम् अन्तिमे च दिनेऽतिरात्रमननुष्ठाय द्वादशमासान्ते कर्मद्वयमिदमनुष्ठीयत इति प्रकारान्तरम्।

महाव्रतस्येदं संक्षिप्तं स्वरूपम्–ताण्ड्यमहाब्राह्मणे चतुर्थाध्यायस्य दशमखण्डादारभ्य पञ्चमाध्यायस्य षष्ठखण्डपर्यन्तं महाव्रतनिरूपणं विस्तरशः कृतम्। प्रथमं महाव्रतशब्दनिर्वचनावसरे–सर्वजगत्कारणभूतः प्रजापतिर्विविधाः प्रजास्सृष्ट्वा भृशं श्रान्तोऽभवत। तं विलोक्य देवा महाव्रताख्यं कर्मानुष्ठाय तत्र महदन्नं संवत्सरपच्यं सम्भृत्य तस्मै प्रायच्छन्। तदन्नं प्रजापतिरभक्षयत्। भक्षितं तदन्नं प्रजापतिमधिनोत् इत्याख्यायिकां प्रतिपाद्य 'महन्मयाव्रतं यदिममधिन्वीत् तन्महाव्रतस्य महाव्रतत्वम्' इति श्रुतम्। अनेन महच्च तद्व्रतञ्च महाव्रतमिति व्युत्पत्त्या कर्मणो नामधेयमिदं पदमिति सिध्यति। महाव्रतमिति स्तोत्रस्यापि नाम। तत्स्तोत्रयुक्तत्वादिदं दिनमपि महाव्रतमिति व्यवह्रियते। अस्मिंस्तोत्रे पञ्चविंशः स्तोमः। पञ्चविंशे पञ्च पञ्चेति पञ्चावयवाः। ते च शिरः द्वौ पक्षौ पुच्छः आत्मेति विभक्ताः। पञ्चावयवयुक्तं होतुःपृष्ठस्तोत्रं महाव्रतमित्युच्यते। तत्र शिरसि त्रिवृत्, पक्षयोः पञ्चदशः सप्तदशश्च, पुच्छे एकविंशतिः, आत्मनि पञ्चविंशतिरिति स्तोमा विहिताः। शिरसि गायत्रं, पक्षयोः रथन्तर बृहत्, पुच्छे यज्ञायज्ञीयम्, आत्मनि च राजनं सामेति पञ्च सामानि विहितानि। अस्य राजनस्य साम्नो याः पञ्च भक्तयः (अवयवाः) प्रस्तावोद्गीथप्रतिहारोपद्रवनिधनाख्यास्ताः पञ्च पञ्च संख्याका भवन्ति–'पञ्चकृत्वः प्रस्तौति, पञ्चकृत्वोद्गायति, पञ्चकृत्वोपद्रवति, पञ्चकृत्वो निधनमुपयन्ति' (ऐ.आ.२.२.४.)इति श्रुतेः। एवं पञ्चविधमहाव्रतस्तोत्रस्य शिरःप्रभृतिगान् पञ्चावयवान् अध्वर्युः मैत्रावरुणः ब्राह्मणाच्छंसी यजमानः उद्गाता चेति पञ्च सहोपक्रम्य युगपदुद्गायेयुरित्येकः पक्षः, उद्गातैव सर्वं स्तोत्रमुद्गायेदिति पक्षान्तरं ब्राह्मणे कीर्तितम्। अध्वर्युश्शिरसा, मैत्रावरुणो दक्षिणेन पक्षेण, ब्राह्मणाच्छंस्युत्तरेण पक्षेण, यजमानः पुच्छेन, उद्गाता चात्मनेति विभागः। तत्र सर्वं स्तोत्रं त्रिभिरुद्गातृप्रस्तोतृप्रतिहर्तृभिर्मिलित्वा सामावयवविभागेन गेयं भवति। प्रकृतेऽध्वर्युप्रभृतीनामुद्गातृगणानन्तर्गतानामपि उद्गातृकार्यं विधानं 'अध्वर्युश्शिरसोद्गायेत्' इत्यादि ब्राह्मणे दृश्यते। तत्राध्वर्योः मैत्रावरुणस्य ब्राह्मणाच्छंसिनो यजमानस्य चापरौ द्वौ कौ भवतो गानार्थमित्याशङ्क्य सायणाचार्येण स्वीये भाष्य एवं सङ्गतिः कृता अध्वर्योः प्रस्तोतृप्रतिहर्तारौ, मैत्रावरुणस्य अच्छावाकग्रावस्तुतौ प्रस्तोतृप्रतिहर्तारौ, ब्राह्मणाच्छंसिनः-आग्नीध्र पोतारौ प्रस्तोतृप्रतिहर्तारौ, यजमानस्य सुब्रह्मण्योन्नेतारौ प्रस्तोतृप्रतिहर्तारौ इति। अथवा-सर्वत्र प्रस्तोतृप्रतिहर्तारावेव क्रमेण स्वीयं कार्यं कुरुत इति पक्षान्तरम्। 'सर्वे महाव्रतेन स्तुवीरन्' इति पक्षं निरस्य 'अथो खल्वाहुः कथमध्वर्युर्बह्वृचः साम गायेदित्युद्गातैव सर्वेणोद्गायेत्तदेवं समृद्धम्' इति ब्राह्मणेन द्वितीयः पक्ष एव स्वीकृतः।

तत्र स्तोत्रकाले उद्गाता औदुम्बरीमासन्दीमारुह्योपविश्य गायेत्, होता डोलामारुह्य तत्रोपविश्य निष्केवल्यशस्त्रं शंसेत्, अध्वर्युः फलक उपविश्य प्रतिगरं कुर्यात्, मैत्रावरुणादयः कुशासनान्यधितिष्ठेयुरित्यादयो नियमाः केचन महाव्रतस्तोत्रावसरे ब्राह्मणेन विहिताः। इदं महाव्रतस्तोत्रस्य संक्षिप्तं स्वरूपम्। तत्रान्तिमं राजनाख्यं साम, तेन साम्ना क्रियमाणस्याऽऽधारभूतो यस्तृचः–'तदिदास भुवनेषु ज्येष्ठम्' इति तेन तृचेन होता निष्केवल्याख्यं शस्त्रं प्रारभेत। ऐतरेयारण्यके निष्केवल्यशस्त्रस्यापि महाव्रतस्तोत्रवत् पक्षिरूपत्वेन संस्तवः कृतः। निष्केवल्यशस्त्रस्य शिरः– 'इन्द्रमिद्गाथिन' इत्यादिमन्त्रसमूहः। दक्षिणः पक्षः–'अभित्वा शूर' इत्यादिकः। उत्तरः पक्षः– 'त्वामिद्धि हवामहे' इत्यादिकः। पुच्छम्-'इमानु कम्' इत्यादिः।

शस्तव्यानि। उक्तं च शौनकेन 'सुरूपकृत्नुमूतय इति त्रीण्येन्द्र सानसिं रयिमिति सूक्ते' (ऐ० आ० ५-२-५) इति। [185]चतुर्विशेऽहनि माध्यन्दिने सवने ब्राह्मणाच्छंसिनः सुरूपकृत्नुमूतय इति वैकल्पिकः

---

मध्यशरीररूप आत्मा— 'तदिदास भुवनेषु' इत्यादिः। एवं शस्त्राणां पाठानन्तरं होत्रा शंसनीयं शस्त्रभागं विधत्ते 'गायत्री तृचाशीतिः' (ऐ.आ. ५.२.४.) इति। अत्र तिस्रस्तृचाशीतयो विहिताः— गायत्री तृचाशीतिः, बार्हती तृचाशीतिः, औष्णिही तृचाशीतिरिति। तिसृणामृचां समूहस्तृचः। तेषामशीतिः तृचाशीतिः। सा गायत्रीच्छन्दस्का, बृहतीच्छन्दस्का, उष्णिक्छन्दस्का चेत्यर्थः। तत्रौष्णिहतृचाशीतौ 'सुरूपकृत्नुमूतय इति त्रीणि' (ऐ.आ. ५.२.६.) इति विधिना त्रीणीमानि सूक्तानि विनियुक्तानि। त्रिषु सूक्तेषु मिलित्वा गायत्रीच्छन्दस्का ऋचः त्रिंशत्संख्याका वर्तन्ते। चतुर्विंशत्यक्षरा गायत्री, उष्णिहि तु—अष्टाविंशत्यक्षराणि भवन्ति। सति चैवं कथमुष्णिहतृचाशीतौ गायत्रीच्छन्दस्कानामृचां विनियोग इति शङ्कास्थानं भवति। तत्समाधानं तत्रैव कृतम्— 'गायत्र्यः सम्पदौष्णिहः, सप्त सप्त गायत्र्यः षट्षळुष्णिहो भवन्ति' इति। सप्तसु गायत्रीच्छन्दस्केषु मन्त्रेषु अष्टषष्ट्युत्तरशतमक्षराणि, षड्ष्णिक्षु तावन्त्येवाक्षराणि। तत्र सप्तम्यां गायत्र्यामक्षरचतुष्काणि षड् वर्तन्ते। एकैकाक्षरचतुष्कस्य एकैकया गायत्र्या योजने कृतेऽष्टाविंशत्यक्षरा उष्णिहः षण्निष्पद्यन्ते। एवं सर्वासु गायत्रीषु उष्णिक्त्वसम्पादनं कर्तव्यमिति।

एवञ्च महाव्रते गवामयनस्योपान्तिमदिनानुष्ठेये कर्मणि, निष्केवल्ये—माध्यन्दिनसवने होत्रा क्रियमाणे शस्त्रविशेषे, विहितायामौष्णिहतृचाशीतौ—उष्णिक्छन्दस्कतृचानामशीतौ, सुरूपकृत्नुमित्यादीनि त्रीणि शस्त्राणि विनियुज्यन्त इति भाष्यवाक्यस्यार्थः।

[185] चतुर्विशेऽहनि। टिप्पण्या ८२ अङ्के गवामयनीयद्वितीयदिनस्य चतुर्विंशाख्यस्य स्वरूपं निरूपितम्। तस्मिन्दिने माध्यन्दिनसवने ब्राह्मणाच्छंसिनश्शस्त्रे सुरूपकृत्नुमूतय इति तृचः स्तोत्रियः—प्रथमपठनीयस्तृचः। तत्राश्वलायनेन 'चतुर्विशेऽहनि ब्राह्मणाच्छंसिनश्शस्त्रे एकादशतृचयुगलानि निर्दिष्टानि—(१) 'तं वो दस्म मृतीषहम्' 'तं त्वा यामि सुवीर्यम्' (२) 'अभिप्रवः सुराधसम्' 'प्रसुश्रुतं सुराधसम्' (३) 'वयं घत्वा सुतावन्तः' 'कईं वेद सुते सचा' (४) 'विश्वाः पृतना अभिभूतरं नरम्' 'तमिन्द्रं जोहवीमि' (५) 'या इन्द्र भुज आभर' इत्येका, 'इन्द्रो मदाय वावृधे' इति ऋग्द्वयम्, 'मदे मदे हि नो ददिः' (६) 'सुरूपकृत्नुमूतये' 'शुष्मिन्तमन्न ऊतये' (७) 'श्रायन्त इव सूर्यम्' 'बण् महाँ असि सूर्य' (८) 'उदुत्यद्दर्शतं वपुः' 'उदुत्ये मधुमत्तमाः' (९) 'त्वमिन्द्र प्रतूर्तिषु' 'त्वमिन्द्र यशा असि' (१०) 'इन्द्र क्रतुं न आभर' 'इन्द्र ज्येष्ठं न आभर' (११) 'आ त्वा सहस्रमा शतम्' 'मम त्वा सूर उदिते' इति। इमानि तृचयुगलानि ब्राह्मणाच्छंसिनः कृते विहितानि। एतेषामेककार्यकरत्वाद्विकल्पः। एतन्मध्ये सामगाः यस्मिंस्तृचे स्तुवीरन् स तृचो होत्रकस्य प्रकृते ब्राह्मणाच्छंसिनः स्तोत्रियो भवति। तत्र षष्ठयुगले प्रथमस्तृचः 'सुरूपकृत्नुमूतय' इति। तत्र यदि सामगाः स्तुयुः, तर्हि

स्तोत्रियस्तृचः। होत्रकाणामिति खण्डे 'मदे मदे हि नो ददिः सुरूपकृत्नुमूतये (आ० श्रौ० ७-४) इति सूत्रितत्वात्। [136]अग्निष्टोमे वैश्वदेवशस्त्रे सुरूपकृत्नुमूतय इति धाय्या। 'सुरूपकृत्नुमूतये तक्षन् रथम्' (आ० श्रौ० ५-१८) इति सूत्रितत्वात्।

तामेतां सूक्तगतां प्रथमामृचमाह। सुरूपकृत्नुं शोभनरूपोपेतस्य कर्मणः कर्तारमिन्द्रमूतयेऽस्मद्रक्षार्थं* द्यविद्यवि प्रतिदिनं जुहूमसि---आह्वयामः। आह्वाने दृष्टान्तः---गोदुहे गोदुगर्थं सुदुघामिव सुष्ठु दोग्ध्रीं गामिव। यथा लोके गोर्दो दोग्धा तदर्थं तस्याभिमुख्येन दोहनीयां गामाह्वयति तद्वत्। वस्तोरित्यादिषु द्वादशस्वहर्नामसु द्यविद्यवि (निघ० १-९) इति

---

ब्राह्मणाच्छंसिना स तृचः स्तोत्रियत्वेन अर्थात् स्वीयशस्त्रे प्रथमस्थानतया पठनीयः। द्वितीयस्तृचस्तेनाऽनुरूपतया पठनीय इति भाष्यसन्दर्भस्यार्थः।

[136] अग्निष्टोमे। टिप्पण्या ५६ अङ्केऽग्निष्टोमस्य स्वरूपं निरूपितम्। तत्र द्वादश स्तोत्राणि शस्त्राणि च तावन्तीत्युक्तम्। तानि पुनस्स्मार्यन्ते। प्रातस्सवने---

| स्तोत्राणि— | | शस्त्राणि— | |
|---|---|---|---|
| बहिष्पवमानम् | १ | आज्यम् | १ |
| आज्यानि | ४ | प्रउगम् | १ |
| | | मैत्रावरुणशस्त्रम् | १ |
| | | ब्राह्मणाच्छंसि शस्त्रम् | १ |
| | | अच्छावाकशस्त्रम् | १ |

माध्यन्दिनसवने

| | | | |
|---|---|---|---|
| माध्यन्दिन पवमानम् | १ | मरुत्वतीयम् | १ |
| पृष्ठानि | ४ | निष्केवल्यम् | १ |
| | | मैत्रावरुणशस्त्रम् | १ |
| | | ब्राह्मणाच्छंसि शस्त्रम् | १ |
| | | अच्छावाकशस्त्रम् | १ |

सायंसवने—

| | | | |
|---|---|---|---|
| आर्भवपवमानम् | १ | वैश्वदेवम् | १ |
| अग्निष्टोमम् | १ | आग्निमारुतम् | १ |
| | १२ | | १२ |

* तृतीयसवने सावित्रग्रहप्रचारानन्तरं होत्रा पठनीयं शस्त्रं वैश्वदेवशस्त्रमिति व्यवह्रियते। सावित्रग्रहस्य 'अभूद्देवः सविता वन्द्य' इति याज्यामन्त्रपठनानन्तरं होता 'शो शोंसावोम्' इत्याहाय

पठितम् । [137]सुरूपकृत्नुम् । करोतीति कृत्नुः । 'कृहनिभ्यां क्नुः' (उ० ३-३०) कित्त्वाद्गुणाभावः । तकारोपजनश्छान्दसः । समासान्तोदात्तः । [138]ऊतये । अवतेर्धातोः ०उदात्तः (पा० ३-३८९) इत्यनुवृत्तौ 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा० ३-३-९७) इति क्तिन्नुदात्तो निपातितः । [139]सुदुघाम् । सुष्ठु दुग्धे इति सुदुघा । 'दुहः कब्घश्च' (पा० ३-२-७०) इति

---

(अध्वर्यवे शस्त्रं करिष्यामीति सूचनमाहावः) कृत्वा अध्वर्युणा प्रतिगरद्वाराऽनुज्ञायां दत्तायां 'तत्सवितुर्वृणीमहे' 'अद्यानो देव सवितः' इति प्रतिपदनुचरौ, 'एकया च दशभिश्च स्वभूते' इति वायव्यामृचञ्च पठित्वा द्यावापृथिवीयं 'प्र द्यावा यज्ञैः पृथिवी ऋतावृधा' इति दैर्घतमसं पञ्चर्चं जागतं सूक्तं शंसेत् । अनन्तरं 'सुरूपकृत्नुमूतय' इति धाय्यां पठित्वा, 'तक्षन् रथं सुवृतम्' इत्यार्भवसूक्तं शंसेत् । तदनन्तरं 'येभ्यो माता मधुमत्पिन्वते' 'एवापित्रे विश्वदेवाय' इति ऋग्द्वयं पठित्वा 'अयं वेनश्चोदयत्पृश्निगर्भा' इति धाय्यां पठित्वा, 'आ नो भद्राः क्रतवो यन्तु विश्वतः' इति दशर्चां वैश्वदेवसूक्तान्नव ऋचश्शस्त्वा दशमीमृचं परिधानीयां 'सर्वत्रोत्तमां परिधानीयेति विद्यात्' (आश्व.श्रौ. २.१६.) (सर्वत्र शस्त्रादिषूत्तमां परिधानीयां जानीयात्) इति कुर्यात् । इदं वैश्वदेवशस्त्रस्वरूपम् । अत्र 'सुरूपकृत्नुमूतय' इति ऋक् द्यावापृथिवीयसूक्तानन्तरमार्भवसूक्तात्पूर्वं पठनीयत्वेन विहितत्वाद्धाय्या भवति । द्वयोर्मध्ये पठनीयत्वेन विहिता ऋक् धाय्येति कथ्यते । एवञ्च अग्निष्टोमे-अग्निष्टोमसंस्थाके ज्योतिष्टोमे, वैश्वदेवशस्त्रे—तृतीयसवने सावित्रग्रहोपचारानन्तरं होत्राशंस्यत्वेन विहिते शस्त्रे, सुरूपकृत्नुमूतय इति धाय्या-आर्भवद्यावापृथिवीयसूक्तयोर्मध्ये पठनीयत्वेन विनियुज्यत इति भाष्यवाक्यस्यार्थः ।

[137] सुरूपकृत्नुम् । रूप्यत इति रूपम् । शोभनं रूपं यस्य तत् सुरूपं शोभनरूपोपेतं कर्म । करोतीति कृत्नुः । सुरूपस्य कृत्नुः सुरूपकृत्नुः, तं सुरूपकृत्नुम् । अत्र 'समासस्य' इति समासान्तोदात्तः । 'अनुदात्तं पदमेकवर्जम्' इति शेषनिघाते जाते सुरूपकृत्नुम् इति स्वरसिद्धिः ।

[138] ऊतये । ऊतिशब्दस्य चतुर्थ्येकवचने रूपम् । अवतेर्धातोः क्तिन्प्रत्ययान्तो निपातित ऊतिशब्दः । 'ऊति-यूति-जूति-साति-हेतिकीर्तयश्च' इत्यनेन क्तिन्नुदात्तो निपात्यते । चतुर्थ्येकवचने ङेप्रत्यये ऊति ए इति स्थिते इकारस्य गुणेऽयादेशे च ऊतये इति सिध्यति । तकारोत्तराकारस्य क्तिन्प्रत्ययोदात्तस्वरे सति 'अनुदात्तं पदमेकवर्जम्' इति प्रथमस्यानुदात्तस्वरः । ङेप्रत्ययस्य सुप्त्वात् 'अनुदात्तौ सुप्पितौ' इति प्राप्तस्यानुदात्तस्य 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितः । तथाच ऊतये इति स्वराः । संहितायां सुरूपकृत्नुमूतये 'त्नु' इत्युकारस्योदात्तत्वात्पूर्वेषामनुदात्ताः, 'त'काराकारस्योदात्तत्वात्तत्पूर्ववर्णस्य 'मू' इत्यूकारस्यानुदात्तः । परस्यैकारस्य स्वरितश्च ।

[139] सुदुघामिव । दुह् धातोः 'दुहः कब् घश्च' इति कप् प्रत्ययः हकारस्य घकारादेशः, ततो गतिसंज्ञकेन सुशब्देन समासे दुघशब्दः, ततः स्त्रियां टापि सुदुघा इति रूपम् । अस्य द्वितीयान्ततादशायामिवेन सह समासे विभक्त्यलोपे च सुदुघामिव इति जायते । तत्र दुह् धातोः कप्,

कप्प्रत्ययो हकारस्य च घकारः। कित्त्वाद्गुणाभावः। कपः पित्त्वादनुदात्तत्वे धातुस्वरेणोकार उदात्तः। सुशब्देन गतिसमासे कृदुत्तरपदप्रकृतिस्वरत्वेन स एव स्वरः। इवेन समासो विभक्त्यलोपः 'पूर्वपदप्रकृतिस्वरत्वञ्च' (पा० वा० २-४-७१) इतीवसमासे स एव। गां दोग्धीति [140]गोधुक्। 'सत्सूद्विष०' (पा० ३-२-६१) इत्यादिना क्विप्। कृदुत्तरपदप्रकृतिस्वरत्वम्। [141]जुहूमसि। ह्वयतेर्लङुत्तमपुरुषबहुवचने 'बहुलं छन्दसि' (पा० २-४-७६) इति शपः श्लुः। 'अभ्यस्तस्य च' (पा० ६-१-३३) इत्यभ्यस्तकारणस्य ह्वयतेः प्रागेव द्विर्वचनात्सम्प्रसारणम्। 'सम्प्रसारणाच्च' (पा० ६-१-१०८) इति परपूर्वत्वम्। 'हलः' (पा० ६-४-२) इति दीर्घः। ततः 'श्लौ' (पा० ६-१-१०) इति द्विर्वचनम्। अभ्यासस्य ह्रस्वः। चुत्वजश्त्वे। 'इदन्तो

---

तस्य पित्त्वादनुदात्तस्वरे सति धातूकारस्य 'धातोः' इति सूत्रेणोदात्तस्वरः। तस्य सुशब्देन समासे'समासस्य' इत्यन्तोदात्तस्वरप्राप्तौ तदपवादकेन 'गतिकारकोपपदात्कृत्' इति कृदुत्तर पदस्वरकत्वमिति शेषनिघातेनावशिष्टयोरनुदात्तत्वे सुदुघशब्दो मध्योदात्तः। ततष्टापि तस्य पित्त्वेनानुदात्ततया तेन सह घकाराकारस्य सवर्णदीर्घे सोऽप्यनुदात्तः। ततोऽमि प्रत्यये तस्य सुप्त्वेनानुदात्तत्वम्। तेन सह पूर्वस्याकारस्य पूर्वरूपैकादेशे तस्याप्यनुदात्तत्वमेव सुदुघां इति। तस्य इवेन समासे सति समासस्वरं बाधित्वा 'पूर्वपदप्रकृतिस्वरत्वञ्च' इति विशेषवचनेन मध्योदात्त एव तिष्ठति सुदुघां शब्दः। तत्र 'उदात्तस्वरितपरस्य सन्नतरः' इति सूत्रेण प्रथम उकारः सन्नतरापरपर्यायोऽनुदात्त एव, द्वितीय उकार उदात्तः, ततः परस्यानुदात्तस्य स्वरितः, ततः परयोः प्रचयः 'सुदुघामिव' इति। संहितायां सुरूप कृत्नुमूतये सुदुघामिव इति स्वराः।

[140] गोधुक्। गोपूर्वकदुह्धातोः 'सत्सूद्विषद्रुहदुहयुजविदभिदच्छिदजिनीराजामुपसर्गेऽपि क्विप्' इति क्विप् गोधुक् शब्दः। तस्य चतुर्थ्येकवचने गोदुहे इति रूपम्। अत्र कृदुत्तरपदप्रकृतिस्वरे धातुस्वर एव तिष्ठति। तेन पूर्वोत्तरवर्णयोः अनुदात्तस्वरितौ गोदुहे इति। संहितायां सुरूपकृत्नुमूतये सुदुघामिव गोदुहे इति स्वराः।

[141] जुहूमसि। ह्वयतेर्लटि उत्तमपुरुषबहुवचने मस् प्रत्यये शपि 'बहुलं छन्दसि' इति तस्य श्लुः। 'श्लौ' इति द्वित्वात्पूर्वम् 'अभ्यस्तस्य च' इति सम्प्रसारणं, 'सम्प्रसारणाच्च' इति परपूर्वत्वम्, 'हल' इति दीर्घे हूशब्दः। तस्य 'श्लौ' इति द्वित्वे 'कुहोश्चुः' इति श्चुत्वे तस्य जस्त्वे उत्तमपुरुषस्य मसः 'इदन्तो मसिः' इति इकारागमे जुहूमसि इति रूपम्। अत्र 'धातोः' इति धातुस्वरः प्राप्तः प्रत्ययस्वरेणापोद्यते। तेन मकाराकारस्योदात्तत्वे 'अनुदात्तं पदमेकवर्जम्' इति शेषाणामनुदात्तस्वरे जाते 'उदात्तादनुदात्तस्य स्वरितः' इति सकारोत्तरस्य इकारस्य स्वरितः जुहूमसि इति स्वरसिद्धिः। पादादित्वान्न निघातः।

मसि:' (पा० ७-१-४६) इतीकारागमः। प्रत्ययस्वरेण मकारस्योदात्तत्वम्। [142]द्यविद्यवि। द्योशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। 'नित्यवीप्सयोः'। (पा० ८-१-४) इति द्विर्भावः। तस्य 'परमाम्रेडितम्' (पा० ८-१-२)। 'अनुदात्तं च' (पा० ८-१-३) इति द्वितीयस्यानुदात्तत्वम् ॥१॥

द्वितीयामृचमाह। हे सोमपाः सोमस्य पातरिन्द्र सोमं पातुं नोऽस्मदीयानि सवना त्रीणि सवनानि प्रत्युप समीपं आगहि—आगच्छ। आगत्य च सोमं पिब। रेवतो धनवतस्तव मदो हर्षो गोदा इत्—गोप्रद एव। त्वयि हृष्टे सति अस्माभिर्गावो लभ्यन्त इत्यर्थः। उप। निपातत्वादाद्युदात्तः। [143]सवना। सूयते सोम एष्विति सवनानि। अधिकरणे ल्युट्। सुपो डादेशष्टिलोपश्च। 'लिति' (पा० ६-१-१९३) इति प्रत्ययात्पूर्वस्याकारस्योदात्तत्वम्। [144]गहि। 'गमेर्बहुलं छन्दसि' (पा० २-४-७३) इति शपो लुक्। हेर्ङित्त्वात् 'अनुदात्तोपदेश०' (पा० ६-४-३७)

---

[142] द्यविद्यवि। द्युत धातोर्बाहुलकाद् डोप्रत्ययः। 'गमेर्डोः' इति सूत्रव्याख्याने 'बाहुलकाद् द्युतेरपि डोः' इति भट्टोजीदीक्षितः। तत्र सप्तम्येकवचने रूपं द्यवि इति। 'नित्यवीप्सयोः' इति द्वित्वम्। तत्र धातुस्वरस्य प्रत्ययस्वरेणापहारे द्योशब्दोऽन्तोदात्तः। ततः परस्य सप्तमीप्रत्ययस्य सुप्त्वेनानुदात्तत्वम्। 'सावेकाचस्तृतीयादिर्विभक्तिः' इति विभक्तेरुदात्तस्वरः प्राप्तो बाहुलकान्न भवति। द्वित्वे परस्य वचनस्याम्रेडितसंज्ञायाम् 'अनुदात्तञ्च' इति सूत्रेण तस्यानुदात्तस्वरः। द्यविद्यवि इति स्थिते 'उदात्तादनुदात्तस्य स्वरितः' इति द्वितीयस्य स्वरितत्वे, 'स्वरितादनुदात्तानां प्रचयः' इति तृतीयचतुर्थयोः प्रचयः द्यविद्यवि इति स्वराः। संहितायां 'द्य' इति प्रथमस्योदात्तत्वात् 'जुहूमसि' इति सकारोत्तरस्य इकारस्य 'उदात्तस्वरित-परस्य सन्नतरः' इति सूत्रेण सन्नतरोऽनुदात्तः। तथाच जुहूमसि द्यविद्यवि इति स्वराः। छात्राणामभ्यासायात्र सर्वेषां पदानां स्वराः प्रदर्शिताः।

[143] सवना। सूयते सोमो येष्विति सवनानि। सूयतेः 'करणाधिकरणयोश्च' इति सूत्रेण ल्युट् प्रत्ययः। षू उ इति स्थिते 'युवोरनाकौ' इति सूत्रेण प्रत्ययस्यानादेशे तस्मिन् परतो धातोर्गुणेऽवादेशे धात्वादेः षकारस्य सकारे सवनशब्दः। द्वितीयाबहुवचने शसि तस्य श्यादेशे नुमि उपधादीर्घे बाहुलके शेर्लोपे नलोपे सवना शब्दः। अथवा शसः 'सुपां सुलुक्पूर्वसवर्णाच्छेयाडाड्यायाजालः' इति सूत्रेण डाप्रत्यये टेर्लोपे च सवना इति रूपम्। अत्र ६० 'लिति' इति सूत्रेण प्रत्ययात्पूर्वस्य सकारोत्तराकारस्योदात्तस्वरः, ततः परस्य स्वरितः, ततः परस्य च प्रचयः सवना इति।

[144] गहि। गम् धातोर्लोटि मध्यमपुरुषैकवचने सिपि तस्स्थाने 'सेर्ह्यपिच्च' इति हिरादेशः। गम् हि इति स्थिते, मध्ये कर्तरि शप् तस्य 'बहुलं छन्दसि' इति लुकि धातोर्मकारस्य 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इति सूत्रेण लोपः। आभीयत्वेन मलोपस्यासिद्धत्वात् 'अतो हेः' इति लुक् न भवति। ततो गहि इति रूपम्। 'तिङ्ङतिङः' इति निघातः।

इत्याविना मकारलोपः। 'अतो हेः' (पा० ६-४-१०५) इत्याभाच्छास्त्रीये लुकि कर्तव्ये 'असिद्धवदत्राभात्' (पा० ६-४-२२) इत्याभाच्छास्त्रीयो मकारलोपोऽसिद्धवद्भवति। सोमपाः। 'आमन्त्रितस्य' च (पा० ८-१-१९) इति निघातः। [145]तस्याविद्यमानवत्त्वेऽपि पूर्वपिक्षया 'तिङ्ङतिङः' (पा० ८-१-२८) इति पिबेत्यस्य निघातः। न च पूर्वस्यापि पराङ्गवद्भावेनाविद्यमानवत्त्वम्, असामर्थ्येन तदभावात्। गां ददातीति गोदाः। 'क्विप् च' (पा० ३-२-७६) इति क्विपं परमपि सरूपं बाधित्वा प्रतिपदविधित्वात् 'आतो मनिन्क्वनिब्वनिपश्च' (पा० ३-२-७४) इति विच्। क्विपि हि 'घुमास्था०' (पा० ६-४-६६) इत्यादिना धातोराकारस्येत्वं स्यात्। [146]रेवान्। रयिर्धनमस्यास्तीति मतुप्। 'ह्रस्वनुड्भ्यां मतुप्' (पा० ६-१-१७६) इति मतुबुदात्तः। 'छन्दसीरः' (पा० ८-२-१५) इति वत्वम्। 'रयेर्मतौ बहुलं छन्दसि' (पा० वा० ६-१-३७) इति सम्प्रसारणपरपूर्वत्वे गुणश्च। मदः। 'मदोऽनुपसर्गे' (पा० ३-३-६७) इत्यप् पित्वादनुदात्तः ॥२॥

तृतीयामृचमाह। अथ सोमपानानन्तरं हे इन्द्र ते तवान्तमानामन्तिकतमानामतिशयेन समीपवर्तिनां सुमतीनां शोभनमतियुक्तानां शोभनप्रज्ञानां पुरुषाणां मध्ये स्थित्वा विद्याम—वयं त्वां जानीयाम। यद्वा सुमतीनां शोभनबुद्धीनां कर्मानुष्ठानविषयाणां लाभार्थमित्यध्याहारः। बुद्धिलाभाय त्वां स्मरेमेत्यर्थः। त्वमपि नोऽति मा ख्यः—अस्मानतिक्रम्यान्येषां त्वत्स्वरूपं मा प्रकथय। किन्त्वागह्यस्मानेवागच्छ। अथेति निपात आद्युदात्तः। 'निपातस्य च' (पा० ६-३-१२६) इति दीर्घत्वम्। अन्तमानाम्। अतिशयेनान्तिका इत्यतिशायने तमप्। 'तमे तादेश्च०' (पा० वा० ६-४-१४९) इति तादिलोपः। अन्तोऽस्यास्तीत्यन्तिकः समीपः।

---

[145] तस्याविद्यमानवत्त्वेऽपि। 'पिब' इति पदात्पूर्वं 'सोमपा' इत्यामन्त्रितम्। तस्य 'आमन्त्रितं पूर्वमविद्यमानवत्' इति सूत्रेणाविद्यमानवत्त्वेऽपि तत्पूर्वं 'सोमस्य' इति पदात्परतस्त्वमादाय 'तिङ्ङतिङः' इति सूत्रेण पिब इत्यस्य निघातः। अत्र 'सोमस्य' इतिपदस्य 'सुबामन्त्रिते पराङ्गवत्स्वरे' इति सूत्रेण पराङ्गवद्भावे सति तस्याविद्यमानवत्वात्कथं पिबपदस्य पदात्परतस्त्वम्, येन 'तिङ्ङतिङः' इति निघातस्स्यादिति शङ्का स्यात्, तथापि सोमस्य पदस्य पिबपदेनैवान्वयसामर्थ्यं, सोमपा इत्यनेनान्वयसामर्थ्याभावेन पराङ्गवद्भावाभावान्न दोष इति भाष्यसन्दर्भस्यार्थः।

[146] रेवान्। रीङ् धातोः 'अचइः' इति इप्रत्यये गुणेऽयादेशे च रयिशब्दः। धनमिति तस्यार्थः। तस्मान्मतुप्। तस्मिन् परे 'रयेर्मतौ बहुलम्' इति वार्तिकेन सम्प्रसारणपरपूर्वत्वे। संप्रसारणात्पूर्वं 'छन्दसीरः' इतिमतोर्मकारस्य वत्वम्। ततो गुण एकारे रेवच्छब्दो निष्पद्यते। ङसि षष्ठ्येकवचने रेवत इति रूपम्। अत्र मतुप् ङसोः सुप्त्वाद् 'अनुदात्तौ सुप्पितौ' इत्यनुदात्तत्वे प्राप्ते धातुस्वर एव तिष्ठेत्। तथासति रेवेत इति स्वरः स्यात्। किन्तु पित्स्वरस्य बाधकं सूत्रम्– ६१ 'ह्रस्वनुड्भ्यां मतुप्' (ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्तः) इति। रयिशब्दान्मतुप्। रयिशब्दश्च ह्रस्वान्तोऽन्तोदात्तः, इ प्रत्ययस्योदात्तत्वात्। तस्मात्परस्य मतुप उदात्तत्वम्। ततः पूर्वस्यानुदात्तस्वरः, परस्य च स्वरितः। रेवतः इति स्वरास्सिध्यन्ति।

'अत इनिठनौ' (पा० ५-२-११५) इति ठन्। नित्त्वादाद्युदात्तः। दूरोत्कर्षस्यावसानं नास्ति। सामीप्योत्कर्षस्य पुनर्यो यस्य समीपः स एव तस्यान्त इत्यन्तवस्त्वात्समीपमन्तिकमुच्यते। विद्याम। वेत्तेर्लिङि 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (पा० ३-४-१०३) इति यासुडुदात्तः। पादादित्वात् 'तिङ्ङतिङः' (पा० ८-१-२८) इति न निघातः।[147]सुमतीनाम्। मतिशब्दे क्तिन्नन्तेऽपि 'मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' (पा० ३-३-९६) इतीकार उदात्तः। शोभना मतिर्येषां ते सुमतय इति बहुव्रीहौ पूर्वपदप्रकृतिस्वरापवादेन 'नञ्सुभ्याम्' (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तः। शोभना मतयः सुमतय इति कर्मधारयेऽप्यव्ययपूर्वपदप्रकृतिस्वरापवादः कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्ततैव। अतो मतुपि ह्रस्वादन्तोदात्ताच्च सुमतिशब्दात्परस्य नामो 'नामन्यतरस्याम्' (पा० ६-१-१७७) इत्युदात्तत्वम्। [148]ख्यः। ख्या प्रकथने। इत्यस्य लुङि सिपि 'अस्यतिवक्तिख्यातिभ्योऽङ्' (पा० ३-१-५२) इति च्लेरङादेशः। 'आतो लोप इटि च' (पा० ६-४-६४) इत्याकारलोपः। 'इतश्च०' (पा० ३-४-१००) इतीकारलोपः। रुत्वविसर्गौ। 'न माङ्योगे' (पा० ६-४-७४) इत्यडभावः। गहि। गमेः बहुलं छन्दसि' (पा० २-४-७३) इति शपो लुकि हेर्ङित्त्वात् 'अनुदात्तोपदेश०' (पा० ६-४-३७) इति मकारलोपस्य 'असिद्धवदत्रा भात्' (पा० ६-४-२२) इत्यसिद्धत्वात् 'अतो हेः' (पा० ६-४-१०५) इति लुक् न भवति ॥३॥

चतुर्थीमृचमाह। अत्र यजमानं प्रति होता ब्रूते। हे यजमान त्वमिन्द्रं परेहि। इन्द्रस्य समीपे गच्छ। गत्वा च विपश्चितं मेधाविनं होतारं मां पृच्छ, असौ होता सम्यक् स्तुतवान्न वेत्येवं प्रश्नं कुरु। य इन्द्रस्ते तव यजमानस्य सखिभ्य ऋत्विग्भ्यो वरं श्रेष्ठं धनं पुत्रादिकमा समन्तात्प्रयच्छतीति शेषः। तादृशमिन्द्रमिति पूर्वत्रान्वयः। पुनरपि कीदृशम्? विप्रम्—मेधाविनम्। अस्तृतम्—अहिंसितम्। विप्रः (निघ० ३-५) इत्यादिषु चतुर्विंशतिसङ्ख्याकेषु मेधाविनामसु विप्रविपश्चिच्छब्दौ पठितौ। विप्रम्। वृषादित्वादाद्युदात्तः। अस्तृतम्। [149]अव्ययपूर्वपदप्रकृतिस्वरत्वम्। इन्द्रशब्द 'ऋज्रेन्द्राग्र०' (उ० २-३१) इत्यादिना

---

[147] सुमतीनाम्। अस्य शब्दस्य स्वराः टिप्पण्या १२८ अङ्के प्रदर्शिताः। मतिशब्दः 'क्तिच्क्तौ च संज्ञायाम्' इत्यनेन क्तिच् प्रत्ययान्तो यदा भवति तदा चित्त्वादन्तोदात्तः। यदा च क्तिन् प्रत्ययान्तः तदाप्यन्तोदात्त एव, ननु नित्त्वादाद्युदात्तः, 'मन्त्रे वृषेषपचमनभूवीरा उदात्तः' इति सूत्रेण मन धातोर्विहितस्य क्तिन उदात्तत्वविधानात्। स्वरास्तु पूर्ववदेव।

[148] ख्यः। ख्या प्रकथने इत्यस्माद्धातोर्लुङि मध्यमपुरुषैकवचने सिपि, 'इतश्च लोपः परस्मैपदेषु' इतीकारलोपे मध्ये च्लौ, तस्य स्थाने 'च्लेः सिच्' इति सिचि प्राप्ते तदपवादतया 'अस्यतिवक्तिख्यातिभ्योऽङ्' इत्यङि 'आतो लोप इटि च' इति धात्वाकारलोपे माङ्योगादडागमाभावे रुत्वविसर्गयोः ख्य इति रूपम्। 'तिङ्ङतिङः' इति निघातः।

[149] अव्यय० 'तत्पुरुषे तुल्यार्थ-तृतीया-सप्तम्युपमानाव्ययद्वितीयाकृत्याः' इति सूत्रेणाव्ययपूर्वपदप्रकृतिस्वरत्वमित्यर्थः।

रन्। नित्त्वादाद्युदात्तः। [150]सखिभ्यः। 'समाने ख्यः चोदात्तः' (उ० ४-१३८) इति समाने उपपदे 'ख्यातेरिण डिद्०' (उ० ४-१३३) इत्यनुवृत्तेस्तस्य डित्त्वाट्टिलोपश्च। तत्सन्नियोगेन यलोपः। उपपदस्योदात्तत्वम्। 'समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु' (पा० ६-३-८४) इति सभावः। अतः सखिशब्द आद्युदात्तः। व्रियत इति वरः। 'ग्रहवृदृनिश्चिगमश्च' (पा० ३-३-५८) इत्यप्। तस्य पित्त्वाद्धातुस्वर एव ॥४॥

पञ्चमीमृचमाह। नोऽस्माकं सम्बन्धिनः। ऋत्विज इति शेषः। ते ब्रुवन्तु—इन्द्रं स्तुवन्तु। उत—अपि च। हे निदो निन्दितारः पुरुषा निरारत। इतो देशान्निर्गच्छत। अन्यतश्चित्—अन्यस्मादपि देशान्निर्गच्छत। कीदृशा ऋत्विजः? इन्द्रे दुवः परिचर्यां दधानाः—कुर्वाणाः। इच्छब्दोऽवधारणे। सर्वदा परिचर्यां कुर्वन्त एव तिष्ठन्त्वित्यर्थः। निन्दन्तीति निदः। णिदि कुत्सायाम्। क्विपि नुमभावश्छान्दसः। सुपोऽनुदात्तत्वाद्धातुस्वरः। [151]आमन्त्रितत्वेऽपि वाक्यान्तरत्वेन स्ववाक्यगतपदादपरत्वान्न निघात इत्याद्युदात्तत्वमेव। अन्यतः। 'लिति' (पा० ६-१-१९३) प्रत्ययपूर्वस्योदात्तत्वम्। चिदित्यपिशब्दार्थे। तेन न केवलमितः, इतो निर्गत्यान्यतोऽपि निर्गच्छतेति गम्यते। स एव धात्वर्थयोः सम्बन्ध आरतेति लुङा द्योत्यते। स हि धातुसम्बन्धाधिकारे विधीयते। आरत। अर्तेः 'छन्दसि लुङ्लङ्लिटः' (पा० ३-४-६) इति लोडर्थे लुङ्। मध्यमबहुवचनस्य तादेशः। 'सर्त्तिशास्त्यर्तिभ्यश्च' (पा० ३-१-५६) इति च्लेरङादेशः। 'ऋदृशोऽङि गुणः' (पा० ७-४-१६) इति गुणः। आडागमः। दधानाः। शानचश्चित्त्वात्प्राप्तमन्तोदात्तत्वं बाधित्वा परत्वाद् 'अभ्यस्तानामादिः' (पा० ६-१-१८९) इत्याद्युदात्तत्वम्। दुवः परिचर्या। इरज्यतीत्यादिषु दुवस्यति (निघ० ३-१५) इति पाठात्। 'नब्विषयस्यानिसन्तस्य' (फि० २-३) इत्याद्युदात्तः ॥५॥

इति प्रथमस्य प्रथमे सप्तमो वर्गः ॥

---

[150] सखिभ्यः। समानं ख्यायत इति सखा। तस्य पञ्चमीबहुवचने सखिभ्यः। समानशब्दोपपदाद् ख्या धातोः 'समाने ख्यः स चोदात्तः' (समानशब्द उपपदे ख्या इत्यस्मादिण् स्यात् स च डिच्च यलोपश्च। समानस्य तूदात्तः स इत्यादेशश्च) इति डित् इण् प्रत्ययः, यकारलोपः, समानस्य स्थाने जातस्य 'समानस्य छन्दस्यमूर्द्धप्रभृत्युदर्केषु' (समानस्य सः स्यादुत्तरपदे नतु मूर्द्धादिषु) इति सकारस्योदात्तत्वञ्च विधीयते। तेन सखिभ्यः इति स्वरः।

[151] आमन्त्रितत्वेऽपि। मन्त्रस्य व्याख्यावसरे 'हेनिदः—निन्दितारः पुरुषाः' इति निद इत्यस्यामन्त्रितत्वं स्वीकृतम्। स्वरसञ्चारावसरे धातुस्वरस्स्वीकृतः। आमन्त्रितनिघातस्वरेणात्र भवितव्यमिति शङ्कां निराकरोति—आमन्त्रितत्वेऽपीति। अत्र 'ऋत्विज' इत्यध्याहृत्य नः अस्माकं ये ऋत्विजः ते इन्द्रं ब्रुवन्तु, हे निदः निरारत इति वाक्यद्वयं भाष्यकारेण प्रदर्शितम्। तत्र द्वितीयवाक्ये निद इत्यस्य पदात्परतस्त्वाभावात् 'आमन्त्रितस्य च' इत्याष्टमिकं सूत्रं न प्रवर्तते, किन्तु ६४ 'समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः' इति वार्तिकानुसारं षाष्ठिकेन 'आमन्त्रितस्य च' इति सूत्रेणाद्युदात्तस्वर एवेति भाष्यार्थः।

सुरूपेति। सूक्ते षष्ठीमृचमाह। हे दस्म शत्रूणामुपक्षपयितरिन्द्र त्वदनुग्रहादरिरुत शत्रवोऽपि नोऽस्मान् सुभगान् शोभनधनोपेतान्वोचेयुः—उच्यासुः। कृष्टयो मनुष्या अस्मन्मित्रभूता वदन्तीति किमु वक्तव्यमिति शेषः। ततो धनसम्पन्ना वयमिन्द्रस्य शर्मणीन्द्रप्रसादलब्धे सुखे स्यामेत्—भवेमैव। मघमित्यादिष्वष्टाविंशतिसङ्ख्याकेषु धननामसु 'रयिः क्षत्रं भगः' (निघ० २-१०) इति पठितम्। मनुष्या इत्यादिषु पञ्चविंशतिसङ्ख्याकेषु मनुष्यनामसु कृष्टयः (निघ० २-३) इति पठितम्। उत। 'एवमादीनामन्तः' (फि० ४-१३) इत्यन्तोदात्तः। सुभगान्। भगशब्दस्य क्त्वादिषु पाठात् 'नञ् सुभ्याम्' (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वं बाधित्वा 'क्त्वादयश्च' (६-२-११८) इत्युत्तरपदाद्युदात्तत्वम्। [152]संहितायां 'दीर्घादटि समानपादे' (पा० ८-३-९) इति नकारस्य रुत्वम्। 'भोभगो०' (पा० ८-३-१७) इति यत्वम्। 'लोपः शाकल्यस्य' (पा० ८-३-१९) इति यलोपः। तस्यासिद्धत्वान्न पुनः सन्धिकार्यम्। 'आतोऽटि नित्यम्' (पा० ८-३-३) इत्याकारस्यानुनासिकता। अरिः। वचनव्यत्ययः। 'अच इः' (उ० ४-१४०) इतीप्रत्ययान्तः प्रत्ययस्वरेणान्तोदात्तः। [153]वोचेयुः—उच्यासुः। वच परिभाषण इत्यस्मादाशीर्लिङि झेर्जुसादेशे 'लिङ्याशिष्यङ्' (पा० ३-१-८६) इत्यङ्प्रत्यये 'वच उम्' (पा० ७-४-२०) इत्युमागमः। गुणः। 'यासुट् परस्मैपदेषु०' (पा० ३-४-१००) इति

[152] अत्रत्यो विषयः पूर्वमेव टिप्पण्या ३३ अङ्के प्रदर्शितः।

[153] वोचेयुः। वच धातोराशीर्लिङि प्रथमपुरुषबहुवचने झिप्रत्यये तस्य 'झर्जुस्' इति जुसादेशे जकारस्य 'चुटू' इतीत्संज्ञायां लोपे वच् उस् इति स्थिते 'लिङ्याशिष्यङ्' (आशीर्लिङि परे धातोरङ् स्याच्छन्दसि) इत्यङ् प्रत्ययः, वच् अ उस् इति जाते, 'वच उम्' (अङि परे वच उम् इत्युमागमे गुणे वोच् अ=वोच उस् इति स्थिते, 'यासुट्परस्मैपदेषु०' इति यासुटि, तस्य 'क्रिदाशिषि' इति कित्त्वे वोच यास् उस् इति जाते 'छन्दस्युभयथा' इति सर्वधातुकत्वादपि 'लिङ्सलोपोऽनन्त्यस्य' इति सकारस्य लोपे वोच या उस् इति स्थिते 'अतो येयः' इत्यनेन या इत्यस्य इय् आदेशे वोच इय् उस् इति जाते 'आद्गुण' इति गुणे वोचेय् उस् इत्यत्र सकारस्य रुत्वे विसर्गे च कृते वोचेयुः इति रूपं सिध्यति।

अत्रायं स्वरसञ्चारप्रकारः— 'धातोः' इति प्रथमं धातोरुदात्तस्वरः। झिप्रत्ययस्य तदादेशस्य स्थानिवत्त्वेनोदात्तस्वरः। अङोऽपि प्रत्ययत्वेनोदात्तत्वम्, वच् अउस् इति सर्वेषामुदात्तत्वे प्रत्ययस्वरेण धातुस्वरापहारे सति तस्यानुदात्तत्वम् वच् अ उस् इति स्थिते उमागमे तस्य च गुणे तस्य स्थानिवत्त्वेनानुदात्तत्वमेव वोच उस् इति जाते, झेःप्रत्ययस्य तदादेशस्य च लस्थानिकसार्वधातुकत्वेन 'तस्यानुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमन्ह्विङोः' इत्यनेनोदात्तनिवृत्तौ अनुदात्तः प्राप्तः वोच उस् इति स्थिते यासुटोऽप्युदात्ततया तत्स्थानिकेयादेशस्याप्युदात्तत्वेन सकारलोपे वोच इय् उस् इति दशायाम् अकारस्य इकारस्य च गुणैकादेशे 'एकादेश उदात्तेनोदात्तः' इति तस्याप्युदात्तत्वे वोचेयुः इत्यत्रोदात्तात्परस्यानुदात्तस्य स्वरितत्वे वोचेयुः इति स्वरास्सिध्यन्ति।

यासुट्। 'किदाशिषि' (पा० ३-४-१०४) इति यासुटः कित्त्वम्। 'छन्दस्युभयथा' (पा० ३-४-११७) इति लिङादेशस्य सार्वधातुकत्वाल्लिङः 'सलोपोऽनन्त्यस्य' (पा० ७-२-७९) इति सकारलोपः। 'अतो येयः' (पा० ७-२-८०)। 'आद्गुणः' (पा० ६-१-८७) अङ्गोऽनुपदेशात्वाल्ल-सार्वधातुकस्वरेण लिङोऽनुदात्तत्वम्। अङ्प्रत्ययस्वर एव शिष्यते। तेन सहेकारस्य गुणे 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इत्युदात्तः। दस्म। दसु उपक्षये इत्यस्मादन्तर्भावित-ण्यर्थात् 'इषियुधीन्धिदसिश्याधूसूभ्यो मक्' (उ० १-१४३)। पदात्परत्वादामन्त्रितनिघातः। कुत्सयः। 'क्तिच्क्तौ च संज्ञायाम्' (पा० ३-३-१७४) इति क्तिचि मनुष्यनामत्वात् 'चितः' (पा० ६-१-१६३) इत्यन्तोदात्तः। स्याम। अस भुवि। 'श्नसोरल्लोपः' (पा० ६-४-१११)। यासुट उदात्तत्वम्। पादादित्वादनिघातः। शर्मणि। शॄ हिंसायाम्। शृणाति हिनस्ति दुःखमिति शर्म। 'अन्येभ्योऽपि दृश्यन्ते' (पा० ३-२-७५) इति मनिन्। 'नेड्वशि कृति' (पा० ७-२-८) इतीट्प्रतिषेधः। नित्त्वादाद्युदात्तत्वम् ॥६॥

सप्तमीमृचमाह। ईमिति निपात इदंशब्दार्थे वर्तते। हे यजमान। आशवे कृत्स्नसोमयागव्याप्तायेन्द्राय। ईमाभर—इमं सोममाहर। कीदृशं सोमम्? आशुम्—सवनत्रयव्याप्तम्। यज्ञश्रियम्—यज्ञस्य सम्पद्रूपम्। नृमादनम्—नृणामृत्विग्यजमानानां हर्षहेतुम्। पतयत्—पतयन्तम्। कर्मणि प्राप्नुवन्तम्। मन्दयत्सखम्—य इन्द्रो मन्दयति यजमानान्हर्षयति तस्मिन्निन्द्रे सखिभूतोऽयं सोमः। तत्प्रीतिहेतुत्वात्तृप्तिहेतुत्वाद्वा। आशुम्। 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' (उ० १-१) इत्युण्। प्रत्ययस्वरः। आशवे। पूर्ववत्। यज्ञश्रियम्। 'समासस्य' (पा० ६-१-२२३) इत्यन्तोदात्तः। माद्यन्तेऽनेनेति मादनः। 'करणाधिकरणयोश्च' (पा० ३-३-११७) इति ल्युट्। तस्य लित्त्वात्पूर्व आकार उदात्तः। 'गतिकारकोपपदात्कृत्' (पा० ६-२-१३९) इति स एव शिष्यते। [154]पतयत्। पतेरदन्तस्य चौरादिको णिच्। 'अतो लोपः' (पा० ६-४-४८)। तस्य स्थानिवत्त्वादुपधाया वृद्ध्यभावः। लटः शत्रादेशः। तस्य 'छन्दस्युभयथा' (पा० ३-४-११७) इत्यार्धधातुकत्वेन शबभावाद् ०'अदुपदेशाद्०' (पा० ६-१-१८६) इति निघाताभावेन प्रत्ययाद्युदात्तत्वमेव भवति। आर्द्ध-धातुकत्वेऽपि 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पा० प० ३५) इति 'णेरनिटि' (पा० ६-४-५१) इति णिलोपाभावः। 'सुपां सुलुक्०' (पा० ७-१-३९) इति अमो लुक्। 'न लुमता०' (पा० १-१-६३) इति प्रत्ययलक्षणनिषेधात् 'उगिदचाम्०' (पा० ७-१-७०) इति न नुम्।

---

[154] पतयत्। चुरादिगणीयपतधातोः णिच्। 'अतो लोपः' इति सूत्रेण धात्वन्ताकारस्य लोपः। तस्य स्थानिवत्त्वात्पूर्वस्य वृद्धेरभावे ततो लट्। तस्य 'लटः शतृशानचौ' इति शतृप्रत्यये 'छन्दस्युभयथा' इत्यार्धधातुकत्वेन शपोऽभावे सार्वधातुकत्वाण्णेरलोपे गुणे पतयदिति रूपम्। ततः परस्य द्वितीयैकवचनस्य 'सुपां सुलुक्' इति लोपः। अत्र प्रत्ययस्वरेण यकार उदात्तः, पूर्वयोरनुदात्तत्वम् पतयत् इति।

[155] मन्दयत्सखम्। मदिधातोर्णिजन्ताच्छतृप्रत्यये गुणे छान्दसत्वादार्धधातुकत्वान्मध्ये शपोऽभावे णेर्लोपाभावे मन्दयच्छब्दः। अस्य सखिशब्देन मन्दयति सखा इति सप्तमीसमासे 'राजाहःसखिभ्यष्टच्' इति समासान्ते टचि, द्वितीयैकवचनेऽमि मन्दयत्सखम् इति

एवं [155]मन्दयच्छब्दोऽन्तोदात्तः। मन्दयतीन्द्रं सखा। 'सप्तमी०' (पा० २-१-४०) इति योगविभागात्समासः। 'तत्पुरुषे तुल्यार्थ०' (पा० ६-२-२) इति सप्तमीपूर्वपदप्रकृतिस्वरत्वम् ॥७॥

अष्टमीमृचमाह। हे शतक्रतो बहुकर्मयुक्तेन्द्र, त्वमस्य सोमस्य सम्बन्धिनमंशं पीत्वा वृत्राणां वृत्रनामकासुरप्रमुखानां शत्रूणां घनोऽभवः—हन्ताऽभूः। ततो वाजेषु संग्रामेषु वाजिनं संग्रामवन्तं स्वभक्तं प्रावः—प्रकर्षेण रक्षितवानसि। [156]अस्येतीदंशब्देन प्रयोगसमये पुरोदेशस्थः सोमो निर्दिश्यते न तु पूर्वप्रकृतः सोमः परामृश्यते। अतोऽनन्वादेशान्नात्र 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' (पा० २-४-३२) इत्यशादेशः। अतो न सर्वानुदात्तत्वम्। किन्तु त्यदाद्यत्वे हलि लोपेऽकारः प्रातिपदिकस्वरेणोदात्त इति 'अन्तोदात्ताद्०' (पा० ६-१-१६९) इत्यनुवृत्तौ 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' (पा० ६-१-१७१) इति विभक्तिरुदात्ता। पीत्वा। पिबतेः

---

रूपम्। अत्र 'तत्पुरुषे तुल्यार्थ-तृतीया-सप्तम्युपमानाव्ययद्वितीया कृत्याः' इत्यनेन सप्तमीसमासप्रयुक्तपूर्वपदप्रकृतिस्वरः। पूर्वपदे तु प्रत्ययस्वरेण यकार उदात्तः। तेन प्रथमद्वितीययोरनुदात्तत्वम्, चतुर्थपञ्चमयोस्तु स्वरितप्रचयौ मन्दयत्सखम् इति।

[156] इदमोऽन्वादेशे०। इदंशब्दस्य क्वचित्पूर्वप्रकृतपरामर्शकत्वम् क्वचिच्च पुरोवर्तिनो निर्देशकत्वं दृश्यते। 'अस्य पीत्वा शतक्रतो' इति प्रकृतमन्त्रे 'अस्य' पदेन पुरोवर्ती सोमो निर्दिश्यते। 'एवा ह्यस्य सूनृता' इत्यष्टमसूक्तस्याष्टमे मन्त्रे अस्य पदं पूर्वप्रकृतमिन्द्रं परामृशति। तत्र पूर्वपरामर्शकस्थलेऽन्वादेशेऽश् भवति स चानुदात्त इति विधीयते '६५ 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' (अन्वादेशे इदमः अश् स्यात् तृतीयादिविभक्तौ, स चानुदात्तः) इति सूत्रेण। एवं सति अकारस्यानुदात्तत्वम् 'स्य' इत्यस्य ङस्स्थानिवत्त्वेन सुप्त्वादनुदात्तत्वमिति द्वयोरक्षरयोरनुदात्तत्वम् अस्य इति सिध्यति। प्रकृतमन्त्रे 'अस्य' इति पदं न पूर्वपरामर्शकं किन्तु पुरोवर्तिनस्सोमस्य निर्देशकमिति अनुदात्तस्याशः प्राप्तिर्न भवति। अत्रैवं शब्दनिष्पत्तिः—इदंशब्दस्य षष्ठ्येकवचने ङस् प्रत्ययः। 'त्यदादीनामः' (त्यदादीनामकारोऽन्तादेशस्स्यात्) इत्यकारान्तादेशे इद अङस् इति स्थिते 'अतो गुणे' इति पररूपे सति इद ङस् इति जाते 'हलि लोपः' इति सूत्रेण इद् इति भागस्य लोपे अङस् इति दशायां 'टाङसिङसामिनात्स्याः' इति सूत्रेण ङसः स्यादेशे अस्य इति रूपं सिध्यति। अत्र प्रातिपदिकस्वरेणाकारस्योदात्तत्वे तत्परस्य सुपोऽनुदात्तस्य स्वरिते प्राप्ते अस्य इति, तदपवादकं सूत्रम्—'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' इति। सूत्रस्यायमर्थः—'अन्तोदात्तादुत्तरपदादन्यतरस्यामनित्यसमासे' इति सूत्राद् 'अन्तोदात्ताद्' इत्यनुवृत्तौ अन्तोदात्ताद ऊठ्, इदं, पदादि, अप्, पुं, रै, दिव् इत्येतेभ्यः पराऽसर्वनामस्थानविभक्तिरुदात्ता स्यादिति। प्रकृते इदंशब्दस्य प्रातिपदिकान्तोदात्तत्वे ततः परस्य असर्वनामस्थानविभक्तिक ङस् स्थानिकस्य 'स्य' इत्यस्योदात्तस्वरः। तेन पूर्वस्यानुदात्तस्वरे अस्य इति सिध्यति। अन्वादेशाश्स्थले तु इदंशब्दस्य सर्वस्याशादेशः, 'अनेकाल्शित्सर्वस्य' इत्यनेन। स चानुदात्तः। ङस्स्थानिकस्य स्य इत्यस्यापि सुप्त्वादनुदात्तस्वरः अस्य इति। अत्र 'ऊडिदं०' इति सूत्रस्य न प्रवृत्तिः, इदंशब्दस्यान्तोदात्तस्वरत्वाभावात्।

क्त्वाप्रत्यये 'घुमास्था०' (पा० ६-४-६६) इत्यादिनेत्वम्। प्रत्ययस्वरेणोदात्तः। असामर्थ्यान्न परामन्त्रिताङ्गवद्भावः। घनः। 'मूर्तौ घनः' (पा० ३-३-७७) इति हन्तेर्धातोः काठिन्ये-ऽप्प्रत्ययः। तदस्यास्तीत्यर्थेऽर्शआदित्वादजन्तः। चित्त्वादन्तोदात्तः। वाजेषु। वृषादि-त्वादाद्युदात्तः। वाजिनम्। इनिप्रत्ययस्वरः ॥८॥

नवमीमृचमाह। हे शतक्रतो बहुकर्मयुक्त, यद्वा बहुप्रज्ञानयुक्तेन्द्र धनानां सातये सम्भजनार्थं वाजेषु युद्धेषु वाजिनं बलवन्तं त्वा पूर्वमन्त्रोक्तगुणयुक्तं त्वां वाजयामः—अन्नवन्तं कुर्मः। रण इत्यादिषु षट्चत्वारिंशत्सङ्ग्रामनामसु 'पौंस्ये महाधने वाजेऽज्मन्'(निघ० २-१३) इति पठितम्। अष्टाविंशतिसङ्ख्याकेषु 'अन्ननामस्वन्धो वाजः पाजः' (निघ० २-७) इति पठितम्। उरु तुवीत्यादिषु द्वादशसु बहुनामसु शतं सहस्रम् (निघ० ३-१) इति पठितम्। आपोऽप्न इत्यादिषु षड्विंशतिसङ्ख्याकेषु कर्मनामसु शक्म क्रतुः(निघ० २-१)इति पठितम्। केतुः केत इत्यादिष्वेकादशसु प्रज्ञानामसु क्रतुरसुः(निघ० २-९) इति पठितम्। [157]त्वा। 'अनुदात्तं सर्वम्०' (पा० ८-१-१८)इत्यनुवृत्तौ 'त्वामौ द्वितीयायाः'(पा०८-१-२३) इति त्वादेशः। वाजेषु वज व्रज गतौ। वाजयति गमयति शरीरनिर्वाहमनेनेति वाजो बलमन्नं वा। ण्यन्तात्करणे घञ्। तत्र ञित्स्वरस्यापवादे 'कर्षात्वतः' (पा० ६-१-१५९) इत्यन्तोदात्तत्वे प्राप्ते तस्याप्य-पवादेन 'वृषादीनां च' (पा० ६-१-२०३) इत्याद्युदात्तत्वम्। वाजयामः। वाजोऽस्यास्तीति वाजवान्। तं कुर्म इत्यर्थे 'तत्करोति तदाचष्टे' (पा० ग० ३-१-२५) इति णिच्। 'इष्ठवण्णौ प्रातिपदिकस्य'(पा० ग० ३-१-२५)इति तस्मिन्परत इष्ठवद्भावाद् 'विन्मतो लुक्'(पा०५-३-६५) इति मतुपो लुक्। 'टेः' (पा० ६-४-१५५) इत्यकारलोपः। णिचश्चित्त्वादन्तोदात्तत्वम्। शपः पित्त्वेनानुदात्तत्वम्। लसार्वधातुकस्वरेणाख्यातस्याप्यनुदात्तत्वम्। पादादित्वात् 'तिङ्ङतिङः' (पा० ८-१-२८) इति न निघातः। शतक्रतो। आमन्त्रितनिघातः। धनानाम्। 'नब्विषयस्यानिसन्तस्य' (फि० २-३) इत्याद्युदात्तः। सातये। '०उदात्तः' (पा० ३-३-९६) इत्यनुवृत्तौ 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा० ३-३-९७) इति क्तिन्नुदात्तः ॥९॥

दशमीमृचमाह। य इन्द्रो रायो धनस्यावनी रक्षकः स्वामी वा तस्मा इन्द्राय गायत। हे ऋत्विजस्तत्प्रीत्यर्थं स्तुतिं कुरुत। कीदृश इन्द्रः? महान्—गुणैरधिकः। सुपारः—सुष्ठु कर्मणः पूरयिता। सुन्वतो यजमानस्य सखा सखिवत्प्रियः। रायः। 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' (पा० ६-१-१७१) इति विभक्तेरुदात्तत्वम्। अवनिः। अव रक्षणगतिप्रीतितृप्त्यवगमप्रवेश-श्रवणस्वाम्यर्थयाचनक्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादहनभाववृद्धिषु च इत्यस्माद् 'अर्ति-सृधृधम्यम्यश्यवितृभ्योऽनिः' (उ० २-१०२) इत्यनिः। प्रत्ययाद्युदात्तत्वम्। सुपारः। पॄ पालनपूरणयोरित्यस्माण्णिजन्तात् 'कर्तरि०' (पा० ३-१-६८) इत्यनुवृत्तौ पचाद्यच्। 'चितः' (पा० ६-१-१६३) इत्यन्तोदात्तः। सुन्वतः। 'शतुरनुमो नद्यजादी' (पा० ६-१-१७३)

---

[157] युष्मदस्मच्छब्दयोः द्वितीयायाः 'त्वामौ द्वितीयायाः' इति सूत्रेण त्वा मा इत्या-देशः। तयोश्च ६६ 'अनुदात्तं सर्वमपादादौ' इति सूत्रेणानुदात्तत्वम् त्वा मा इति। प्रातिपदिक-स्वरापवादोऽयम्।

इति विभक्तिरुदात्ता। सखा। 'समाने ख्यः स चोदात्तः (उ० ४-१३८) इतीण्प्रत्ययः। तत्सन्नियोगेन यलोपः। सशब्दस्य चोदात्तः। ङित्वाट्टिलोपः। [158]तस्मै। '०अदिः' (उ० १-१३५) इत्यनुवृत्तौ 'त्यजितनियजिभ्यो डित्' (उ० १-१३७) इति तनोतेरदिप्रत्ययः। ङित्वाट्टिलोपे प्रत्ययस्वरेण तच्छब्द उदात्तः। त्यदाद्यत्वम्। 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इत्युदात्तः। 'सावेकाचस्तृतीयादिर्विभक्तिः' (पा० ६-१-१६८) इति विभक्तेरुदात्तत्वप्राप्तौ प्रथमैकवचनेऽवर्णान्तत्वात् 'न गोश्वन्साववर्ण०' (पा० ६-१-१८२) इति निषेधः। इन्द्राय। इन्द्रशब्दो रन्प्रत्ययान्तो निपातितः। नित्त्वादाद्युदात्तः। 'कर्मणा यमभिप्रैति स सम्प्रदानम्' (पा० १-४-३२) इत्यत्र 'क्रियाग्रहणं कर्तव्यम्' (पा० वा० १-४-३२) इति वचनाद्दानक्रियया प्राप्यत्वात्सम्प्रदानत्वेन चतुर्थी ॥१०॥

इति प्रथमस्य प्रथमेऽष्टमो वर्गः ॥

॥ ५ ॥

१-५

आत्वेति द्वितीयं सूक्तं दशर्चम्। सुरूपकृत्नुं दशेत्यनुवृत्तौ 'आतु युञ्जन्ति' (अनु० १-१) इत्यवमनुक्रान्तत्वात्। ऋषिच्छन्दोदेवताविनियोगाः पूर्ववत्। [159]विशेषविनियोगस्तु अतिरात्रे

---

[158] तस्मै। तनु धातोः 'त्यजितनियजिभ्यो डित्' इत्यनेनादिप्रत्यये डिति टित्वाट्टिलोपे तच्छब्दः। ततश्चतुर्थ्येकवचने ङे प्रत्यये तस्मिन् परतः तच्छब्दस्य त्यदाद्यत्वे पररूपे ङेः स्मयादेशे 'तस्मै' इति रूपम्। अत्र प्रातिपदिकस्वरेण प्रत्ययस्वरेण वा तकाराकारस्योदात्तत्वे ततः परस्य सुप्स्थानिकस्यादेशस्यानुदात्तत्वं, तस्य चोदात्तात्परत्वात्स्वरितः तस्मै इति स्वरः। अत्र 'सावेकाचस्तृतीयादिर्विभक्तिः' इति सूत्रेण विभक्तिस्वर उदात्तो न प्रवर्तते, 'न गोश्वन्साववर्ण-साववर्णं राडङ् क्रुङ् कृद्भ्यश्च' इति सूत्रेण प्रथमैकवचनेऽवर्णान्तत्वेन विभक्त्युदात्तस्वरस्य निषेधात्।

अस्मिंश्चतुर्थसूक्ते पूर्वापेक्षया सप्तसूत्राणामावश्यकता विशेषेण भवति स्वरसञ्चाराय। आहृत्य षट्षष्टिसूत्राणि।

[159] विशेषविनियोगस्तु। 'ऋषिच्छन्दोदेवताविनियोगाः पूर्ववत्' इत्यभिधाय भाष्यकारः 'विशेषविनियोगस्तु' इति वदति। अत्र 'पूर्ववत्' इति पदेन 'सुरूपकृत्नुमूतये' इत्यादिषण्णां सूक्तानामभिप्लवषडहे ब्राह्मणाच्छंसिकर्तृके शस्त्रे स्तोमवृद्धावावापार्थत्वेन विनियोगः, 'सुरूपकृत्नुमूतये' इत्यादित्रयाणां सूक्तानां महाव्रते निष्केवल्यशस्त्रे विनियोगः, 'सुरूपकृत्नुमूतये' इति तृचस्य चतुर्विंशेऽहनि ब्राह्मणाच्छंसिनश्शस्त्रे विनियोगः, 'सुरूपकृत्नुमूतये' इत्यस्या ऋचश्च अग्निष्टोमयागे वैश्वदेवशस्त्रे धाय्यात्वेन विनियोग इति ये विनियोगास्तेषामत्रातिदेश इति प्रतीतये, किन्तु सूक्तविनियोगातिदेशे बाधकाभावेऽपि तृचविनियोगस्य मन्त्रविनियोगस्य चातिदेशो 'आ त्वेता निषीदत' इत्यत्र सङ्गतिर्न भवेदिति प्रश्नेऽत्रायं समन्वयः–

'प्रकृतिवद्विकृतिः कर्तव्या' इति सामान्यातिदेशस्थले श्रौतयागेषु तेषामङ्गानामतिदेशो न स्वीक्रियते येषां विकृतौ नोपयोगः। यथा–'प्राजापत्यं चरुं घृते निर्वपेच्छतकृष्णलमायुष्कामः' इति विहितायामायुष्कामेष्टौ दर्शपूर्णमासतस्सर्वेष्वङ्गेष्वतिदेशेन प्राप्तेष्वपि कृष्णल-(सुवर्णशकल)द्रव्यकत्वादस्याः अवहननपेषणादेरनुपयोगात्तद्व्यतिरिक्तानामेवाङ्गानामतिदेशः, तथा सुरूपकृत्नुमूतय इति तृचमन्त्रविनियोगयोस्सम्भवादुपयोगाभावेन सूक्तविनियोग एवातिदिश्यत इति।

अतिरात्रे तृतीयपर्यायेति। पूर्वं टिप्पण्या ५६ अङ्के सप्तसंस्थाकज्योतिष्टोमस्य स्वरूपमुक्तम्। तत्र सप्तसु संस्थास्वेका अतिरात्रशब्देनोच्यते। संस्थेयं षोडशिसंस्थापर्यन्तं ज्योतिष्टोममनुष्ठाय तदूर्ध्वमनुष्ठेया भवति। अर्थात्–अग्निष्टोमसंस्थायां द्वादश स्तोत्राणि द्वादश शस्त्राण्यनुष्ठाय, तत उक्थ्यसंस्थायां त्रीणि स्तोत्राणि त्रीणि च शस्त्राण्यनुष्ठेयानि। तदा पञ्चदश स्तोत्राणि तावन्ति च शस्त्राणि सम्पद्यन्ते। तदूर्ध्वं षोडशिस्तोत्रमेकम् एकञ्च शस्त्रमनुष्ठेयम्। तदा स षोडशिसंस्थाको भवति। अत्र षोडशस्तोत्राणि तावन्ति च शस्त्राणि जायन्ते। तत ऊर्ध्वमतिरात्रस्तोत्राणि कर्तव्यानि। इमानि चत्वारि स्तोत्राणि भवन्ति। तेषां त्रिभिः पर्यायैरनुष्ठानम्। एकैकस्मिन् पर्याये चत्वारि चत्वारि शस्त्राणि 'चतुश्शस्त्राः पर्यायाः' इत्याश्वलायनः। पर्यायाणां स्वरूपमापस्तम्बाचार्य एवं प्रतिपादयति–'अतिरात्रमेव षोडशिनममी मुनयस्तत्र त्रयोदशभ्यश्चमसगणेभ्यो राजानमभिरेचयति। षोडशिना प्रचर्य रात्रिपर्यायैः प्रचरति–होतृचमसमुख्यः प्रथमो गणो भवति, मैत्रावरुणचमसमुख्यो द्वितीयः, ब्राह्मणाच्छंसिमुख्यस्तृतीयः, अच्छावाकचमसमुख्यश्चतुर्थः। प्रथमाभ्यां गणाभ्यामध्वर्युश्चरति, उत्तराभ्यां प्रतिप्रस्थाता, एष प्रथमः पर्याय एवं विहितौ द्वितीयस्तृतीयश्च' इति। शस्त्रेषु होतुः होत्रकाणां मैत्रावरुण-ब्राह्मणाच्छंस्यच्छावाकानां कर्तृत्वमिति पूर्वमभिहितम्। चतुर्णामपि चमसभक्षणेऽधिकारः। तत्र प्रथमगणे होतृचमसस्य मुख्यत्वम् इतरेषाममुख्यत्वम्, द्वितीयगणे मैत्रावरुणचमसस्य मुख्यत्वमन्येषाममुख्यत्वम्, तृतीयगणे ब्राह्मणाच्छंसिचमसस्य चतुर्थे चाच्छावाकचमसस्य मुख्यत्वम्, अन्येषाममुख्यत्वम्। प्रथमद्वितीयगणयोः प्रचारेऽध्वर्युरधिकारी, द्वितीयतृतीययोश्च प्रतिप्रस्थाता। अयमेकः पर्यायः। एवं द्वितीयस्तृतीयश्च पर्यायौ भवत इत्यापस्तंबसूत्रस्यार्थः। अध्वर्युप्रतिप्रस्थात्रोः तत्तच्चमसप्रचारावसरे तेन तेन ऋत्विजा शस्त्रं पठनीयं भवति। 'स्तोत्रमग्रे शस्त्रात्' इति विधिना स्तोत्रं प्रथममारब्धव्यम्।

तत्रोद्गातारः–प्रथमपर्याये वैतहव्यं होतृसाम प्रथमं गायन्ति। तत्र प्रस्तावभागः 'पान्तमावो अन्धसः' इत्यत्र सम्पाद्यते। उद्गीथप्रतिहारोपद्रवनिधनानां भागानां सम्पादनाय द्वे गायत्र्यौ 'पुरुहूतं पुरुष्टुतम्' इति ऋचावुत्तरार्चिके पठिते। अनयोः प्रग्रथनेनानुष्टुप्त्वं सम्पाद्य गानं भवति। 'प्रथमानि पदानि पुनरादीनि भवन्ति प्रथमस्य पर्यायस्य' इति (ताण्ड्य. ब्रा. ९.१.४.) विध्यनुसारं गायत्र्याः प्रथमपादस्य 'पुरुहूतं पुरुष्टुतम्' इत्यस्य द्विरावृत्तौ एकाऽनुष्टुप् सम्पद्यते। एवं द्वितीयाया अपि ऋचः प्रथमपादावृत्तिः कर्तव्या। एवं सति 'पान्तमावो अन्धसः' इत्येकाऽनुष्टुप् प्रग्रथनेन सम्पादिते द्वे इत्येकस्य साम्नस्तृच-

सम्पत्तिर्जायते। तेन 'एकं साम तृचे क्रियते स्तोत्रियम्' इति विधिरनुसृतो भवति। इदमेकं स्तोत्रम्।

एवं शस्त्रकर्तृषु होता प्रथमपर्याये 'पान्तमावो अन्धसः' इति तृचं, स्तोत्रियम् 'अपादु शिप्र्यन्धसः' इति तृचमनुरूपम् 'त्वभुवस्सत्रासाहम्' इति मन्त्रतः सूक्तशेषं पठित्वा 'अभि त्वं मेषम्' इति सूक्तं पर्यासम्, 'अध्वर्यवो भरतेन्द्राय' इति मन्त्रं याज्याञ्च पठित्वा स्वीयं शस्त्रं समापयेत्। 'याज्यान्तानि शस्त्राणि' इति विधिना सर्वत्र शस्त्रेऽन्तिमो मन्त्रो याज्या भवति, ततः पूर्वं पर्यासः, ततः पूर्वमनुरूपः, ततः पूर्वञ्च स्तोत्रिय इति क्रमः। याज्यान्ते चमसादिहोमः। इयमेव शस्त्रयाज्यापदेनाप्यभिधीयते। अत्रागूर्नं भवतीति विशेषः। अत्राप्युद्गातृगणवत् शस्त्रकर्तारः प्रथमामृचं वर्जयित्वा प्रत्यृचं स्तोत्रियानुरूपेषु प्रथमानि पदानि (पादानि) द्विरुक्त्वाऽवस्यन्ति। शिष्टौ यौ पादौ तौ समस्याऽन्ते प्रणवमुच्चारयेयुः। इदमेकं शस्त्रम्।

उद्गातारः 'प्रव इन्द्राय मादनम्' इति तृचे मैत्रावरुणसामगौरीवितं गायन्ति। इदं द्वितीयं स्तोत्रम्।

शस्त्रकर्तृषु मैत्रावरुणः 'प्रवइन्द्राय मादनम्' इति स्तोत्रियं तृचम् 'प्रकृतान्यृजीषिणः' इति तृचमनुरूपम् 'प्रतिश्रुताय वो धृषत्' इति मन्त्रतः पञ्चदशमन्त्रान् 'दिवश्चिदस्य' 'स नो नव्येभिः' इति पर्यासद्वयम् 'अस्य मदे पुरुवर्पांसि' इति याज्याञ्च पठित्वा स्वीयं शस्त्रं समापयेत्। इदं द्वितीयं शस्त्रम्।

उद्गातारः 'वयमु त्वा तदिदर्था' इति तृचे काण्वं ब्राह्मणाच्छंसि साम गायन्ति। इदं तृतीयं स्तोत्रम्।

ब्राह्मणाच्छंसी च 'वयमुत्वा तदिदर्था' इति स्तोत्रियं तृचम् 'वयमिन्द्र त्वायवोऽभि' इत्यनुरूपं तृचम् 'वार्त्रहत्याय शवसे' इति सूक्तमन्तिममन्त्रवर्जम् 'इन्द्रो अङ्ग महद्भयमभि' इति तृचं 'न्यूषु वाचम्' इति मन्त्रञ्च पर्यासम् 'अप्सु धूतस्य हरिवः पिबेह' इति याज्याञ्च पठित्वा स्वीयं शस्त्रं समापयेत्। इदं तृतीयं शस्त्रम्।

उद्गातारः–'इन्द्राय मद्वने सुतम्' इति तृचेऽच्छावाकसाम श्रौतकक्षं गायन्ति। इदं चतुर्थं स्तोत्रम्।

अच्छावाकस्तु–'इन्द्राय मद्वने सुतम् इति स्तोत्रियं तृचम् 'इन्द्रमिद्गाथिनो बृहत्' इत्यनुरूपं तृचम् 'ऐन्द्रसानसिं रयिम्' इति सूक्तं 'एतोन्विन्द्रं स्तवामेशानम्' इति तृचं पठित्वा 'मावो अस्मिन्मघवत् इति पर्यासम् 'इन्द्र पिब तुभ्यं सुतः' इति याज्याञ्च पठेत्। इदं चतुर्थं शस्त्रम्। एवं प्रथमपर्याये चत्वारि स्तोत्राणि चत्वारि च शस्त्राणि सम्पद्यन्ते।

द्वितीये (मध्यमे) पर्याये–उद्गातारः 'अयं त इन्द्र सोम' इति तृचे होतुस्साम दैवोदासम् ऊर्ध्वसमनं वा गायन्ति। इदमेकं स्तोत्रम्।

शस्त्रकर्तृषु होता 'अयं त इन्द्र सोम' इति स्तोत्रियं तृचम् 'अयं ते मानुषे जने' इत्यनुरूपं तृचम् 'उध्वेदभि' इति सूक्तमन्तिमऋग्वर्जम् 'अहं भुवम्' इति पर्यासम् 'अपाय्यन्धसो मदाय' इति याज्याञ्च पठित्वा स्वीयं शस्त्रं समापयेत्। अत्र 'सर्वं सर्वासां मध्यमे मध्यमानि

प्रत्यादाय ऋगन्तैः प्रणुवन्ति' इत्याश्वलायनः। अस्यायमर्थः–प्रथमपर्याये यथा प्रथमाया ऋचो वर्जनमुक्तं न तथाऽत्र। किन्तु मध्यमे पर्याये सर्वे होतृहोत्रकाः, सर्वासामृचां मध्यमानि पादानि पठित्वाऽवसाय, पुनस्तानि प्रत्यादाय तैः ऋगन्तानि सन्धायान्ते प्रणवमुच्चारयेयुरिति। इदमेकं शस्त्रम्।

उद्गातारः 'आतू न इन्द्र क्षुमन्तम्' इति तृचे मैत्रावरुणसाम आकूपारं गायन्ति। इद द्वितीयं स्तोत्रम्।

मैत्रावरुणः–'आतू न इन्द्र क्षुमन्तम्' इति स्तोत्रियं तृचम् 'आ प्र द्रव परावत' इत्यनुरूपं तृचम् 'न ह्यन्यं बलाकरम्' इत्यष्टावृचः, 'इङ्खयन्तीरपस्युव' इति सूक्तम् 'अहं दां गृणते' इति सूक्तम् 'पाता सुतमिन्द्रो अस्तु सोमम्' इति पर्यासम् 'हन्ता वृत्रमिन्द्र' इति याज्याञ्च पठेत्। इदं द्वितीयं शस्त्रम्।

उद्गातारः–'अभि त्वा वृषभा सुतम्' इति तृचे ब्राह्मणाच्छंसिसाम आर्षभं क्षत्रसाम कुर्युः। इदं तृतीयं स्तोत्रम्।

ब्राह्मणाच्छंसी–'अभि त्वा वृषभा सुतम्' इति स्तोत्रियं तृचम् 'अभि प्र गोपतिं गिरा' इत्यनुरूपं तृचम्, 'आ तू न इन्द्र मध्रग्घुवान' इति सूक्तद्वयम् 'अश्वावति प्रथमो गोषु गच्छति' इति सूक्तम् 'प्रोग्रां पीतिम्' इति पर्यासम् 'वृष्ण इयर्मि सत्याम्' इति याज्याञ्च पठेत्। इदं तृतीयं शस्त्रम्।

उद्गातारः 'इदं वसो सुतमन्ध' इति तृचे अच्छावाकसाम गारं गायन्ति। इदं चतुर्थं स्तोत्रम्।

अच्छावाकस्तु–'इदं वसो सुतमन्ध' इति स्तोत्रियं तृचम् 'इन्द्रेहि मत्स्यन्धसः' इत्यनुरूपम् 'प्रसम्राजं चर्षणीनाम्' इति सूक्तम् 'उपक्रमस्वाभर धृषत' इति तृचम् 'तदस्मै नव्यमङ्गिरः' इति सूक्तं पर्यासम् 'अस्य पिब यस्य जज्ञान इन्द्र' इति याज्याञ्च शंसेत्। इदं चतुर्थं शस्त्रम्। मध्यमे पर्याये चत्वारि स्तोत्राणि शस्त्राणि च सम्पद्यन्ते।

तृतीये पर्याये उद्गातारः—'इदं ह्यन्वोजसा' इति तृचे माधुच्छन्दसं होतृसाम कुर्युः। इदमेकं स्तोत्रम्।

होता-'इदं ह्यन्वोजसा' इति स्तोत्रियं 'महाँ इन्द्रो य ओजसा' इत्यनुरूपं 'समस्य मन्यवे विश' इति द्विचत्वारिंशदृचः। 'विश्वजिते धनजित' इति सूक्तं पर्यासम् 'तिष्ठाहारी रथमायुज्यमाना' इति याज्याञ्च शंसेत्। अत्र 'उत्तमान्युत्तमे' इत्याश्वलायननिर्देशानुसारं सर्वे ऋत्विजः तृतीये पर्याये ऋचामुत्तमानि पदानि स्तोत्रियानुरूपेषु द्विरुक्त्वा पूर्ववदन्ते प्रणवमुच्चारयेयुः। अच्छावाकस्य तु उत्तमे पादेऽन्ततश्चतुरक्षराणि द्विर्वक्तव्यानि। अयं वैकल्पिकः पक्षः। इदमेकं शस्त्रम्।

उद्गातारः 'आ त्वेता निषीदत' इति तृचे मैत्रावरुणसाम दैवातिथं कुर्युः। इदं द्वितीयं स्तोत्रम्।

मैत्रावरुणः 'आ त्वेता निषीदत' इति स्तोत्रियम्, 'आत्वद्यसबर्दुघाम्' इत्यनुरूपम्,

तृतीयपर्याये मैत्रावरुणशस्त्रे स्तोत्रियोऽयं तृचः। अतिरात्रे पर्यायाणामिति खण्डे 'आत्वेता निषीदत' (आ० श्रौ० ६-४) इत्युक्तत्वात्।

तत्र प्रथमामृचमाह। तुशब्दः क्षिप्रार्थो निपातः। [160]द्वाभ्यामाङ्भ्यामन्वेतुमितशब्दोऽभ्यसनीयः। हे सखाय ऋत्विजस्तु क्षिप्रमस्मिन्कर्मणि एतेतागच्छतागच्छत। आदरार्थोऽभ्यासः। आगत्य च निषीदत—उपविशत। उपविश्य चेन्द्रमभिप्रगायत—सर्वतः प्रकर्षेण स्तुत। कीदृशाः सखायः? स्तोमवाहसः—त्रिवृत्पञ्चदशादिस्तोमानस्मिन्कर्मणि वहन्ति प्रापयन्ति। आ। निपातत्वादाद्युदात्तः। इत। इण् गतौ। 'द्व्यचोऽतस्तिङः (पा० ६-३-१३५) इति संहितायां दीर्घत्वम्। नि। निपातत्वादाद्युदात्तः। सीदत। ''पाघ्राध्मास्थाम्नादाण्दृशि०' (पा० ७-३-७८) इत्यादिना सदेः सीदादेशः। 'सदेरप्रतेः' (पा० ८-३-६६) इति संहितायां

---

'नकिरिन्द्र त्वदुत्तर' इति सूक्तमुनमर्ग् वर्जम्। श्रत्ते दधामि' इति सूक्तं पर्यासं 'इदं त्यत्पात्रमिन्द्रपानम्' इति याज्याञ्च शंसेत्। इदं द्वितीयं शास्त्रम्।

उद्गातारः—'योगे योगे तवस्तरम्' इति तृचे सौमेधं ब्राह्मणाच्छंसिसाम कुर्युः। इदं तृतीयं स्तोत्रम्।

ब्राह्मणाच्छंसी—'योगे योगे तवस्तरम्' इति स्तोत्रियम्, 'युञ्जन्ति ब्रध्नमरुषम्' इत्यनुरूपम्, 'यदिन्द्राहम्' 'मते महे' इति सूक्ते 'ऊती शचीवस्तव वीर्येण' इति याज्याञ्ज पठेत्। इदं तृतीयं शस्त्रम्।

उद्गातारः—'इन्द्रः सुतेषु सोमेषु' इति तृचे कौत्समच्छावाकसाम कुर्युः। इदं चतुर्थं स्तोत्रम्।

अच्छावाकस्तु—'इन्द्रः सुतेषु सोमेषु' इति स्तोत्रियम्, 'य इन्द्र सोमपातमः' इत्यनुरूपम्, 'आ घा ये अग्निमिन्धते' इति सप्तदशर्चः, 'य इन्द्र चमसेष्वा सोम' इति तृचम्, 'प्रवः सताम्' इति सूक्तं पर्यासम्, 'प्रो द्रोणे हरयः कर्माग्मन्' इति याज्याञ्च शंसेत्। इदं चतुर्थं शस्त्रम्। एवं त्रिषु पर्यायेषु द्वादश स्तोत्राणि तावन्ति च शस्त्राणि सम्पद्यन्ते। तत्र तृतीये पर्याये मैत्रावरुणकर्तृकशस्त्रे 'आ त्वेता निषीदत' इत्ययं तृचः स्तोत्रियत्वेन विनियुक्त इति भाष्यसन्दर्भस्यार्थः।

[160] द्वाभ्यामाङ्भ्याम्। अस्मिन् मन्त्रे आ इत्युपसर्गद्वयमेकञ्च क्रियापदम् 'इत' इति श्रूयते। उपसर्गाः क्रिययैवान्वियन्ति। एकस्योपसर्गस्य क्रियान्वये जाते द्वितीयस्यान्वयार्थं क्रियापदमावश्यकम्। तत्किमध्याहर्तव्यम्, उत श्रुतक्रियापदस्यैवाभ्यासात्मकोऽनुषङ्गः कर्तव्य इति संशये—यथा-'या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रंवचो अपावधीत्वेषं वचोअपावधीत्स्वाहा, याते अग्ने रजाशया याते अग्ने हराशया' इत्यत्र 'रजाशया' 'हराशया' इत्यनयोराकाङ्क्षायां श्रुतस्यैव 'तनूर्वर्षिष्ठा' इत्येवमादेर्वाक्यशेषस्यात्राप्यनुषङ्गः, न त्वध्याहार इत्यनुषङ्गाधिकरणे मीमांसायां सिध्दान्तितः, तथा प्रकृतेऽपि एकस्योपसर्गस्य श्रुतक्रियापदेनान्वये जातेऽपि उपसर्गान्तरस्याकाङ्क्षायां श्रुतक्रियापदस्याभ्यासरूपोऽनुषङ्गः स्वीकर्तव्यः न त्वध्याहार इति।

त्वम् ।[160a] अभि । 'उपसर्गाश्चाभिवर्जम्' (फि० ४-३१) इति वचनात्प्रातिपदिकान्तोदात्तत्वम् । [161]स्तोमवाहसः । 'अतिस्तुसुहुसृधृक्षिक्षुभायवापदियक्षिणीभ्यो मन्' (उ० १-१४५) इति स्तौतेर्मन्प्रत्ययान्तः स्तोमशब्दो नित्त्वादाद्युदात्तः । स्तोमं वहन्तीति स्तोमवाहसः । 'वहिहाधाञ्भ्यश्छन्दसि' (उ० ४-२२२) इत्यसुन् प्रत्ययः । तत्र 'णित्' (उ० ४-२१९) इत्यनुवृत्तेः 'अत उपधायाः' (पा० ७-२-११६) इत्युपधाया वृद्धिः । कृदुत्तरपदप्रकृतिस्वरत्वे प्राप्ते गतिकारकयोरपि' 'पूर्वपदप्रकृतिस्वरत्वञ्च' (उ० ४-२२८) इत्यौणादिकसूत्रात्समास आद्युदात्तः ॥१॥

द्वितीयामृचमाह । सखायोऽभिप्रगायतेति पदद्वयमत्रानुवर्तते । हे सखाय ऋत्विजः सचा यूयं सर्वे सह । यद्वा सचा परस्परसमवायेन सुतेऽभिषुते सोमे प्रवृत्ते सतीन्द्रमभिप्रगायत । कीदृशमिन्द्रम् । पुरूतमम्—पुरून् बहून् शत्रून्तमयति ग्लपयतीति पुरूतमः । पुरूणां बहूनां वार्याणां वरणीयानां धनानामीशानं स्वामिनम् । पुरूतमम् । तमु ग्लाने इति [162]धातोरन्तर्भावितण्यर्थात्पचाद्यचि चित्त्वादन्तोदात्तेऽपि कृदुत्तरपदप्रकृतिस्वरत्वं बाधित्वा 'परादिश्छन्दसि बहुलम्' (पा० ६-२-१९९) इत्युत्तरपदाद्युदात्तत्वम् । पुरूणाम् । पृ पालनपूरणयोरित्यस्मात् 'कुः०' (उ० १-२२) इत्यनुवृत्तौ 'पृभिदिव्यधिगृधिधृषिवृशिभ्यः (उ० १-२३) इति कुप्रत्ययः । कित्त्वाद्गुणनिषेधः । 'उदोष्ठ्यपूर्वस्य' (पा० ७-१-१०२) इत्युकारः । 'उरण् रपरः' (पा०

---

160a 'उपसर्गा अभिवर्जम्' इति सूत्रेण सर्वेषामुपसर्गाणामभिवर्जानामाद्युदात्तस्वरः । अभि इत्यस्य तु अन्तोदात्तत्वम् । तेन अभि इति सिध्यति ।

161 स्तोमवाहसः । सोमयागे स्तोत्रेषु विविधाः स्तोमा विहिताः । त्रिवृत् पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः, त्रयस्त्रिंश इत्यादयः । तत्तत्स्तोत्रभेदेनेमास्संख्या आवृत्त्या सम्पादनीया भवन्ति । एकैकस्मिन् स्तोत्रे ऋक्त्रयस्यावश्यकता भवति । तत्रैका योनिग्रन्थसमाम्नाता, अपरे चोत्तराग्रन्थसमाम्नाते । योनिग्रन्थ एव पूर्वार्चिकशब्देन, उत्तराग्रन्थश्च उत्तरार्चिकशब्देन व्यवह्रियते । 'एकं साम तृचे क्रियते स्तोत्रियम्' इति विध्यपेक्षितस्य ऋक्त्रयस्य पूर्वोक्तग्रन्थद्वयात्प्राप्तिः । ऋक्त्रयमवलम्ब्यैव पूर्वोक्तस्तोमास्सम्पादनीयाः । सम्पादनप्रकारस्ताण्डयमहाब्राह्मणे प्रतिपादितः । तानिमान् स्तोमान् वहन्ति प्रापयन्ति ये ते स्तोमवाहसः । ते च ऋत्विज एव । अतो मन्त्रगतस्य 'सखाय' इति पदस्य ऋत्विज इत्यर्थो भाष्यकारेण स्वीकृतः ।

स्तोमशब्दो मन्प्रत्ययान्तो नित्त्वादाद्युदात्तः । 'वहिहाधाञ्भ्यश्छन्दसि' इति सूत्रेण वह् धातोरसुन् उपधाया वृद्धिः । अतोऽयमप्याद्युदात्तः । स्तोमान् वहन्तीति समासे समासान्तोदात्तः प्राप्तः—स्तोमवाहसः इति । तं बाधित्वा 'गतिकारकोपपदात्कृत्' इत्यनेनोत्तरपदप्रकृतिस्वरः स्तोमवाहसः इति प्राप्तः । अस्याप्यपवादः 'गतिकारकयोरपि' इति । तेन पूर्वपदप्रकृतिस्वर एव स्तोमवाहसः इति ।

162 अस्य विवरणं टिप्पण्या ८८ अङ्के द्रष्टव्यम् ।

१-१-५१)। प्रत्ययस्वरेणान्तोदात्तः पुरुशब्दः। अतो मतुपि ह्रस्वादन्तोदात्तात्पुरुशब्दात्परस्य नामो 'नामन्यतरस्याम्' (पा० ६-१-१७७) इत्यन्तोदात्तत्वम्। [163]ईशानम्। ईश ऐश्वर्यं इति धातोरनुदात्तेत्त्वात्परस्य शानचो लसार्वधातुकानुदात्तत्वम्। [164]वार्याणाम्। वृङ् सम्भक्तावित्यस्माद् 'ऋहलोर्ण्यत्' (पा० ३-१-१२४)। क्यब्विधौ हि वृञ एव ग्रहणं न तु वृङः। 'तित्स्वरितम्' (पा० ६-१-१८५) इति प्रत्ययस्वरितत्वं बाधित्वा 'ईडवन्दवृशंसदुहां ण्यतः' (पा० ६-१-२१४) इति ण्यदन्तस्याद्युदात्तत्वम्। 'यतोऽनावः' (पा० ६-१-२१३) इत्यत्र तु ण्यतो ग्रहणं न भवति तस्य द्व्यनुबन्धकत्वात्। एकानुबन्धग्रहणे न द्व्यनुबन्धकस्य इति नियमात्। सचा। षच समवाये। 'धात्वादेः षः सः' (पा० ६-१-६४)। 'संपदादिभ्यो भावे क्विप्' (पा० वा ३-३-९४) इति क्विप्। तृतीयैकवचनम्। धातुस्वरेणाद्युदात्तः। 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पा० वा० ३५) इति न्यायेन 'सावेकाचः०' (पा० ६-१-१६८) इति सूत्रं न प्रवर्तते। सचेत्यस्य निपातत्वपक्षे स्पष्टमाद्युदात्तत्वम् ॥२॥

तृतीयामृचमाह। घशब्दोऽवधारणार्थो निपातः। सर्वैस्तच्छब्दैः सम्बध्यते। स घ-स एवेन्द्रः पूर्वमन्त्रोक्तगुणविशिष्टो नोऽस्माकं योगे पूर्वमप्राप्तस्य पुरुषार्थस्य सम्बन्धे आभुवत्-आभवतु। पुरुषार्थं साधयत्वित्यर्थः। स एव राये धनार्थमाभुवत्-आभवतु। स एव पुरन्ध्यां योषित्याभुवत्। यद्वा बहुविधायां बुद्धावाभुवत्। 'पुरन्धिर्बहुधीः' (नि० ६-१३) इति यास्कः। स एव वाजेभिर्दैवैरन्नैः सह नोऽस्मानागमत्—आगच्छतु। घ। 'चादयोऽनुदात्ताः' (फि० ४-३३) इत्यनुदात्तः। संहितायामृचि 'तुनुघमक्षुतङ्कुत्रोरुष्याणाम्' (पा० ६-३-१३३) इति दीर्घः। योगे। घञो ञित्त्वादाद्युदात्तत्वम्। भुवत् भूयात्। भवतेराशीर्लिङि परतो 'लिङ्याशिष्यङ्' (पा० ३-१-८६) इत्यङ् प्रत्ययः। तस्य ङित्त्वेन गुणाभावादुवङादेशः।

[163] ईशानम्। ईश ऐश्वर्ये इति धातोर्लटि तस्य शानचि ईशानशब्दः। ततो द्वितीयैकवचनेऽमि पूर्वरूपे ईशानमिति रूपम्। अत्र धातोः स्वरः प्रत्ययाद्युदात्तस्वरेण वारितः। प्रत्ययगतचित्त्वेन निमित्तेन प्रत्ययाद्युदात्तस्वरोऽपि बाधितः। ईशानम् इति दशायां 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तमह्न्विङोः' इत्यनेन धातोरनुदात्तेत्त्वेन ततः परलसार्वधातुकत्वनिबन्धनेन शानचोऽनुदात्तत्वाद्धातुस्वर एवावतिष्ठते ईशानम् इति। अयमेव लसार्वधातुकानुदात्त इति व्यवह्रियते।

[164] वार्याणाम्। वृङ् संभक्तौ इति धातोः 'ऋहलोर्ण्यत्' इति ण्यत्प्रत्ययः। प्रत्ययस्य णित्त्वादृकारस्य वृद्धौ रपरत्वे वार्यशब्दः। तस्य षष्ठीबहुवचने आमि नुटि णत्वे वार्याणामिति पदम्। अत्र प्रथमं प्रत्ययाद्युदात्तस्वरं बाधित्वा 'तित्स्वरितम्' इति सूत्रेण प्रत्ययस्य स्वरितस्वरः वार्याणाम् इति। अनन्तरं 'ईड वन्दवृ शंस दुहां ण्यतः' (ण्यत्प्रत्ययान्तानामेषामादिरुदात्तस्स्यात्) इति सूत्रेणाद्युदात्तो जातः। तेन शेषनिघाते जाते उदात्तादनुदात्तस्य स्वरितः' इति द्वितीयस्य स्वरितः, ततः परस्यानुदात्तस्य प्रचयः।

अत्र 'यतोऽनावः' (यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो नावं विना) इति सूत्रेणाद्युदात्तत्वं न शक्यम्, द्व्यनुबन्धकत्वाभावात्।

'क्रियाशिषि यासुट् न भवत्यनित्यमागमशासनात्' (पा० प० ९४) इति वचनात्। 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघातः। 'ऊडिदंपदाद्यप्पुम्रैद्युभ्यः' (पा० ६-१-१७१) इति राय इत्येतस्य विभक्तेरुदात्तत्वम्। [165]पुरन्ध्याम्। पुरन्धिः पुरुधीः। पृषोदरादित्वादुकारस्यामादेश ईकारस्य ह्रस्वश्च। आद्युदात्तप्रकरणे 'दिवोदासादीनां छन्दस्युपसङ्ख्यानम्' (पा० वा० ६-२-९१) इत्यद्युदात्तत्वम्। अथवा पुरं शरीरं धीयतेऽस्यामिति 'कर्मण्यधिकरणे च' (पा० ३-३-९३) इति किप्रत्ययः। अलुक् छान्दसः। 'नब्विषयस्यानिसन्तस्य' (फि० २-३) इति पुरशब्द आद्युदात्तः। दासीभारादित्वात् पूर्वपदप्रकृतिस्वरत्वम्। गमत्। गमेर्लेटस्तिप्। 'इतश्च लोपः परस्मैपदेषु' (पा० ३-४-९७) इतीकारलोपः। 'बहुलं छन्दसि' (पा० २-४-७३) इति शपो लुक्। 'लेटोऽडाटौ' (पा० ३-४-९४) इत्यडागमः। 'आगमा अनुदात्ता' इति तस्यानुदात्तत्वे धातुस्वर एव शिष्यते। वाजेभिः। वृषादित्वादाद्युदात्तः ॥३॥

चतुर्थीमृचमाह। समत्सु युद्धेषु यस्येन्द्रस्य संस्थे रथे युक्तौ हरी ह्रावश्वौ शत्रवो न वृण्वते—न सम्भजन्ते। रथमश्वौ च दृष्ट्वा पलायन्त इत्यर्थः। तस्मा इन्द्राय तत्सन्तोषार्थं हे ऋत्विजो गायत—स्तुतिं कुरुत। रण इत्यादिषु षट्चत्वारिंशत्संग्रामनामसु समत्सु समरणे (निघ० २-१७) इति पठितम्। संस्थे। सम्यक् तिष्ठतीति संस्थो रथः। 'आतश्चोपसर्गे' (पा० ३-१-१३६) इति कप्रत्ययः। कृदुत्तरपदप्रकृतिस्वरत्वम्। वृण्वते। प्रत्ययस्वरेणाकार उदात्तः। 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' (पा० वा० ६-१-१५८)। 'तिङ्ङतिङः' (पा० ८-२-२८) इति निघातो न भवति। 'यद्वृत्तान्नित्यम्' (पा० ८-१-६६) इति प्रतिषेधात्। पञ्चमीनिर्देशेऽप्यत्र व्यवहितेऽपि कार्यमिष्यते। हरतो रथमिति हरी। अश्वौ। ०इन् (उ० ४-११९) इत्यनुवृत्तौ 'हृपिषिरुहिवृतिविदिच्छिदिकीर्तिभ्यश्च' (उ० ४-१२०) इतीन्प्रत्ययः। नित्त्वादाद्युदात्तत्वम्। समत्सु। संपूर्वादत्तेः क्विप्। शत्रवः। शतिः सौत्रो धातुर्हिंसार्थः। 'रुशातिभ्यां क्रुन्' (उ० ४-१०६) नित्त्वादाद्युदात्तत्वम्। तस्मै। 'सावेकाचः०' (पा० ६-१-१६८) इति विभक्त्युदात्तस्य 'न गोश्वन्साववर्ण०' (पा० ६-१-१८२) इति प्रतिषेधात्प्रातिपदिकस्वर एव ॥४॥

---

[165] पुरन्ध्याम्। पॄधातोः कप्रत्यये कित्वाद्गुणाभावे 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे पुरशब्दः। तदुपपदाद्धाधातोः 'कर्मण्यधिकरणे च' इति किप्रत्यये धातोराकारलोपे पुरमिति विभक्तेश्छान्दसत्वादलुकि पुरन्धिशब्दः। अथवा पॄधातोः पुरुशब्दं निष्पाद्य तस्य धीशब्देन बहुव्रीहौ पुरुधिशब्दः। तस्य पृषोदरादित्वाद् रु इत्यस्य रादेशो नुम् चेति पुरन्धिशब्दः। तस्य सप्तम्येकवचने ङिप्रत्यये तन्निमित्तिकायां पूर्वस्य 'ङिति ह्रस्वश्च' इति नदीसंज्ञायां 'ङेराम्नद्याम्' इति आमि यणि पुरन्ध्याम् इति रूपम्। तत्र प्रथमकल्पे पुरशब्दः क्लीबलिङ्गे वर्तत इति 'नब्विषयस्यानिसन्तस्य' इत्यनेनाद्युदात्तः पुरशब्दः। समासे सति समासान्तोदात्तस्वरं बाधित्वा दासीभारादित्वात् (यस्य तत्पुरुषस्य पूर्वपदप्रकृतिस्वरत्वमिष्यते न विशिष्यवचनं स सर्वोऽपि दासीभारादिषु द्रष्टव्यः) पूर्वपदप्रकृतिस्वरः पुरन्ध्याम् इति। द्वितीयकल्पे 'आद्युदात्तप्रकरणे दिवोदासादीनां छन्दस्युपसंख्यानम्' इति वार्तिकेनाद्युदात्तत्वे पूर्वोक्त एव स्वरः।

पञ्चमीमृचमाह। इमे सोमासोऽस्मिन्कर्मणि संपादिताः सोमाः सुतपाव्नेऽभिषुतस्य सोमस्य पानकर्त्रे। षष्ठयर्थे चतुर्थी। तस्य पातुर्वीतये भक्षणार्थं यन्ति—तमेव प्राप्नुवन्ति। कीदृशाः सोमाः? सुताः—अभिषुताः। शुचयः—दशापवित्रेण शोधितत्वाच्छुद्धाः। दध्याशिरः—अवनीयमानं दधि आशीर्दोषघातकं येषां सोमानां ते दध्याशिरः। सुतपाव्ने। सुतं पिबतीति सुतपावा। वनिपः पित्त्वाद्धातुस्वर एव शिष्यते। समासे द्वितीयापूर्वपदप्रकृतिस्वरत्वं बाधित्वा कृदुत्तरपदप्रकृतिस्वरत्वम्। शुचयः। शुचः दीप्तौ। इन् (उ० ४-११९) इत्यनुवृत्तौ 'इगुपधात्कित्' (उ० ४-१२१) इतीनः कित्त्वाल्लघूपधगुणाभावः। नित्त्वादाद्युदात्तत्वम्। वीतये। वी गतिव्याप्तिप्रजनकान्त्यसनखादनेष्वित्यस्मात् मन्त्रे वृषेषपचमनविदभूवीरा उदात्तः' (पा० ३-३-९६) इति क्तिन्नुदात्तः। सोमासः। षुञ् अभिषवे। 'अर्तिस्तुसुहुसृधृक्षि०'(उ०१-१४५)इत्यादिना मन्। नित्त्वादाद्युदात्तः। 'आज्जसेरसुक्'(पा० ७-१-५०) इत्यसुगागमः। [166]दध्याशिरः। दधाति पुष्णातीति दधि। डुधाञ् धारणपोषणयोः। 'आदृगमहनजनः किकिनौ लिट् च' (पा० ३-२-१७१) इति किन्। लिड्वद्भावाद् द्विर्भावः। कित्त्वादाकारलोपः। नित्त्वादाद्युदात्तत्वम्। शॄ हिंसायाम्। आशृणाति आहिनस्ति सोमेऽवनीयमानं सत्सोमस्य स्वाभाविकं रसमृजीषत्वप्रयुक्तं नीरसं दोषं वेत्याशीः। 'विरप्यृत इद्धातोः' (पा० ७-१-१००) इतीत्वं रपरत्वञ्च। दध्येवाशीर्येषां सोमानां ते दध्याशिरः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम् ॥५॥

इति प्रथमस्य प्रथमे नवमो वर्गः ॥

आत्वेति सूक्तस्य षष्ठीमृचमाह। सुक्रतो शोभनकर्मन् शोभनप्रज्ञ वा हे इन्द्र त्वं सुतस्याभिषुतस्य सोमस्य पीतये पानार्थं ज्यैष्ठ्याय देवेषु ज्येष्ठत्वार्थं च सद्यस्तस्मिन्नेव क्षणे

---

166 दध्याशिरः। दधि आशीः दोषोपघातकं येषां ते इति सोमानां विशेषणम्। सोमे मादकत्वदोषो वर्तते, तन्निर्हरणार्थं पदार्थान्तरस्य मिश्रणं भवति। 'पयसा मैत्रावरुणं श्रीणाति' इति मैत्रावरुणग्रहे पयोमिश्रणम्, 'सक्तुभिर्मन्थिनम्' इति मन्थिग्रहे सक्तूनां मिश्रणम्, 'दध्नाऽऽदित्यं श्रीणाति' इत्यादित्यग्रहे दधिमिश्रणञ्च ब्राह्मणे विहितम्। अस्मिन्मन्त्रे 'सुतपाव्ने' इति चतुर्थ्यन्तेनेन्द्रं निर्दिश्य तस्मै दध्याशिरस्सोमा भक्षणाय दातव्या इति प्रतीयते। दध्याशिरश्च सोमा आदित्याय ब्राह्मणे विधीयन्ते। कथमनयोस्सङ्गतिरिति प्रश्नस्यास्त्यवसरः। किन्तु-परमैश्वर्यसम्पन्न इन्द्रः अग्निवाय्वादित्यग्रहनक्षत्ररूपेण 'युञ्जन्ति ब्रध्नमरुषः' इति प्रतिपादितः। तेनेन्द्रस्यादित्यरूपेणावस्थानं न विरुद्धम्। दध्याशिराणां सोमानामादित्यरूपेण विद्यमान इन्द्रो भक्षणं करोतीति स्वीकारे न कोऽपि दोषः। अथवा-इन्द्रस्य सोमयागैस्सहास्त्यव्यभिचारित्वसम्बन्धः। तादृशस्सोमयागः कोऽपि नास्ति यत्रेन्द्रो देवता न भवेत्। अत एवेन्द्रस्सोमयागे व्याप्तत्वेन वर्ण्यते। दध्याशिराणां सोमानामादित्यार्थत्वेन विधानेऽपि तत्रापीन्द्रसम्बन्धस्य सत्त्वान्न विरोधः। अथवा-ऐन्द्रीन्यायेनादित्यस्येन्द्ररूपत्वाङ्गीकारे न विरोधस्यावसरः।

वृद्धोऽजायथाः। अभिवृद्धोत्साहेन युक्तोऽभूः। पीतये। पा पाने इत्यस्मात् 'स्थागापापचो भावे' (पा० ३-३-९५) इति क्तिन्। 'घुमास्था'० (पा० ६-४-६६) इत्यादिनेत्वम्। तस्य नित्त्वेऽपि व्यत्ययेन प्रत्ययोदात्तत्वम्। उत्तरसूत्रगतमुदात्तपदमत्रापि त्रा योजनीयम्। सद्यः। 'सद्यःपरुत्परारि०' (पा० ५-३-२२) इति सूत्रेण समानेऽहनीत्यर्थे समानस्य सभावो द्यश्च प्रत्ययो निपात्यते। प्रत्ययस्वरेणोदात्तः। वृद्धः। वृधु वृद्धौ। 'उदितो वा' (पा० ७-२-५६) इति क्त्वाप्रत्यय इटो विकल्पितत्वाद् 'यस्य विभाषा' (पा० ७-२-१५) इति निष्ठायामिट्प्रतिषेधः। प्रत्ययस्वरेणोदात्तः। ज्यैष्ठ्याय। ज्येष्ठस्य भावो ज्यैष्ठ्यम्। 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा० ५-१-१२४) इति ष्यञ्। ञित्त्वादाद्युदात्तः॥६॥

सप्तमीमृचमाह। हे इन्द्र त्वां सोमासः सोमा आविशन्तु—आभिमुख्येन प्रविशन्तु। कीदृशाः सोमाः? आशवः—सवनत्रये प्रकृतिविकृत्योर्वा व्याप्तिमन्तः। कीदृशेन्द्र? गिर्वणः—गीर्भिः स्तुतिभिः सम्भजनीय देवविशेष। 'गिर्वणा देवो भवति गीर्भिरेनं वनयन्ति' (नि० ६-१४) इति यास्कः। तथाविध हे इन्द्र ते तुभ्यं प्रचेतसे प्रकृष्टज्ञानाय शं सुखरूपाः सोमाः सन्तु। गिर्वणः। गृणन्तीति गिरः स्तुतयः। गॄ शब्दे। क्विपि 'ऋत इद्धातोः' (पा० ७-१-१००) इतीत्वं रपरत्वञ्च। गीर्भिर्वन्यते सेव्यत इति गिर्वणाः। वन षण सम्भक्तौ। संभक्तिः सेवा। 'सर्वधातुभ्योऽसुन्' (उ० ४-१९०) इत्यसुन्प्रत्ययः। प्रचेतसे। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्॥७॥

अष्टमीमृचमाह। हे शतक्रतो बहुकर्मन्बहुप्रज्ञ वेन्द्र त्वां स्तोमाः सामगानां स्तोत्राण्यवीवृधन्। वर्धितवन्ति। तथा बह्वृचानामुक्था शस्त्राणि त्वामवीवृधन्। यस्मात्पूर्वमेवमासीत्तस्मादिदानीमपि नोऽस्माकं गिरः स्तुतयस्त्वां वर्धन्तु—वर्धयन्तु, अतिवृद्धं कुर्वन्तु। स्तोमाः। मनोनित्त्वादाद्युदात्तः। अवीवृधन्। वृधु वृद्धौ। 'ण्यन्ताल्लुङि चङि उरॄत्' (पा० ७-४-७) इति वृधेरुपधाया ऋकारस्य ऋकारविधानादन्तरङ्गोऽपि गुणो बाध्यते। द्विर्भावहलादिःशेषसन्वद्भावेत्वदीर्घत्वाडागमाः। उक्था—उक्थानि। 'पातृतुदिवचिरिचिसिचिभ्यस्थक्' (उ० २-७) इति वचेः थक्प्रत्ययः। तस्य कित्त्वात्सम्प्रसारणम्। 'शेश्छन्दसि बहुलम्' (पा० ६-१-७०) इति शिलोपो नलोपश्च। प्रत्ययस्वरेणान्तोदात्तः। असामर्थ्यादामन्त्रितपरस्यापि न पराङ्गवद्भाव इति नाद्युदात्तत्वम्। वर्धन्तु। अन्तर्भावितण्यर्थाद्वृधेर्व्यत्ययेन परस्मैपदम्॥८॥

नवमीमृचमाह। इन्द्र इमं वाजं सोमरूपमन्नं सनेत्—सम्भजेत्। कीदृश इन्द्रः? अक्षितोतिः—अहिंसितरक्षणः। कदाचिदपि रक्षां न विमुञ्चतीत्यर्थः। कीदृशं वाजम्? सहस्रिणम्—प्रकृतौ विकृतौ च प्रवर्तमानत्वेन सहस्रसङ्ख्यायुक्तम्। यस्मिन्वाजे विश्वानि

---

धाञ् धातोः किन् प्रत्ययः। लिड्वद्भावाद्द्वित्वम्। तत्र पूर्वस्याभ्याससंज्ञायां ह्रस्वे जश्त्वे धातोराकारलोपे दधिशब्दो नित्त्वादाद्युदात्तः। शृधातोः 'क्विप् च' इति क्विपि 'ऋत इद्धातोः' इति धात्वृकारस्य इत्वे रपरत्वे आङा सह समासे आशीःशब्दः। दधि आशीः येषामिति बहुव्रीहौ 'बहुव्रीहौ पूर्वपदं प्रकृत्या' इति पूर्वपदप्रकृतिस्वरः दध्याशिर इति।

सर्वाणि पौंस्या-तुंस्यानि बलानि वर्तन्ते। तावृधं वाजमिति पूर्वत्रान्वयः। [167]अक्षितोतिः। ननु क्षि क्षय इत्ययं धातुरकर्मकः। तस्य च कर्माभावादधिकरणे भावे कर्तरि वा क्तप्रत्ययेन भवितव्यम्। तदिह यदि कर्तर्यधिकरणे वा स्यात्तदा तयोरर्थयोर्ण्यत्प्रत्ययस्याविधानात् 'क्षियः०' (पा० ६-४-५९) इत्यनुवृत्तौ 'निष्ठायामण्यदर्थे' (पा० ६-४-६०) इति दीर्घेण भवितव्यम्। तथाच 'क्षियो दीर्घात्' (पा० ८-२-४६) इति निष्ठानत्वेऽक्षीणः इति स्यात् न त्वक्षितेति। अथ 'नपुंसके भावे क्तः' (पा० ३-३-११४) इति भावपरः क्षितशब्दो गृह्यते तदा तस्य ण्यदर्थत्वेन '०अण्यदर्थे' (पा० ६-४-६०) इति निषेधाद्दीर्घनत्वयोरभावात्क्षितमिति सिद्ध्यति। तदा तु 'नञ् तत्पुरुषः' प्रकृतेन नान्वेतीति न विद्यते क्षितमत्रेति बहुव्रीहिणैव भवितव्यम्। तथाच 'नञ्सुभ्याम्' (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वं स्यात्। पुनरूतिशब्देन बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन स एव स्वरस्तिष्ठेदित्यभिमतमाद्युदात्तत्वं न सिध्येत्। इति। सत्यम्। अत एवात्र क्षिधातुरन्तर्भावितण्यर्थो गृह्यते तेन सकर्मकत्वात्कर्मण्येषा निष्ठा। ततश्च० 'अण्यदर्थे' (पा० ६-४-६०) इति निषेधाद्दीर्घो निष्ठानत्वं च न भविष्यति। तथाच नञ् तत्पुरुषे न क्षिताक्षिताक्षयितेत्यर्थः। तत्र चाव्ययपूर्वपदप्रकृतिस्वरत्वेन नञ उदात्तत्वम्। पुनरूतिशब्देन बहुव्रीहौ स एव स्वरः स्थास्यतीति न कोऽपि दोषः। रि क्षि चिरि जिरि दाश दृ जिघांसायामिति क्षिणोतेर्हिंसार्थस्य वा कर्मणि निष्ठा। तथाचाहिंसितोतिरित्यर्थं उक्तक्रमेण स्वरः सिद्ध्यतीति न दोषः। सनेत्। वन षण सम्भक्तौ। औणादिकः। वाजम्। वृषादित्वादाद्युदात्तः।

---

[167] अक्षितोतिः। क्षयार्थकक्षिधातोः अन्तर्भावितण्यर्थात् निष्ठाक्तप्रत्यये क्षित-शब्दो निष्पादनीयः। यदि क्षिधातोरकर्मकात् कर्तरि क्तप्रत्ययः क्रियेत तर्हि क्षीणा इति पदं स्यात्। तथाहि—क्षित इति स्थिते 'निष्ठायामण्यदर्थे' (ण्यदर्थौ भावकर्मणी, ततोऽन्यत्र कर्तरि निष्ठायां क्षियो दीर्घः) इति दीर्घे क्षी त इति जाते 'क्षियो दीर्घात्' (दीर्घात् क्षियो निष्ठातस्य नस्स्यात्) इति नत्वे क्षीन इति दशायां षात्परत्वान्नकारस्य णकारे सति क्षीण इति शब्दः। ततष्टापि क्षीणा इति। नञा समासे अक्षीणा इति पदं भवेत्। अन्तर्भावितण्यर्थात्कर्मणि क्तप्रत्यये कृते दीर्घो न स्यात्, अण्यदर्थत्वाभावात्, दीर्घान्तत्वा-भावान्न तकारस्य नत्वम्। क्षित इत्येव सिध्यति। भावे क्तप्रत्यये सति क्षितशब्दो निष्पादयितुं शक्यते, किन्तु तस्य नपुंसकत्वं क्षितम् इति स्यात्। तदा न विद्यते क्षितमत्रेति बहुव्रीहौ 'नञ्सुभ्याम्' इति सूत्रेणोत्तरपदान्तोदात्तो भवेत् अक्षिता इति। अस्य ऊति पदेन सह अक्षिता ऊतिर्यस्येति बहुव्रीहौ सति पूर्वपदप्रकृतिस्वरः प्राप्नुयात् अक्षि-तोतिः' इति। लक्ष्यन्त्वाद्युदात्तमस्ति। अतोऽन्तर्भावितण्यर्थात्क्तप्रत्ययं विधाय न क्षिता अक्षिता इत्यव्ययीभावसमासेनाक्षितापदं सम्पाद्य, तस्योतिपदेन बहुव्रीहौ पूर्वपदप्रकृतिस्वरः साधनीयः। पूर्वपदस्याव्ययीभावसमासेन पूर्वपदप्रकृतिस्वरः अक्षिता इति। स एव बहु-व्रीहिसमासानन्तरमपि स्थास्यति अक्षितोतिः इति। अथवा-हिंसार्थकक्षिधातोः सकर्म-कत्वात्ततः कर्मणि क्तप्रत्ययेन पूर्वोक्ताद्युदात्तस्वरस्सम्पादनीयः।

इन्द्रः । रन्भो नित्स्वादाद्युदात्तः । सहस्रिणम् । सहस्रमस्यास्ति । 'अत इनिठनौ' (पा० ५-२-११५) । प्रत्ययस्वरः । पिंस्यानि । पिंशः क्वनि नित्त्वादाद्युदात्तता । पुंसः कर्माणि [168]पौंस्यानि । ब्राह्मणादेराकृतिगणत्वात् 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' (पा० ५-१-१२४) इति ष्यञ् । ञित्वादाद्युदात्तः । प्रथमाबहुवचनस्य 'सुपां सुलुक्'० (पा० ७-१-३९) इत्यादिना डादेशः । ननु 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' (पा० ४-१-८७) इत्यनेन 'धान्यानां भवने क्षेत्रे खञ्' (पा० ५-२-१) इत्येतत्पर्यन्तेष्वपत्याद्यर्थेषु नञ्स्नञोर्विधानाद्यथा पुंसोऽपत्यं पौंस्नः पुंस आगतः पौंस्न इत्यादिवत्पुंसो भावः कर्म वेत्यस्मिन्नप्यर्थे ष्यञं बाधित्वा पौंस्नानीत्येव भवितव्यं कथमुच्यते पौंस्यानीति । उच्यते—'आ च त्वात्' (पा० ५-१-१२०) इति सूत्रे त्वादित्यवधिनिर्देशात् 'ब्रह्मणस्त्वः' (पा० ५-१-१३६) इत्येतत्पर्यन्तैरिमनिजादिभिः प्रत्ययैः सह त्वतलोः समावेशः । एवं तत्रैव चशब्दान्नञ्स्नञोरपि ष्यञादिभिः समावेश एव, न बाध्यबाधकभावः ॥९॥

दशमीमृचमाह । हे गिर्वण इन्द्र मर्ता विरोधिनो मनुष्या नोऽस्मदीयानां तनूनां शरीराणां माभिद्रुहन्—अभितो द्रोहं मा कुर्युः । ईशानः समर्थस्त्वं वधं वैरिभिः सम्पाद्यमानं यवय—अस्मत्तः पृथक्कुरु । मनुष्या इत्यादिषु पञ्चविंशतिसङ्ख्याकेषु मनुष्यनामसु मर्ता व्राताः (निघ० २-३) इति पठितम् । मर्ताः । 'असिहसिमृग्रिण्वामिदमिलूपूधूर्विभ्यस्तन्' (उ० ३-८५)

---

[168] पौंस्यानि । पूम् धातोः डुमसुन् प्रत्यये पुंशब्दः । अथवा पातेर्डुमसुन् । तस्मात्कर्मार्थे 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' इति सूत्रेण ब्राह्मणादेराकृतिगणत्वात् ष्यञ् प्रत्ययः । 'तद्धितेष्वचामादेः' इत्यनेनादेरचो वृद्धौ औकारे पौंस्येति प्रातिपदिकम् । प्रथमाबहुवचने जसि तस्य 'जश्शसोश्शिः' इति श्यादेशे, तस्य 'शि सर्वनामस्थानम्' इत्यनेन सर्वनामस्थानसंज्ञा । ततः तस्मिन्परतो नपुंसकस्य प्रातिपदिकस्य नुम् विधायकेन 'नपुंसकस्य झल् च' इति सूत्रेण नुमागमः । 'सर्वनामस्थाने चासम्बुद्धौ' इत्यनेनोपधाया दीर्घः । ततः 'शेश्छन्दसि बहुलम्' इत्यनेन शिप्रत्ययस्य लुकि 'नलोपः प्रातिपदिकान्तस्य' नलोपे पौंस्येति पदम् । अथवा 'सुपां सुलुक्' इति प्रथमाबहुवचनस्य डादेशे पौंस्या इति पदम् । अत्र डुमसुन् प्रत्ययस्य नित्त्वात् ष्यञ् प्रत्ययस्य ञित्वाद्वा 'ञ्नित्यादिर्नित्यम्' इत्यनेनाद्युदात्तस्वरः पौंस्या इति सिध्यति ।

अत्र शङ्कते—नन्विति । अपत्याधिकारे 'धान्यानां भवने क्षेत्रखञ्' इत्यतः प्राक् नञ्स्नञोर्विधानम् 'स्त्रीपुंसाभ्यां नञ्स्नञौ भवनात्' इति सूत्रेण । पुंसोऽपत्यम्, पुंसि भवः, पुंसां समूह इति विग्रहे पुंशब्दात् स्नञि 'स्वादिष्वसर्वनामस्थाने' इत्यनेन पदसंज्ञायां संयोगान्तलोपे आदिवृद्धौ पौंस्न इतिवत् पुंसो भावः कर्म वेत्यस्मिन्नर्थे ष्यञं बाधित्वा पौंस्नानि इत्येव रूपं, कथं पौंस्येति । समाधत्ते-उच्यत इति । यथा 'तस्य भावस्त्वतलौ' इति विहितत्वतलोरनुवृत्त्यैव कार्यसिद्धौ पुनः 'आचत्वात्' इत्युत्तरसूत्रे त्वाद्ग्रहणं 'पृथ्व्यादिभ्य इमनिज्वा' इति विहितेमनिजादिभिरपवादैस्समुच्चयार्थं भवति, तथा सूत्रस्थचकारः नञ्स्नञोरपि ष्यञासङ्ग्रहार्थः, तथा च न बाध्यबाधकभाव इति ।

इति तन्। नित्स्वादाद्युदात्तः। अभि। 'एवादीनामन्तः' (फि० ४-१३)। द्रुहन्। द्रुह जिघांसायाम्। 'लिङर्थे लेट्' (पा० ३-४-७) इति प्रार्थनायां लेट्। तस्य झिः। 'झोऽन्तः' (पा० ७-१-३)। 'इतश्च लोपः परस्मैपदेषु' (पा० ३-४-९७) इतीकारलोपः। शपो लुक्। 'सार्वधातुकमपित्' (पा० १-२-४) इति तिङो ङित्वाल्लघूपधगुणाभावः तनूनाम्। असामर्थ्यान्न पराङ्गवद्भावः। इन्द्र गिर्वणः। गतम्। ईशानः। धातोरनुदात्तेत्वाच्छपो लुकि लसार्वधातुकानुदात्तत्वे धातुस्वर एव शिष्यते। यवय। यौतेर्णिचि 'संज्ञापूर्वको विधिरनित्यः' (पा० प० ८९) इति वृद्धिर्न क्रियते। अथवा यौतीति यवः। पचाद्यच्। यवं करोतीत्यर्थे 'तत्करोति तदाचष्टे (पा० ग० ३-१-२१) इति णिच्। इष्टवद्भावाट्टिलोपः। तस्य स्थानिवद्भावाद् वृद्ध्यभावः। [169]वधम्। 'हनश्च वधः' (पा० ३-३-७६) इति भावेऽप्। तत्सन्नियोगशिष्टः स्थानिवद्भावेनान्तोदात्तो वधादेशः। उदात्तनिवृत्तिस्वरेणाप उदात्तत्वम् ॥१०॥

इति प्रथमस्य प्रथमे दशमो वर्गः।

॥६॥

१.६

सुरूपेत्यादिषु षट्सु सूक्तेषु तृतीयस्य युञ्जन्तीति सूक्तस्य मन्त्रसङ्ख्यार्षिच्छन्दोदैवतानि विनियोगश्चेत्येते पूर्ववदवगन्तव्याः। दशार्चे तस्मिन्सूक्ते आद्यास्तिस्रोऽन्तिमा चेत्येताश्चतस्र ऐन्द्र्यः। आदहेत्येतां चतुर्थीमारभ्य षडृचो मारुत्यः। तासु मध्ये वीळु चिदिन्द्रेणेत्येते द्वे ऋचौ मारुत्यौ सत्यावैन्द्र्यावपि भवतः। तदेतत्सर्वमनुक्रमणिकायामुक्तम्। 'सुरूपकृत्नुं दशैन्द्रमा तु युञ्जन्त्यादहेत्येताः षण्मारुत्यो वीळुचिदिन्द्रेणेत्यैन्द्र्यौ च' (अनु० १-१) इति। एतस्मिन्सूक्ते युञ्जन्तीत्यसौ तृचस्तृतीये[170] रात्रिपर्याये ब्राह्मणाच्छंसिनोऽनुरूपः। तथा चातिरात्रे पर्यायाणामिति खण्डे 'योगे योगे तवस्तरं युञ्जन्ति ब्रध्नमरुषम्' (आ० ६-४) इति सूत्रितम्।

---

[169] वधम्। हनधातोः 'हनश्च वधः' इत्यनेन भावेऽप् स्थानिवत्त्वेनान्तोदात्तश्च वधादेशः। वधशब्दाद्द्वितीयैकवचने अमि 'अमि पूर्वः' इति पूर्वरूपे वधमिति पदम्। अत्र प्रथमं धातुस्वरं बाधित्वा प्रत्ययस्वरः प्राप्तः, तस्य प्रत्ययगतविशेषेण निमित्तेन पित्त्वेनानुदात्ते जाते धातुस्वरोऽबाधितस्तिष्ठति। धातुस्थाने वधादेशे जाते तस्य स्थानिवत्त्वेनान्तोदात्तत्वम् वध इति। तस्याकारस्यापि प्रत्यये लोपेन अप्प्रत्ययाकारस्य 'अनुदात्तस्य च यत्रोदात्तलोपः' (यस्मिन्ननुदात्ते परे उदात्तो लुप्यते तस्योदात्तस्स्यात्) इत्यनेनोदात्तत्वम्। अमः प्रत्ययस्य सुप्त्वेनानुदात्तत्वम्। पूर्वरूपैकादेशस्योदात्तस्थानिकत्वेनोदात्तत्वमिति वधशब्दे आदिरनुदात्तो द्वितीय उदात्तः।

[170] रात्रिपर्याये। टिप्पण्या १५९ अङ्के विस्तारेण रात्रिपर्याया निरूपिताः। तत्र तृतीये पर्याये ब्राह्मणाच्छंसिनश्शस्त्रेऽयं तृचोऽनुरूपतया विनियुज्यते।

तत्र प्रथमामृचमाह। इन्द्रो हि परमैश्वर्ययुक्तः। परमैश्वर्यं चाग्निवाय्वादित्यनक्षत्ररूपेणावस्थानादुपपद्यते। ब्रध्नमादित्यरूपेणावस्थितम्। अरुषम्---हिंसकरहिताग्निरूपेणावस्थितम्। चरन्तम्---वायुरूपेण सर्वतः प्रसरन्तम्। इन्द्रं परि तस्थुषः परितोऽवस्थिता लोकत्रयवर्तिनः प्राणिनो युञ्जन्ति। स्वकीये कर्मणि देवतात्वेन सम्बद्धं कुर्वन्ति। तस्यैवेन्द्रस्य मूर्तिविशेषभूता रोचना नक्षत्राणि दिवि द्युलोके रोचन्ते---प्रकाशन्ते। अस्य मन्त्रस्योक्तार्थपरत्वं ब्राह्मणान्तरे व्याख्यातम्। 'युञ्जन्ति ब्रध्नमित्याह। असौ वा आदित्यो ब्रध्नः। आदित्यमेवास्मै युनक्ति। अरुषमित्याह। अग्निर्वा अरुषः। अग्निमेवास्मै युनक्ति। चरन्तमित्याह। वायुर्वै चरन्। वायुमेवास्मै युनक्ति। परि तस्थुष इत्याह। इमे वै लोकाः परितस्थुषः। इमानेव लोकानस्मै युनक्ति। रोचन्ते रोचना दिवीत्याह। नक्षत्राणि वै रोचना दिवि। नक्षत्राण्येवास्मै रोचयन्ती'ति। पञ्चविंशतिसङ्ख्याकेषु महन्नामसु 'महो ब्रध्नः' (निघ० ३-३) इति पठितम्। आदित्यस्यापि महत्त्वादेव ब्रध्नत्वम्। [171] युञ्जन्ति। अन्तेः प्रत्ययस्वरेणाद्यु-

---

[171] युञ्जन्ति। युज्धातू रौधादिकः। तस्मात्कर्तरि वर्तमाने लटि तस्य स्थाने प्रथमपुरुषबहुवचने परस्मैपदे झिप्रत्ययः। तदवयवस्य झकारस्याऽन्त इत्यादेशः। शबपवादेन श्नम्। श्नमि विकरणे 'सार्वधातुकमपित्' इत्यनेन ङिद्वद्भावेन धातोरिकारस्य गुणनिषेधे 'श्नसोरल्लोप' इति श्नाकारस्य लोपे युञ्ज अन्ति इति दशायां नकारस्यानुस्वारे परसवर्णे च युञ्जन्ति इति रूपम्। अत्र 'धातोः' इति धात्वन्तस्योदात्तत्वं श्नमो झेश्च प्रत्ययत्वेन 'आद्युदात्तश्च' इत्याद्युदात्तत्वं प्राप्तम्। तत्र सतिशिष्टन्यायेन झिप्रत्ययस्वर एव प्रवर्तते 'सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्यः' इति तस्य बलवत्त्वबोधनात्। श्नमो विकरणस्य स्वरस्त्वत्र लुप्यत एव, विकरणत्वादेव तस्य न बलीयस्त्वम्। झेः प्रवर्तमानस्वरश्चान्तादेशोत्तरं प्रवर्तते। अतो युञ्जन्ति इत्यत्र मध्यमो वर्ण उदात्तः प्रथमश्चानुदात्तः, उत्तमश्च स्वरितः युञ्जन्ति इति। निघातस्तु न भवति पादादित्वात्।

ब्रध्नशब्दः प्रातिपदिकान्तोदात्तः। द्वितीयस्योदात्तत्वात्प्रथमोऽनुदात्तः---युञ्जन्ति ब्रध्नम् इति संहितास्वराः। ततः अरुषमित्यस्य रोषयन्तीति रुषाः हिंसकाः, न सन्ति रुषा यस्येति बहुव्रीहौ पूर्वपदप्रकृतिस्वरे प्राप्ते 'नञ्सुभ्याम्' इत्युत्तरपदान्तोदात्तः अरुषम् इति। संहितायां प्रथमवर्णानुदात्तस्योदात्तात्परतस्त्वात् 'उदात्तादनुदात्तस्य स्वरितः' इति स्वरितः, द्वितीयस्यानुदात्त एव, तृतीयस्योदात्तत्वात्। अतः युञ्जन्ति ब्रध्नमरुषम् इति संहितास्वराः। चरन्तमिति शतृप्रत्ययान्तं पदम्। शतुश्च लसार्वधातुकानुदात्तस्वरः, धातुस्वरः शिष्यते चरन्तम् इति। स्वरितात्परस्य तृतीयवर्णस्य प्रचयः प्राप्तः, किन्तु परि इत्यत्र पकाराकारस्योपसर्गाद्युदात्तत्वात् पूर्वस्यानुदात्तस्वरस्संहितायाम्---युञ्जन्ति

दात्तत्वम्। ब्रध्नम्। प्रातिपदिकान्तोदात्तः। अरुषम्। रुष रिष हिंसार्थौ। रोषयन्तीति रुषा हिंसकाः। 'इगुपधज्ञाप्रीकिरः कः' (पा० ३-१-१३५) इति कः। प्रत्ययस्वरेणोदात्तः। न सन्ति रुषा यस्यासावरुषः। 'नञ्सुभ्याम्' (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम्। 'अमि पूर्वः' (पा० ६-१-१०७) इति पूर्वरूपस्य 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इत्युदात्तत्वम्। चरन्तम्। शपः पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण। धातुस्वर एव शिष्यते। तस्थुषः। तिष्ठतेर्लिटः क्वसुरादेशः। 'वस्वेकाजाद्घसाम्' (पा० ७-२-६७) इतीटमन्तरङ्गमपि बाधित्वा सम्प्रसारणं 'सम्प्रसारणाश्रयं च बलीयः' (पा० प० १२७) इति शसि परतो भत्वाद्वसोः सम्प्रसारणम्। परपूर्वत्वम्। 'शासिवसिघसीनां च' (पा० ८-३-६०) इति षत्वम्। वसोः प्रत्ययस्वरेणोदात्तत्वम्। रोचन्ते। तिङो लसार्वधातुकानुदात्तत्वम्। शपः पित्त्वादनुदात्तत्वम्। धातुस्वर एव। रोचना। 'अनुदात्तेतश्च हलादेः' (पा० ३-२-१४९) इति युच्। 'युवोरनाकौ' (पा० ७-१-१) इत्यनादेशः। 'चितः' (पा० ६-१-१६३) इत्यन्तोदात्तत्वम्। 'ऊडिदम्०' (पा० ६-१-१७१) इत्यादिना विभक्तेरुदात्तत्वम्॥१॥

द्वितीयामृचमाह। अस्य ब्रध्नादिशब्दप्रतिपाद्यस्यादित्यादिमूर्तिभिस्तत्र तत्रावस्थितस्येन्द्रस्य रथे हरी एतन्नामानौ द्वावश्वौ सारथयो युञ्जन्ति। इन्द्रसम्बन्धिनोरश्वयोर्हरिनामत्वं 'हरी इन्द्रस्य रोहितोऽग्नेः' (निघ० १-१६) इति पठितत्वात्। कीदृशौ हरी। काम्या—कामयितव्यौ। विपक्षसा—विविधे पक्षसी रथस्य पार्श्वौ ययोरश्वयोस्तौ विपक्षसौ। रथस्य द्वयोः पार्श्वयोर्योजिताविल्यर्थः। शोणा—रक्तवर्णौ। धृष्णू—प्रगल्भौ। नृवाहसा—नृणामिन्द्रतत्सारथिप्रमुखानां पुरुषाणां वोढारौ।[172]अस्य। ब्रध्नमित्युक्तस्य परामर्शाद् 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' (पा० २-४-३२) इत्यश्। शित्त्वात्सर्वादेशोऽनुदात्तः। विभक्ति-

---

ब्रध्नमरुषं चरन्तं परि इति स्वराः। तस्थुष इत्यत्र क्वसुप्रत्ययस्वरे मध्योदात्तं पदम् तस्थुषः इति। संहितायामपि तथैव युञ्जन्ति ब्रध्नमरुषं चरन्तं परि तस्थुषः इति। रोचन्त इत्यत्र शपः पित्त्वात् तिङो लसार्वधातुकत्वादनुदात्तस्वरे धातुस्वर एव। उदात्तादनुदात्तस्य स्वरितः, स्वरितादनुदात्तस्य प्रचयः रोचन्ते इति। रोचनाशब्दो युच्प्रत्ययान्तः, चित्त्वादन्तोदात्तस्वरे रोचना इति भवति। संहितायां रोचन्ते रोचना इति स्वराः सिध्यन्ति। ततो दिविशब्दस्य 'ऊडिदंपदाद्यपुम्रैद्युभ्यः' इति सूत्रेण विभक्तेरुदात्तत्वे पूर्वस्यानुदात्तस्वरः। रोचन्ते रोचना दिवि इति संहितायां स्वराः।

[172] अस्य स्वराः पूर्वं टिप्पण्यां प्रदर्शिताः।

रनुदात्तं चेति सर्वानुदात्तत्वम्। [173]काम्या। कमु कान्तौ। 'कमेर्णिङ्' (पा० ३-१-३०)। 'कामयतेरचो यत्' (पा० ३-१-९७)। तित्स्वरितापवादत्वेन 'यतोऽनावः' (पा० ६-१-२१३) इत्याद्युदात्तत्वम्। 'सुपां सुलुक्०' (पा० ७-१-३९) इति द्विवचनस्य डादेशः। हरतो रथमिति हरी। 'हृपिषि०' (उ० ४-१२०) इत्यादिना इन्। नित्स्वादाद्युदात्तः। विपक्षसा। 'पचिवचिभ्यां सुट् च' (उ० ४-२१९) इति पचेरसुन्। सुडागमः। विभिन्ने पक्षसी पार्श्वौ ययोस्तौ। विशब्दो निपातत्वादुदात्तः। पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। द्विवचनस्य डादेशः। रथे। रमन्तेऽस्मिन्निति रथः। रमु क्रीडायाम्। 'हनिकुषिनीरमिकाशिभ्यः क्थन्' (उ० २-२) इति क्थन्। कित्त्वाद् 'अनुदात्तोपदेश०' (पा० ६-४-३७) इत्यादिना मकारलोपः। नित्स्वरेणाद्युदात्तः। शोणा। शोणृ वर्णगत्योः। गमनकरणत्वात्करणे घञ्। ञित्स्वादाद्युदात्तः। 'सुपां सुलुक्०' (पा० ७-१-३९) इति डादेशः। धृष्णू। ञिधृषा प्रागल्भ्ये। 'त्रसिगृधिधृषिक्षिपेः क्नुः' (पा० ३-२-१४०)। कित्त्वाद्गुणाभावः। प्रत्ययस्वरः। नृवाहसा। नृन् वहत इति वहेः 'वहिहाधाञ्भ्यश्छन्दसि' (उ० ४-२२२) इत्यसुन् '०णित्' (उ० ४-११९) इत्यनुवृत्तेर्वृद्धिः। नित्त्वादाद्युदात्तः। कृदुत्तरपदप्रकृतिस्वरत्वेन स एव शिष्यते ॥२॥

तृतीयामृचमाह। हे मर्या मनुष्या इदमाश्चर्यं पश्यतेत्यध्याहारः। किमाश्चर्यमिति तदुच्यते। आदित्यरूपोऽयमिन्द्र उषद्भिर्दाहकैः रश्मिभिः प्रतिदिनमुषःकालैर्वा सम्भूयाजायथाः। उदपद्यत। अथवा सूर्यस्यं वास्तमये मरणमुपचर्य व्यत्ययेन बहुवचनं कृत्वा सम्बोधनं क्रियते हे मर्य प्रतिदिनं त्वमजायथा इति योज्यम्। किं कुर्वन्? अकेतवे––रात्रौ निद्राभिभूतत्वेन प्रज्ञानरहिताय प्राणिने केतुं कृण्वन् प्रातः प्रज्ञानं कुर्वन्। अपेशसे––रात्रावन्धकारावृतत्वेनानभिव्यक्तत्वाद्रूपरहिताय पदार्थाय प्रातरन्धकारनिवारणेन पेशो रूपमभिव्यज्यमानं कुर्वन्। पेश इति रूपनाम पिंशतेः (नि० ८-११) इति यास्कः। अकेतवेऽपेशस इति चतुर्थ्यौ षष्ठ्यर्थे द्रष्टव्यौ। केतुम्। प्रातिपदिकस्वरः। कृण्वन्। कृवि हिंसाकरणयोश्च। लटः शत्रादेशः। 'इदितो नुम् धातोः' (पा० ७-१-५८) इति नुमागमः। कर्तरि शपि प्राप्ते 'धिन्विकृण्व्योर च' (पा० ३-१-८०) इत्युप्रत्ययः तत्सन्नियोगेन वकारस्य चाकारः। 'अतो लोपः' (पा० ६-४-४८) इत्यकारलोपः। तस्य स्थानिवद्भावात्पूर्वस्य लघूपधगुणो न भवति। अकारस्य प्रत्ययस्वरेणोदात्तत्वम्। अकेतवे। बहुव्रीहौ 'नञ्सुभ्याम्' (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम्। पेशः। 'नब्विषयस्यानिसन्तस्य' (फि० २-३) इत्याद्युदात्तः। मर्याः। छन्दसि 'निष्टर्क्य०'

---

[173] काम्या। कमु कान्तौ इत्यस्माण्णिङि तदन्तादचो यत् इति यत्प्रत्यये णेर्लोपे काम्येति शब्दः। तस्माद्द्वितीयाद्विवचनस्य 'सुपां सुलुक्' इति डादेशे डित्वाट्टिलोपे काम्या इति रूपम्। अत्र धातुस्वरं बाधित्वा यत्प्रत्ययस्य तित्त्वेन 'तित्स्वरितम्' इति प्रत्ययस्य स्वरितस्वरः प्राप्तः। तस्यापि तित्स्वरितस्य 'यतोऽनावः' इत्यनेन निवर्तनात् सतिशिष्टेन तेन 'यतोऽनवः' इति स्वरेण यदन्तद्व्यच्काद्युदात्तरूपेणावस्थीयते। अतः काम्याशब्द आद्युदात्तः। 'अनुदात्तं पदमेकवर्जम्' इति द्वितीयस्यानुदात्तत्वे तस्य 'उदात्तादनुदात्तः स्वरितः' इति स्वरितत्वं काम्या इति।

(पा० ३-१-१२३) इत्यादौ क्विपत्तेनिपातः। आमन्त्रितनिघातः। असामर्थ्यात्पूर्वस्य न पराङ्गवद्भावः। अपेशसे। 'नञ्सुभ्याम्' (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम्। सम्। निपात आद्युदात्तः। उषद्भिः। उष प्लुष दाहे। ज्वलद्भी रश्मिभिः। लटः शत्रादेशे शपि प्राप्ते व्यत्ययेन शः। 'सार्वधातुकमपित्' (पा० १-२-४) इति तस्य ङित्त्वाल्लघूपधगुणो न भवति। शस्य प्रत्ययस्वरेणोदात्तत्वम्। उपरि शतुरनुपदेशाल्लसार्वधातुकानुदात्तत्वम्। 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५)। अजायथाः। अजायतेत्यर्थे पुरुषव्यत्यये निघातः ॥३॥

चतुर्थीमृचमाह। अत्रास्ति विशेषविनियोगः। चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिशस्त्र 'आदह स्वधा'मन्विति द्वे ऋचौ, 'इन्द्रेण सं हि दृक्षस' इत्येका।[174]अयं तृचः षळहस्तोत्रियसंज्ञकः।

---

[174] अयं तृचः। गवामयनस्य द्वितीय दिन चतुर्विंशम्। तत्रोक्थ्यसंस्थाकः क्रतुरनुष्ठेय इति पूर्वमुक्तम्। तत्र यावन्ति स्तोत्राणि तानि चतुर्विंशस्तोमकानि भवन्तीत्यपि पूर्वं निरूपितम्। द्वितीयं दिनमपीदं गवामयनस्य प्रायणीयं प्रारम्भदिनं भवतीत्यपि प्रतिपादितम्। अत्रानुष्ठीयमानं कर्म उक्थ्यसंस्थाकज्योतिष्टोमस्य विकृतिभूतम्। ज्योतिष्टोमवद्द्वादश स्तोत्राणि द्वादश शस्त्राणि च समाप्यानन्तरं त्रीण्युक्थ्यस्तोत्राणि कृत्वा क्रतुरयं समापनीयः। तत्रेदं वैलक्षण्यं यत्सर्वेषु स्तोत्रेषु चतुर्विंशः स्तोमो भवतीति। तत्र प्रातस्सवने बहिष्पवमानस्तोत्रानन्तरमुद्गातारः चत्वार्याज्यस्तोत्राणि कुर्वन्ति। तेषु स्तोत्रेषु क्रमेण— अग्निः मित्रावरुणौ इन्द्रः इन्द्राग्नी इति देवता भवन्ति—'चत्वारि सन्ति षड्देवत्यानि' (ताण्ड्य० ब्रा० ६.२.२) इति श्रुतेः। इमानि स्तोत्राणि होतुराज्यं मैत्रावरुणाज्यं ब्राह्मणाच्छंस्याज्यम् अच्छावाकाज्यमिति शब्दैर्व्यवह्रियन्ते। तत्राग्नेयं होतुराज्यम्, मैत्रावरुणं मैत्रावरुणाज्यम्, ऐन्द्रं ब्राह्मणाच्छंस्याज्यम्, ऐन्द्राग्नमच्छावाकाज्यम् इति विभागः। एतेषां गानाय क्रमेण 'अग्न आयाहि वीतये' 'आनो मित्रावरुण' 'आयाहि सुषमा हि ते' 'इन्द्राग्नी आगतं सुतम्' इति चत्वारः तृचा विनियुक्ताः। एवमेव शस्त्रकर्तारः चत्वारि शस्त्राणि पठन्ति। होतुः प्रातस्सवने 'होताजनिष्ट चेतनः' इत्याज्यम्। मैत्रावरुणस्य षट् स्तोत्रियास्तृचा विहिता आज्ये—'आ नो मित्रावरुणा' 'मित्रं वयं हवामहे' 'मित्रं हुवे पूतदक्षम' 'अयं वां मित्रावरुणा' 'पुरूरुणा चिद्ध्यस्ति' 'प्रति वां सूर उदित' इति। इमे तृचाः षळहस्तोत्रियशब्देन व्यवह्रियन्ते। एषु यस्मिंस्तृचे उद्गातारो गानं कुर्युः स तृचः होत्रकाणां स्तोत्रियो भवति। एवं ब्राह्मणाच्छंसिनोऽपि षट्स्तोत्रियास्तृचाः—'आयाहि सुषमा हि ते' 'इन्द्रमिद्गाथिनो बृहत्' 'इन्द्रेण सं हि दृक्षस' इत्येका, 'आदह स्वधामनु' इति द्वे, मिलित्वा तृचः, 'इन्द्रो दधीचो अस्थभिः' 'उत्तिष्ठन्नोजसा सह' 'भिन्धि विश्वा अपद्विषः' इति। एवमच्छावाकस्य इन्द्राग्नी आगतं सुतम्' 'इन्द्रे अग्ना नमो बृहत्' ता हुवे ययोरिदम्' 'इमं वामस्य मन्मन' 'इन्द्राग्नी युवामिमे' 'यज्ञस्य हि स्थ ऋत्विजा' इति षट् स्तोत्रियाः। अत्र होत्रकाणां ये तृचा विहिताः ते सर्वेऽपि षळहस्तोत्रियसंज्ञका भवन्ति। एवञ्च प्रकृतसूक्तस्य चतुर्थपञ्चममन्त्रयोः 'आदह स्वधामनु' 'वीळुप्रुचिदारु-

तथाच सूत्रितं चतुर्विंशे होताजनिष्टेति खण्ड 'इन्द्रेण सं हि दृक्षस आवह स्वधामन्वित्येका द्वे च' (आ० श्रौ० ७-२) इति। यद्यप्येतत्सूक्तमैन्द्रं तथाप्यादहेत्यादिषु षट्सु मरुतो वर्ण्यन्ते। 'प्रायशैन्द्रे मरुतः' (अनु० परि० १-२) इत्यनुक्रमणिकायामुक्तत्वात्। आदित्ययमानन्तर्यार्थे निपातः। अहेत्यवधारणार्थः। आदह् वर्धतोरनन्तरमेव। स्वधामनु—इतः परं जनिष्यमाण-मन्नमुदकं वाऽनुलक्ष्य मरुतो देवा गर्भत्वमेरिरे। मेघमध्ये जलस्य गर्भाकारं प्रेरितवन्तः। जलस्य कर्तारं पर्जन्यं प्रेरितवन्तः। प्रतिसंवत्सरमेवं कुर्वन्तीति दर्शयितुं पुनःशब्दः प्रयुक्तः। कीदृशो मरुतः? यज्ञियं यज्ञार्हं नाम दधानाः—धारयन्तः। सप्तसु गणेषु मरुतामीदृङ् चान्यादृङ् चेत्यादीनि यज्ञयोग्यानि नामान्यन्यत्राम्नातानि। अन्ध इत्यादिष्वष्टाविंशतिसङ्ख्याकेष्वन्नना-मसु पंसः स्वधा (निघ० २-७) इति पठितम्। अर्णं इत्यादिष्वेकशतसङ्ख्याकेषूदकनामसु तेजः स्वधा अक्षरम् (निघ० १-१२) इति पठितम्। आत्। अह्। निपातावाद्युदात्तौ। स्वधा। स्वं लोकं दधातीति पुष्णातीति स्वधा। 'आतोऽनुपसर्गे कः' (पा० ३-२-३)। कृदुत्तरपद-प्रकृतिस्वरत्वम्। अनुपुनःशब्दौ निपातावाद्युदात्तौ। गर्भस्य भावो गर्भत्वम्। प्रत्ययस्वरः। [175]एरिरे। अन्तर्भावितण्यर्थादीर गतावित्यस्मादनुदात्तेतः परस्य लिटो झस्येरेच्। चित्त्वा-दन्तोदात्तः। 'सह सुपा' (पा० २-१-४) इत्यत्र सुपेति योगविभागादाङा सह तिङः समासेऽपि 'समासस्य' (पा० ६-१-२२३) इत्यन्तोदात्तत्वम्। 'इजादेश्च गुरुमतोऽनृच्छः' (पा० ३-१-३६) इत्याम् न भवति मन्त्रत्वात्। अहशब्दयोगान्निघाताभावः। 'तुपश्यपश्यताहैः पूजायाम्' (पा० ८-१-३९) इति निषेधात्। दधानाः। शानचश्चित्त्वादन्तोदात्तत्वे प्राप्ते 'अभ्यस्तानामादिः' (पा० ६-१-१८९) इत्याद्युदात्तत्वम्। यज्ञमर्हतीति यज्ञियम्। 'यज्ञर्त्विग्भ्यां घखञौ' (पा० ५-१-७१) इति घप्रत्ययः। 'आयनेयीनीयियः फढखछघां प्रत्ययादीनाम्' (पा० ७-१-२) इतीयादेशः। प्रत्ययस्वरेणेकार उदात्तः ॥४॥

पञ्चमीमृचमाह। अस्ति किञ्चिदुपाख्यानम्। पणिभिर्देवलोकाद् गावोऽपहृता अन्धकारे प्रक्षिप्ताः। ताश्चेन्द्रो मरुद्भिः सहाजयदिति। एतच्चानुक्रमणिकायां सूत्रितम्—'पणिभिरसुरैर्निगूळ्हा गा अन्वेष्टुं सरमां देवशुनीमिन्द्रेण प्रहितामसुरभिः पणयो मित्रीयन्तः प्रोचुः' (अनु० ८-५-१) इति। मन्त्रान्तरे च दृष्टान्ततया सूचितम्—[176]'निरुद्धा आपः पणिनेव गावः'

---

जन्तुभिः' इत्यनयोः चतुर्विंशे प्रातस्सवने ब्राह्मणाच्छंसिकर्तृकाज्यशस्त्रे 'इन्द्रेण संहि दृक्षस' इति मन्त्रेण सह स्तोत्रियत्वेन विनियोगः। अत्र तृचः पळहस्तोत्रियसंज्ञक इति भाष्यसन्दर्भस्यार्थः।

[175] एरिरे। अन्तर्भावितण्यर्थादीरधातोः लिटो झस्य 'लिटस्तझयोरेशिरेच्' इति इरेच् आदेशः। चकारस्येतो लोपे ई र् इरे—ईरिरे। आङा सह समासे एरिरे इति पदम्। अत्र चित्त्वादन्तोदात्तः समासस्वरो वाऽन्तोदात्तः एरिरे इति। 'तिङ्ङतिङः' इति निघातो न भवति, 'तु पश्य पश्यता हैः पूजायाम्' इत्यहशब्दयोगेन तस्य निषेधात्।

[176] 'दासपत्नीरहिगोपा अतिष्ठन् निरुद्धा आपः पणिनेव गावः। अपां बिल-मपिहितं यदासीत् वृत्रं जघन्वाँ अप तद् ववार'। इति समग्रो मन्त्रः।

(ऋ० स० १-३२-११) इति। तदेतदुपाख्यानमभिप्रेत्योच्यते—हे इन्द्र वीळु चित्—दृढमपि दुर्गमस्थानमारुजत्नुभिर्भञ्जद्भिर्वह्निभिर्वोढृभिरन्यत्र नेतुं समर्थैर्मरुद्भिः सहितस्त्वं गुहाचित् गुहायामपि स्थापिता उस्रिया गा अन्वविन्दः—अन्विष्य लब्धवानसि। ओजः पाज इत्यादिष्वष्टाविंशतिसङ्ख्याकेषु बलनामसु 'दक्षो वीळु च्यौत्नम्' (निघ० २-९) इति पठितम्। नवसङ्ख्याकेषु गोनामस्वघ्न्योस्रोस्रिया (निघ० १-१) इति पठितम्। वीळु। प्रातिपदिकस्वरः। चित्। चादिरनुदात्तः। आरुजत्नुभिः। रुजो भङ्ग इति धातोरौणादिकः कत्नुच्प्रत्ययः। कित्त्वाद् गुणाभावः। चित्त्वादन्तोदात्तत्वम्। समासे कृदुत्तरपदप्रकृतिस्वरत्वम्। गुहा। सप्तम्या डादेशः। 'ग्रामादीनां च' (फि० २-१५) इत्याद्युदात्तः। वह्निभिः। 'वहिश्रिश्रुयुद्रुग्लाहात्वरिभ्यो नित्' (उ० ४-५२) इति वहेर्निप्रत्ययः। नित्त्वादाद्युदात्तः। अविन्दः। 'शे मुचादीनाम्' (पा० ७-१-५९) इति नुमागमः। 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' (पा० ६-४-७१)। वसन्तीत्युस्रियाः। वसेः कर्तरि रियक्प्रत्ययः। षत्वाभावश्च बाहुलकादूहनीयः। उक्तं हि—'यत्र पदार्थविशेषसमुत्थं प्रत्ययतः प्रकृतेश्च तदूह्यमि'ति। इकारः प्रत्ययस्वरेणोदात्तः॥५॥

इति प्रथमस्य प्रथमे एकादशो वर्गः।

युञ्जन्तीति सूक्ते षष्ठीमृचमाह। देवयन्तो मरुत्संज्ञकान्देवानिच्छन्तो गिरः स्तोतार ऋत्विजो महां प्रौढं मरुद्गणमच्छ प्राप्तुमनूषत—स्तुतवन्तः। कीदृशं मरुद्गणम्? विदद्वसुम्—वेदयद्भिः स्वमहिमप्रख्यापकैर्वसुभिर्धनैर्युक्तम्। श्रुतम्—विख्यातम्। मरुद्गणस्य दृष्टान्तः—यथा मतिम्। मातारमिन्द्रं यथा स्तुवन्ति तथेत्यर्थः। [177]देवयन्तः—देवानात्मन इच्छन्तः। 'सुप आत्मनः क्यच्' (पा० ३-१-८)। 'क्यचि च' (पा० ७-४-३३) इतीत्वम्, 'अकृत्सार्वधातुकयोर्दीर्घः' (पा० ७-४-२५) इति दीर्घत्वं च न भवतः। 'न छन्दस्यपुत्रस्य' (पा० ७-४-२५) इत्यनेन क्यचि यत्प्राप्तमीत्वं दीर्घत्वं वा तस्य सर्वस्य प्रतिषेधात्। यद्यपीत्वमेव प्रकृतं तथापि व्यवहितस्यापि दीर्घत्वस्य स प्रतिषेध इति विज्ञायते। अश्वायन्त इत्यादौ 'अश्वाघस्यात्' (पा० ७-४-३७) इत्यात्वविधानादिति ह्युक्तम्। क्यजन्ताच्छतृप्रत्ययः। क्यचश्चित्त्वा'च्चितः' (पा० ६-१-१६३) इत्यन्तोदात्तत्वम्। शपः पित्त्वेन शतुश्च लसार्वधातुकस्वरेणानुदात्तत्वे 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इत्युदात्तः। यथा। 'प्रकारवचने थाल्' (पा० ५-३-२३)। 'लिति' (पा०

[177] देवयन्तः। देवानात्मन इच्छन्तीत्यर्थे क्यच् प्रत्ययः। 'सनाद्यन्ता' इति धातुसंज्ञायां कर्तरि शप्। लटः शतृप्रत्ययः। तस्य नुमि प्रथमाबहुवचने देवयन्तः इति रूपम्। अत्र 'क्यचि च' इति सूत्रेण क्यचि परे पूर्वस्य ईत्वम्, 'अकृत्सार्वधातुकयोर्दीर्घः' इति सूत्रेण दीर्घत्वञ्च प्राप्तम्, तत् 'न छन्दस्यपुत्रस्य' (पुत्रभिन्नस्यादन्तस्य क्यचि ईत्वदीर्घौ न भवतः) इति निषिध्यते। 'चितः' इति सूत्रेणान्तोदात्तस्वरः। क्यचः परस्य शपः पित्वादनुदात्तत्वम्, शतुश्च, लसार्वधातुकानुदात्तत्वमिति देवयन्तः इति स्वरसिद्धिः।

६-१-१९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। [178]मतिम्। 'मन्त्रे वृषेषपचमन०' (पा० ३-३-९६) इत्यादिना क्तिन्नुदात्तः। मतिशब्दो ज्ञानपरोऽप्युपचाराज्ज्ञातरीन्द्रे वर्तते। अथवा पदान्तरेण विशेष्यानुपादानादिन्द्रस्यैषा सञ्ज्ञा। ततश्च 'क्तिच्क्तौ च सञ्ज्ञायाम्' (पा० ३-३-१७४) इति मन्यतेः कर्तरि क्तिच्। तस्योपदेशेऽनुदात्तत्वादिट्प्रतिषेधः। चित्त्वादन्तोदात्तत्वम्। अच्छ। अभ्याहृतगच्छत्यर्थयोगाद् 'अच्छ गत्यर्थवदेषु' (पा० १-४-६९) इति गतिसञ्ज्ञया निपातसञ्ज्ञाया अपि समावेशान् 'निपाता आद्युदात्ताः' (फि० ४-१२) इत्याद्युदात्तत्वम्। [179]विदद्वसुम्। विद ज्ञाने इत्यस्मादन्तर्भावितण्यर्थाच्छतृप्रत्यये विदन्त्यौदार्यातिशयवत्तया ज्ञापयन्ति वसूनि धनानि यं स विदद्वसुः। विदेः शतृप्रत्यये 'अदिप्रभृतिभ्यः शपः' (पा० २-४-७२) इति शपो लुकि प्रत्ययस्वरेण शतुरुदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वेन तदेव शिष्यते। गृणन्ति स्तुवन्तीति गिरः। गृणातेः। क्विपि 'ॠत इद्धातोः' (पा० ७-१-१००) इतीत्वं रपरत्वम्। महाम्—महान्तम्। नकारतकारयोर्लोपश्छान्दसः। प्रातिपदिकस्वरेणोदात्तत्वम्। [180]अनूषत। णू स्तुतौ। व्यत्ययेनात्मनेपदम्। लुङि झस्यादादेशः। सिचि कुटादित्वेन ङित्त्वाद् गुणाभावः। इडभाव उकारदीर्घत्वं च छान्दसम्। निघातः। श्रुतम्। प्रत्ययस्वरः ॥६॥

---

[178] मतिम्। मन् अवबोधने धातोः क्तिन्प्रत्ययान्तो मतिशब्दः। नित्त्वात् 'ञ्नित्यादिर्नित्यम्' इत्याद्युदात्तस्वरः प्राप्तः। सः 'मन्त्रे वृषेषपचमनभूवीराः' इति सूत्रेणापोदितः। क्तिन्प्रत्ययसम्बन्धिन इकारस्यैव उदात्तत्वम्। शेषनिघातेन मतिम् इति जायते। अस्मिन् पक्षे मतिशब्दो ज्ञानपरः। यदि चायमुपचाराज्ज्ञातृपरस्तर्हि तंज्ञया प्रकृतेन्द्रबोधकत्वमङ्गीकृत्य 'क्तिच्क्तौ च संज्ञायाम्' इति सूत्रेण क्तिच्प्रत्ययान्तो भवति। ततश्च 'चितः' इत्यनेन सूत्रेणास्य तदेवान्तोदात्तत्वं सिध्यति।

[179] विदद्वसुम्। ज्ञानार्थकविद धातोरन्तर्भावितण्यर्थात् शतृप्रत्यये शपि तल्लोपे विदच्छब्दः। तस्य प्रथमाबहुवचने क्लीबलिङ्गे 'जश्शसोः शिः', सर्वनामस्थानत्वान्नुम् विदन्ति इति पदम्। अन्तर्भावितण्यर्थत्वात् वेदयन्तीति तदर्थः। ततश्च विदन्ति वेदयन्ति वसूनि यं स इति बहुव्रीहिसमासे कृते विदद्वसुरिति शब्दः। तस्य अमि पूर्वरूपे विदद्वसुम् इति रूपम्। अत्र शतृप्रत्ययस्य 'आद्युदात्तश्च' इति प्रत्ययस्वरे सति द्वितीयो वर्ण उदात्तः प्रथमश्चानुदात्तः। बहुव्रीहिसमासे पूर्वपदप्रकृतिस्वरः। तृतीयस्योदात्तात्परतस्त्वात्स्वरितः, तदुक्तं प्रत्ययश्च-विदद्वसुम् इति।

[180] णू धातोः व्यत्ययेनात्मनेपदे लुङि प्रथमपुरुषबहुवचने झस्य आत्मनेपदावयवस्य झकारस्य अत् इत्यादेशः 'आत्मनेपदेष्वनतः' इति सूत्रेण। ततः च्लिः, तस्य सिच्, तस्य 'आदेशप्रत्यययोः' इति षत्वम् अडागमश्च। इडभावः उकारस्य दीर्घत्वञ्च छान्दसम्—अनूषत इति रूपम्। तस्य निघातस्वरः अनूषत इति।

सप्तमीमृचमाह। हे मरुद्गण। त्वमिन्द्रेण सञ्जग्मानः सङ्गच्छमानः सन्दृक्षसे हि—सम्यग्दृश्येथाः खलु। अवश्यमस्माभिर्द्रष्टव्य इत्यर्थः। कीदृशेनेन्द्रेण? अविभ्युषा—भीतिरहितेन। कीदृशाविन्द्रमरुद्गणौ? मन्दू—नित्यप्रमुदितौ। समानवर्चसा—तुल्यदीप्ती। पुरा कदाचिद्वृत्रवधदशायामिन्द्रस्य सखायः सर्वे देवा वृत्रश्वासेनापसारिताः। तदानीमिन्द्रस्य वृत्रसम्बन्धिसकलसेनाजयार्थं मरुद्भिः सङ्गमोऽभूत्। [181]सोऽयमर्थो 'वृत्रस्य त्वाश्वसथाद्' (ऋ० स० ८-८५-७) इति मन्त्रे सङ्गृहीतः। 'इन्द्रो वै वृत्रं हनिष्यन्' (ऐ० ब्रा० १२-९) इति ब्राह्मणं प्रपञ्चितश्च। इन्द्रशब्दः परमैश्वर्यवन्तं मरुद्गणं वाऽभिधत्ते। तदानीमिन्द्रस्य सम्बोधनं बहिरेवाध्याहर्तव्यम्। तथाचेयमृग्यास्केन व्याख्याता—'इन्द्रेण हि सन्दृश्यसे सङ्गच्छमानोऽबिभ्युषा गणेन मन्दू मदिष्णू युवां स्थोऽपि वा मन्दुना तेनेति स्यात्समानवर्चसेत्येतेन व्याख्यातम्' (नि० ४-१२) इति। [182]सन्दृक्षसे—संदृश्येथाः। 'दृशेश्चेति वक्तव्यम्' (पा० वा० १-३-२९) इत्यात्मनेपदम्। दृशेः 'लिङर्थे लेट्' (पा० ३-४-७) इति प्रार्थनायां लेट्। 'थासः से' (पा० ३-४-८०)। 'लेटोऽडाटौ' (पा० ३-४-९४) इत्यडागमः। 'सिब्बहुलं लेटि' (पा० ३-१-३४) इति सिप्। 'संज्ञापूर्वको विधिरनित्यः' (पा० प० ८०) इति गुणाभावः। व्रश्चादिना षत्वम्। 'षढोः कः सि' (पा० ८-२-४१) इति कत्वम्। 'आदेशप्रत्यययोः' (पा० ८-३-५९) इति सिपः षत्वम्। बहुलग्रहणात्सिपः परस्ताच्छबपि भवति। सिपा व्यवधानात्पश्यादेशो न भवति। शपः पित्त्वादनुदात्तत्वम्। उत्तरस्य लसार्वधातुकानुदात्तत्वम्। धातुस्वर एव शिष्यते। हिशब्दप्रयोगात् 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघातो न भवति। 'हि च' (पा० ८-१-३४) इति प्रतिषेधात्। [183]सञ्जग्मानः। गमेः संपूर्वात् 'छन्दसि लुङ्लङ्लिटः'

[181] 'वृत्रस्य त्वा श्वसथादीषमाणा विश्वे देवा अजहुर्ये सखायः।
मरुद्भिरिन्द्र सख्यं ते अस्त्वथेमा विश्वाः पृतना जयासि'॥ इति समग्रो मन्त्रः।

[182] सन्दृक्षसे। 'समो गम्यृच्छिभ्याम्' इति सूत्रस्थेन 'अतिश्रुदृशिभ्यश्चेति वक्तव्यम्' इति वार्तिकेन सम्पूर्वकदृशधातोरात्मनेपदम्। 'णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्' इति यक्चणोः प्रतिषेधकेन वार्तिकेन यगभावः। लेटि बाहुलकात्सिप् 'लेटोऽडाटौ' इत्यडागमः। दृश् स् अ इति स्थिते, मध्यमपुरुषैकवचने थास्, तस्य 'थासः से' इति सेभावः-दृश् स् अ से इति जाते, धात्ववयवऋकारस्य 'संज्ञापूर्वको विधिरनित्यः' इति गुणाभावः, 'व्रश्च भ्रस्ज सृज मृज यज राज भ्राज छशां षः' इति, धात्ववयवशकारस्य षत्वम्, तस्य च 'षढोः कः सि' इति कत्वे दृक् स् असेइति स्थिते 'आदेशप्रत्यययोः' इति समित्यत्र मकारस्यानुस्वारः' नश्चापदान्तस्य झलि' इति सूत्रेण 'अनुस्वारस्य ययि परसवर्णः' इति परसवर्णे च सिपस्सकारस्य षत्वे दृक्षसे, उपसर्गयोगेन सन्दृक्षसे इति पदम्। अत्र 'हि च' इति निघात प्रतिषेधात् शपःपित्त्वात् तदुत्तरस्य लसार्वधातुकत्वादनुदात्तत्वे धातुस्वर उदात्तः सन्दृक्षसे इति।

[183] सञ्जग्मानः। सम्पूर्वगमेः 'छन्दसि लुङ्लङ्लिटः' इति वर्तमाने लिट्। तस्य 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदविधानात् लिटः कानजादेशः। सम् गम् आन इति

(पा० ३-४-६) इति वर्तमाने लिट्। 'समो गम्यृच्छिभ्याम्' (पा० १-३-२९) इत्यात्मनेपद-विधानाल्लिटः कानजादेशः। द्विर्भावः। 'हलादिः शेषः,' अभ्यासस्य चुत्वम्। 'गमहन०' (पा० ६-४-९८) इत्युपधालोपः। कानचश्चित्त्वादन्तोदात्तत्वम्। गतिसमासे कृदुत्तर-पदप्रकृतिस्वरत्वम्। [184]अविभ्युषा। ञिभी भये। पूर्ववल्लिट्। 'शेषात्कर्तरि परस्मैपदम्' (पा० १-३-७८) इति परस्मैपदम्। 'क्वसुश्च' (पा० ३-२-१०७) इति लिटः क्वसुरादेशः। तस्य कित्त्वाद्गुणाभावः। द्विर्भावः। अभ्यासस्य ह्रस्वजश्त्वे। क्रादिनियमात्प्राप्त इट् 'वस्वे-काजाद्घसाम्' (पा० ७-२-६७) इति नियमान्निवर्तते। नञ्समासे तृतीयैकवचने भत्वात् 'वसोः सम्प्रसारणम्' (पा० ६-४-१३१) इति वकारोकारः। 'संप्रसारणाच्च' (पा० ६-१-१०८) इति

---

स्थिते 'लिटि धातोरनभ्यासस्य' इत्यभ्यासः, 'हलादिश्शेषः' इति लोपे सम् ग गम् आन इति जाते 'कुहोश्चुः' इति चुत्वे सम् ज गम् आन इति दशायां 'गमहनजनखनघसां क्ङित्यनङि' इत्युपधाया लोपे सञ्जग्मानशब्दः। ततस्सुप्रत्यये तस्य रुत्वविसर्गौ। तथाच सञ्जग्मानः इति रूपम्। अत्र चित्त्वादन्तोदात्तत्वम्, अथवा समित्यनेन गतिसमासे 'गतिकारकोपपदात्कृत्' इत्युत्तरपदान्तोदात्तत्वम् सञ्जग्मानः इति।

[184] अविभ्युषा। ञिभी भये धातुरनिडीदन्तः। तस्य परस्मैपदे लिट्। तस्य 'क्वसुश्च' इति क्वसुः। तस्य कित्त्वात् 'क्ङिति च' इति निषेधाद् गुणाभावः। भी वस् इत्यत्र 'लिटि धातोरनभ्यासस्य' इति द्विर्भावे, 'ह्रस्वः' 'अभ्यासे चर्च' इति सूत्राभ्याम-भ्यासस्य ह्रस्वजश्त्वे भवतः। 'नेड्वशि कृति' इतीटो निषेधं बाधित्वा क्रादिनियमात् सर्वत्र प्राप्तस्येटः 'वस्वेकाजाद्घसाम्' इति सूत्रेण (कृतद्विर्वचनानामेकाचामादन्तानां घसेश्च वसोरिट् नान्येषाम्) नियमान्निवृत्तौ बिभीवस् शब्दः। ततः प्रथमैकवचने सुप्रत्यये सति 'उगिदचां सर्वनामस्थानेऽधातोः' इति सूत्रेण नुमागमे, मकारस्येत्संज्ञायां लोपे, उकारस्यो-च्चारणार्थत्वे च सति बिभीवन्स् सु इति स्थिते 'सर्वनामस्थाने चासम्बुद्धौ' इति नान्त-त्वादुपधाया दीर्घे बिभीवान्स् सु इति दशायां हल्ङ्यादिना सुलोपे संयोगान्तलोपे च बिभीवान् इति रूपम्। तस्य तृतीयैकवचने टाप्रत्यये कृते टकारस्येतो लोपे बिभीवस् आ इति स्थिते 'वसोस्सम्प्रसारणम्' इति वकारस्योत्वे बिभी उअस् आ इति जाते 'सम्प्र-सारणाच्च' इति पूर्वरूपैकादेशे सकारस्य 'शासिवसी'त्यादिना षत्वे बिभी उष् आ इति दशायाम् इयङादेशं बाधित्वा 'एरनेकाचोऽसंयोगपूर्वस्य' इति यणादेशे बिभ्युषा इति रूपम्। नञा समासे सति—अबिभ्युषा इति सिध्यति। अत्र 'तत्पुरुषे तुल्यार्थतृतीयासप्तम्युप-मानाव्ययद्वितीयाकृत्याः' इति सूत्रेणाव्ययपूर्वपदप्रकृतिस्वरः—अबिभ्युषा इति। 'सञ्जग्मानो अबिभ्युषा' इत्यत्र 'एङः पदान्तादति' इति पूर्वरूपैकादेशे प्राप्ते 'प्रकृत्यान्तःपादमव्यपरे' (ऋक्पादमध्यस्थ एङ् प्रकृत्या स्यादति परे न तु वकारयकारपरे अति) इति सूत्रेण प्रकृति-भावः। 'इन्द्रेण सं हि दृक्षसे सञ्जग्मानो अबिभ्युषा' इति स्वरा उन्नेयाः।

पूर्वरूपत्वम्। 'शासिवसिघसीनाञ्च'(८-३-६०) इति षत्वम्। इयङादेशं बाधित्वा 'एरनेकाचोऽसंयोगपूर्वस्य' (पा० ६-४-८२) इति यणादेशः। अव्ययपूर्वपदप्रकृतिस्वरत्वम्। पूर्वेण सह संहितायामोकारस्येङः 'पदान्तादति'(पा० ६-१-१०९) इति परपूर्वरूपत्वे प्राप्ते 'प्रकृत्यान्तः पादमव्यपरे' (पा० ६-१-११५) इति प्रकृतिभावः। मन्दू। मदि स्तुतिमोदमदस्वप्नकान्तिगतिषु। 'इदितो नुम्धातोः' (पा० ७-१-५८) इति नुमागमः। 'कुः'(उ०१-२२) इत्यनुवृत्तौ 'खरुशङ्कुपीयुनीङ्गुलिगु'(उ० १-३७)इत्यत्राविभक्तिकनिर्देशाद्धन्तेर्हिगुरितिवद्धात्वन्तरादपि कुरित्युक्तम्। प्रत्ययस्वरेणान्तोदात्तः। द्विवचनमौ। 'प्रथमयोः पूर्वसवर्णः' (पा० ६-१-१०२)। तृतीयैकवचने चेत 'सुपां सुलुक्०'(पा० ७-१-३९) इत्यादिना पूर्वसवर्णदीर्घत्वम्। समानवर्चसा। समानं वर्चो ययोरिति वा यस्येति वा बहुव्रीहिः। द्विवचने 'सुपां सुलुक्'(पा० ७-१-३९) इत्यादिनाकारादेशः। समानपदस्य प्रातिपदिकान्तोदात्तत्वम्। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण तदेव अवशिष्यते ॥७॥

अष्टमीमृचमाह। मखः प्रवर्तमानोऽयं यज्ञोऽनवद्यैर्दोषरहितैरभिद्युभिर्द्युलोकमभिगतैः काम्यैः फलप्रदत्वेन कामयितव्यैर्गणैर्मरुत्सम्हैः सहितमिन्द्रस्येन्द्रं सहस्वद् बलोपेतं यथा भवति तथार्चति—पूजयति। अयं यज्ञो मरुत इन्द्रं चातिशयेन प्रीणयतीत्यर्थः। यज्ञ इत्यादिषु पञ्चदशसु यज्ञनामसु 'मखो विष्णुः' (निघ० ३-१७) इति पठितम्। चतुश्चत्वारिंशत्सङ्ख्याकेष्वर्चतिकर्मसु 'अर्चति गायती'ति(निघ० ३-१४) पठितम्। न विद्यतेऽवद्यं येषां तेऽनवद्याः। 'नञ्सुभ्याम्' (पा० ६-२-१७२) इत्युत्तरपदान्तोदात्तत्वम्। अभिगता द्यौर्यैस्तेऽभिद्यवः। तैरभिद्युभिः। अभिशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरेण स एव शिष्यते। मखः। प्रातिपदिकस्वरः। [185]सहो बलमस्मिन्नर्चने समस्तीति सहस्वत्। 'तसौ मत्वर्थे' (पा० १-४-१९) इति भसञ्ज्ञया पदसञ्ज्ञाया बाधितत्वात्सकारस्य रुत्वाभावः। 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः'(पा० ८-२-९) इति वा 'झयः' (पा० ८-२-१०) इति वा मतुपो मस्य वत्वम्। सहश्शब्दो 'नब्विषयस्यानिसन्तस्य'(फि० २-३) इत्याद्युदात्तः। मतुपः पित्त्वात्स एव शिष्यते। काम्यैः। 'कमेर्णिङ्' (पा० ३-१-३०)। 'अत उपधायाः' (पा० ७-२-११६) इतिवृद्धिः। 'जनीजृष्क्नसुरञ्जोऽमन्ताश्च' (धा० पा० १९-६३-६७) इत्यमन्तत्वेन प्राप्तस्य मित्त्वस्य 'न कम्यमिचमाम्'(धा० पा० १९-६९) इति प्रतिषेधात्। 'मितां ह्रस्वः' (पा० ६-४-९२) इत्युपधाह्रस्वत्वं न भवति। ण्यन्तात् 'अचो यत्(पा० ३-१-९७)। णिलोपः। 'तित्स्वरितम्'(पा०६-३-१८५) इति प्राप्ते 'यतोऽनावः'(पा० ६-१-२१३) इत्याद्युदात्तत्वम् ॥८॥

नवमीमृचमाह। हे परिज्मन् परितो व्यापिन्मरुद्गण। अतोऽस्मान्मरुद्गणस्थानादन्त-

---

[185] सहस्वत्। सहो बलमस्मिन्नस्तीति मतुप्। सहस् मत् इत्यत्र 'ससजुषोरुः' इति सूत्रेण पदान्ते विद्यमानस्य सस्य रुत्वं प्राप्तं, तत् 'तसौ मत्वर्थे' इति सूत्रेण बाध्यते, तान्तसान्तयोर्भसंज्ञाविधानात्। ततः 'मादुपधायाश्च मतोर्वोऽयवादिभ्यः' इति सूत्रेणावर्णान्तात्प्रातिपदिकात्परस्य मतोर्मकारस्य वकारः। तेन सहस्वदिति शब्दः। अत्र सहश्शब्दस्य क्लीबलिङ्गत्वात् 'नब्विषयस्यानिसन्तस्य' इत्याद्युदात्तत्वे; मतुपश्च पित्त्वादनुदात्तत्वे उदात्तादनुदात्तस्य स्वरितः, स्वरितादनुदात्तस्य प्रचयः सहस्वत् इति स्वरसिद्धिः।

रिक्षादागहि—अस्मिन्कर्मण्यागच्छ। दिवो वा—द्युलोकाद्वा समागच्छ। रोचनादधि—दीप्यमानादादित्यमण्डलाद्वा समागच्छ। अस्मदीयकर्मकाले यत्र यत्र तिष्ठसि ततः सर्वस्मादागच्छेत्यर्थः। किमर्थमागमनमिति तदुच्यते—अस्मिन्कर्मणि वर्तमान ऋत्विग्गिरः स्तुतीः समृञ्जते—सम्यक् प्रसाधयति। ऋञ्जतिः प्रसाधनकर्मेति यास्कः। एताः स्तुतीः श्रोतुमागच्छेत्यर्थः।. यद्यप्यृत्विजा मन्त्रस्य प्रयुज्यमानत्वादृञ्जतिधातोरुत्तमपुरुषेण भवितव्यं तथापि परोक्षकृतत्वेन निर्देशात्प्रथमपुरुषप्रयोगः। परोक्षकृतलक्षणं च यास्क आह—'ता[180]स्त्रिविधा ऋचः परोक्षकृताः प्रत्यक्षकृता आध्यात्मिक्यश्च। तत्र परोक्षकृताः सर्वाभिर्नामविभक्तिभिर्युज्यन्ते प्रथमपुरुषैश्चाख्यातस्य' (नि० ७-१) इति। अतः। 'पञ्चम्यास्तसिल्' (पा० ५-३-७)। एतदोऽश्। शित्वात्सर्वादेशः। 'लिति' (पा० ६-१-१९३) इति प्रत्ययात्पूर्वस्योदात्तत्वम्। परिज्मन्। अज गतिक्षेपणयोः। 'अन्येभ्योऽपि दृश्यन्ते' (पा० ३-२-७५) इति मनिन्। अकारलोपश्छान्दसः। आमन्त्रितनिघातः। गहि। 'गमेर्बहुलं छन्दसि' (पा० २-४-७३) इति शपो लुक्। हेङित्त्वादनुदात्तोपदेश० (पा० ६-४-३७) इत्यादिना मलोपः। 'अतो हेः' (पा० ६-४-१०५) इति हिलोपो न भवति। तस्मिन्कर्तव्ये 'असिद्धवदत्राभात्' (पा० ६-४-२२) इति मलोपस्यासिद्धत्वेनानकारान्तत्वात्। दिवः। 'ऊडिदम्०' (पा० ६-१-१७१) इत्यादिना विभक्तेरुदात्तत्वम्। वा। 'चादयोऽनुदात्ताः' (फि० ४-१५) इत्यनुदात्तः। रोचनात्। रुच दीप्तौ। 'अनुदात्तेतश्च हलादेः' (पा० ३-२-१४९) इति युच्। 'युवोरनाकौ' (पा० ७-१-१) इत्यनादेशः। चिदित्यन्तोदात्तः। अधि। 'अधिपरी अनर्थकौ' (पा० १-४-९३) इति कर्मप्रवचनीयत्वेन सह निपातसञ्ज्ञायाः समावेशात् 'निपाता आद्युदात्ताः' (फि० ४-१२) इत्याद्युदात्तः। अस्मिन्। परिज्मन्नित्यादिष्टस्यैवान्वादेशात् 'इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ' (पा० २-४-३२) इत्यशनुदात्तः। शित्वात्सर्वादेशः। विभक्तिः 'अनुदात्तौ सुप्पितौ (पा०

---

[180] तास्त्रिविधाः। दैवतकाण्डे निरुक्तकारो यास्को देवतानां स्वरूपं विवेचयन् प्रथमं मन्त्रेषु नाम्ना बन्धुभिः कर्मणा रूपेण च देवतानां स्तुतेरुपलभ्यमानत्वात्प्राधान्येन देवतास्वरूपं मन्त्राधीनमिति मन्त्राणां विभागं दर्शयति—तास्त्रिविधा ऋच इत्यादिना। ऋग्यजुस्सामभेदेन मन्त्रेषु त्रिविधेष्वपि प्रायेण ऋक्ष्वेव देवतानां पूर्वोक्ता स्तुतिः प्रतिपाद्यत इति तासु विज्ञातासु यजुर्मन्त्राणां साममन्त्राणाञ्च स्तुतिप्रकारो विज्ञातो भवति। अतस्सूत्रे ऋचामेव परोक्षप्रत्यक्षाध्यात्मिकभेदेन विभागः कृतः। तत्र यासु ऋक्षु सर्वाभिर्विभक्तिभिः इन्द्रः इन्द्रं इन्द्रेणेत्येवमादिभिः, दिवः पृथिव्या गाथिनः बृहत् इत्यादिभिर्नामभिः, ईशे अनुषत गायत इत्येवं प्रथमपुरुषोपेतैराख्यातान्तपदैर्योगः ताः परोक्षकृता ऋचः। यासु मध्यमपुरुषोपेताख्यातान्तपदैः असि, यच्छेत्यादिभिः, युष्मच्छब्देन सर्वनाम्ना च योगः ताः प्रत्यक्षकृताः। एवं याः उत्तमपुरुषोपेताख्यातान्तपदैरस्मच्छब्देन सर्वनाम्ना च युक्ताः ता आध्यात्मिक्यः। आत्मानमेव स्तोतव्यमधिकृत्य याः प्रवृत्ता ऋचस्ता आध्यात्मिक्य इत्यर्थः। प्रकृते 'समस्मिन्नृञ्जते गिरः' इति मन्त्रे-ऋत्विगहं याः स्तुतीः करोमि ताः श्रोतुं हे मरुद्गण, आगच्छ इत्येवमर्थे 'समृञ्जे' इत्युत्तमपुरुषयोग आवश्यकः, तथाप्यस्याः परोक्षकृतत्वाङ्गीकारात्प्रथमपुरुषयोग इति भाष्यकारो वदति।

३-१-४) इत्यनुदात्तेति सर्वानुदात्तत्वम्। ऋञ्जते। ऋजिभृजी भर्जने। समित्युपसर्गयोगात्प्रसाधने वर्तते। निघातः। गिरः। प्रातिपदिकस्वरः ॥९॥

दशमीमृचमाह। इन्द्रं देवं प्रति साति अधि धनदानमीमहे—आधिक्येन याचामहे। कस्माल्लोकादिति तदुच्यते—इतोऽस्माभिर्दृश्यमानात्पार्थिवात्पृथ्वीलोकाद्वा, दिवो वा द्युलोकाद्वा। महो महतः प्रौढाद्रजसो वा—पक्ष्यादीनां रञ्जकादन्तरिक्षलोकाद्वा। अयमिन्द्रो यतः कुतश्चिदानीयास्मभ्यं धनं प्रयच्छत्वित्यर्थः। सप्तदशसु याच्ञाकर्मसु 'ईमहे यामि' (निघ० ३-१९) इति पठितम्। [107]इतः। 'इदंशब्दात्पञ्चम्यास्तसिल्' (पा० ५-३-७)। 'इदम इश्'

---

[107] इतः। इदं शब्दः, तस्य पञ्चम्यास्तसिल् प्रत्ययः। इदं तस् इति स्थिते 'इदम इश्' इति सूत्रेण इदंशब्दस्य इश् सर्वादेशे शकारस्येत्संज्ञायां लोपे इ तस् इति दशायां रुत्वविसर्गौ। इतः इति रूपम्। अत्र 'प्राग्दिशो विभक्तिः' (दिक्शब्देभ्य इत्यतः प्राग्वक्ष्यमाणाः प्रत्ययाः विभक्तिसंज्ञास्स्युः) इति सूत्रेण तसो विभक्तिसंज्ञायां 'ऊडिदम्पदाद्यप्पुरैद्युभ्यः' इति सूत्रेण विभक्तेस्तस उदात्तस्वरः। शेषनिघाते इतः इति प्राप्तो भवति। एवं 'लिति' इति सूत्रेण प्रत्ययात्पूर्ववर्णस्योदात्तत्वे इतः इति सिध्यति। एवमेकस्मिन् लक्ष्ये विरुद्धयोः शास्त्रयोः प्राप्तौ सत्यां 'विप्रतिषेधे परं कार्यम्' इति सूत्रेण परस्य 'लिति' इति शास्त्रस्यैव प्रथमं प्रवृत्तिः। एतत्प्रवृत्त्यनन्तरं तसो विभक्तित्वं स्वीकृत्य 'ऊडिदं०' इत्यादिना विभक्तेरुदात्तस्वरे सति शेषनिघातेन पूर्वस्यानुदात्तत्वम्। तथाच इतः इति प्रकृतलक्ष्ये स्वरसिद्धिः। अत्रेयं शङ्का—'लिति' इत्यस्य परशास्त्रस्य ग्रहणसमये 'ऊडिदं' इति पूर्वशास्त्रस्य बाधितत्वात्तद्बाधितमेवेति कथं तस्य पुनः प्रवृत्तिः? अत्रोपष्टम्भिकेयं परिभाषा 'सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव' इति। गतौ शास्त्रयोः प्राप्तौ सत्यां विप्रतिषेधे विरोधे सति यद् बाधितं तद् बाधितमेव ज्ञेयमिति तदर्थः। अस्यास्समाधानम्-'पुनः प्रसङ्गविज्ञानात्सिद्धम्' इति। अयमाशयः—'व्रीहिभिर्यजेत' 'यवैर्यजेत' इति विकल्पस्थले शास्त्रयोर्यौगपद्यासम्भवादेकस्य प्रवृत्तौ सत्यामन्यस्य पाक्षिकाप्रामाण्ये सत्यपि पुनः प्रयोगान्तरे तस्य प्रसक्तिरस्त्येव। अतएव 'स्वीकृताप्रामाण्यपरित्यागः, परित्यक्तप्रामाण्यस्वीकारः' इत्याद्यष्टदोषदुष्टत्वं विकल्पस्य मीमांसकैरुपपाद्यमानं सङ्गतं भवति यथा, तथा प्रकृते सकृद्बाधितस्यापि शास्त्रस्य लक्ष्यानुरोधेन पुनः प्रसक्तिस्स्वीक्रियत इति। यद्येवं 'यतः ततः' इत्यत्रापि यच्छब्दात्तच्छब्दाच्च तसिल्प्रत्यये कृते 'लिति' इति सूत्रेण प्रत्ययात्पूर्वस्योदात्तत्वे सति अनन्तरं तसेर्विभक्तित्वमाश्रित्य 'सावेकाचस्तृतीयादिर्विभक्तिः' इति सूत्रेण विभक्तिस्वरः कुतो नाङ्गीक्रियत इत्यस्ति प्रश्नस्यावसरः। तथापि यत्तच्छब्दयोः प्रथमैकवचने अवर्णान्तत्वात् 'न गोश्वन्साववर्ण०' इति निषेधेन विभक्तिस्वरस्याप्राप्तेः, सकृद्बाधितस्य शास्त्रस्य पुनः प्रसक्तिर्न सार्वत्रिकी किन्तु लक्ष्यानुसारेण क्वाचित्कयेति स्वीकाराच्च न दोषः।

(पा० ५-३-३) इतीश् । शित्त्वात्सर्वादेशः । अत्र 'ऊडिदम्'०(पा० ६-१-१७१)इत्यस्यावकाशः। आभ्यामेभिः। 'लिति' (पा० ६-१-१९३) इत्यस्यावकाशः। पचनं पाचकः। उभावपि नित्यौ। तत्र परत्वाद् 'विप्रतिषेधे परं कार्यम्' (पा० १-४-२) इति 'लिति' (पा० ६-१-१९३) इतीकारस्योदात्तत्वम्। पश्चात्तसेः 'प्राग्दिशो विभक्तिः'(पा० ५-३-१) इति विभक्तिसञ्ज्ञकत्वाद् 'ऊडिदम्०' (पा० ६-१-१७१) इत्यादिनाऽसर्वनामस्थानविभक्तेरुच्यमानमुदात्तत्वं भवति। 'सकृद्गतौ विप्रतिषेधे यद् बाधितं तद् बाधितमेव'(पा० प० ४०)इत्यूडिदम्०'(पा० ६-१-१७२) इत्यस्य पुनरप्रवृत्तिरेवेति चेत्—न, लक्ष्यानुरोधेन 'पुनः प्रसङ्गविज्ञानञ्च' (पा० प० ३९) इति स्वीकारात्। नन्वेवं यतस्तत इत्यादावपि परेण लित्स्वरेण बाधितमपि 'सावेकाचः०' (पा० ६-१-१७१) इति तसिल उदात्तत्वं स्यादिति चेन्न, यत्तच्छब्दयोः सावर्णान्तत्वे 'न गोश्वन्सावर्ण०' (पा० ६-१-१८२) इति निषेधात्। न च 'पुनःप्रसङ्गविज्ञानं च' (पा० प० ३९) इत्येतत्सार्वत्रिकं लक्ष्यानुरोधेन क्वचिदेव तदाश्रयणादिति। सातिम्। षणु दाने। 'धात्वादेः षः सः' (पा० ६-१-६४)। भावे क्तिन्। 'जनसनखनां सञ्झलोः' (पा० ६-४-४२) इति नकारस्यात्वम्। 'तितुत्रतथसिसुसरकसेषु च' (पा० ७-२-९) इति निषेधादिण् न भवति। नित्स्वरे प्राप्ते 'उदात्तः'(पा० ३-३-९६) इत्यनुवृत्तौ 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा०३-३-७९) इति निपातनादन्तोदात्तत्वम्। ईमहे। ईङ् गतौ। श्यनोऽपि 'बहुलं छन्दसि' (पा० २-४-७३) इति लुक्। अस्य धातोर्ङित्त्वात् 'तास्यनुदात्तेन्ङिददुपदेशात्०' (पा० ६-१-१८६) इति लसार्वधातुकस्यानुदात्तत्वे धातुस्वर एव शिष्यते। न च 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघातः। 'चवायोगे प्रथमा' (पा० ८-१-५९) इति निषेधात्। उत्तरवाक्ययोरपि हिशब्दवाशब्दयोगादन्यथा वाक्यापरिपूर्तेस्तिङ्विभक्तेरवश्यमध्याहारात्तदपेक्षयैषा प्रथमा तिङ्विभक्तिरिति। दिवः। 'ऊडिदम्०' (पा० ६-१-१७१) इत्यादिना विभक्तेरुदात्तत्वम्। पार्थिवात्। प्रथ प्रख्याने। प्रथत इति पृथिवी। 'प्रथेः षिवन्संप्रसारणञ्च' (उ० १-१४९) इति षिवन्प्रत्ययः। 'षिद्गौरादिभ्यश्च' (पा० ४-१-४१) इति ङीष्। प्रत्ययस्वरेणोदात्तः। शेषनिघातेनानुदात्तादिः पृथिवीशब्दः। पृथिव्या विकार इत्यर्थे 'ओरञ्'(पा० ४-३-१३९)इत्यनुवृत्तौ 'अनुदात्तादेश्च'(पा० ४-३-१४०) इत्यञ्। 'यस्येति च'(पा० ५-४-१४८) इतीकारलोपः। 'तद्धितेष्वचामादेः' (पा० ७-२-११७) इत्यादिवृद्धौ रपरत्वम्। 'ञ्नित्यादिर्नित्यम्' (पा० ६-१-१९७) इत्याद्युदात्तः। अधि। निपातत्वादाद्युदात्तः। इन्द्रम्। रन्प्रत्ययान्त आद्युदात्तः। महः। महत इत्यस्याकारतकारयोर्लोपश्छान्दसः। 'सावेकाचः०' (पा० ६-१-१६८) इति विभक्तेरुदात्तत्वम्। रजसः 'नब्विषयस्यानिसन्तस्य' (फि० २-३) इत्याद्युदात्तत्वम् ॥१०॥

इति प्रथमस्य प्रथमे द्वादशो वर्गः।

॥७॥

१.७

इन्द्रमित्यादिकं दशर्चं यत्सूक्तं तत्सुरूपकृत्नुमित्यादिषु चतुर्थम्। ऋषिच्छन्दोदेवता-

विनियोगाश्च पूर्ववत्। [188]विशेषविनियोगस्तूच्यते। महाव्रते निष्केवल्यशस्त्र इन्द्रमिद्गाथिन इति सूक्तम्। तथा च पञ्चमारण्यके सूत्रितम्—शिरो गायत्रमिन्द्रमिद्गाथिनः (ऐ० आ० ५) इति। तथा चतुर्विंशेऽहनि ब्राह्मणाच्छंसिनः शस्त्र इन्द्रमिद्गाथिन इति षळहस्तोत्रियस्तृचः। चतुर्विंशे होताजनिष्ठेत्युपक्रम्य 'आयाहि सुषुमा हि त इन्द्रमिद्गाथिनो बृहद्' (आ० ७-२) इति सूत्रितत्वात्। अतिरात्रे प्रथमे पर्यायेऽच्छावाकशस्त्रेऽयमेव तृचोऽनुरूपः। सूत्रितञ्च—'इन्द्राय मद्वने सुतमिन्द्रमिद्गाथिनो बृहत्' (आ० श्रौ० ६-४) इति।

तत्र प्रथमामृचमाह। गाथिनो गीयमानसामयुक्ता उद्गातार इन्द्रमिदिन्द्रमेव बृहत्। 'त्वामिद्धि हवामहे' इत्यस्यामृच्युत्पन्नेन बृहन्नामकेन साम्नानूषत—स्तुतवन्तः। अर्किणोऽर्चन-हेतुमन्त्रोपेता होतारोऽर्केभिरर्चनसाधनैर्मन्त्रैरिन्द्रमेवानूषत। ये त्ववशिष्टा अध्वर्यवस्ते वाणीर्वाणीभि-र्वाग्भिर्यजूरूपाभिरिन्द्रमेवानूषत। अर्कशब्दस्य मन्त्रपरत्वं यास्केनोक्तम्—'अर्को मन्त्रो भवति यदनेनार्चन्ति' (नि० ५-४) इति। श्लोक इत्यादिषु सप्तपञ्चाशत्सङ्ख्याकेषु वाङ्नामसु वाशी वाणी (निघ० १-११) इति पठितम्। गाथिनः। 'उषिकुषिगार्तिभ्यस्थन्' (उ० २-४') इति गायतेः स्थन्प्रत्ययः। नित्वादाद्युदात्तः। गाथा एषां सन्तीति गाथिनः। 'व्रीह्यादिभ्यश्च' (पा० ५-२-११६) इतीनिः। प्रत्ययस्वरेणेकार उदात्तः। सच सति शिष्टः। बृहत्—बृहता। तृतीयैकवचनस्य 'सुपां सुलुक्०' (पा० ७-१-३९) इति लुक्। 'पृषद्बृहन्महज्जगच्छ-तृवच्च' (उ० २-८५) इत्यन्तोदात्तो निपातितः। अर्केभिः। अर्च पूजायाम्। अर्च्यन्ते एभिरित्यर्का मन्त्राः। 'पुंसि सञ्ज्ञायां घः प्रायेण' (पा० ३-३-११८) इति घः। 'चजोः कु घिण्ण्यतोः' (पा० ७-३-५२) इति कुत्वम्। प्रत्ययस्वरेणान्तोदात्तः। 'बहुलं छन्दसि' (पा० ७-१-१०) इति भिस ऐसादेशो न भवति। अर्काः स्तुतिसाधनभूता मन्त्रा एषां सन्तीत्य-र्किणः। वाणीः। 'वृषादीनां च' (पा० ६-१-२०३) इत्याद्युदात्तः। 'दीर्घाज्जसि च' (पा० ६-१-१०५) इति पूर्वसवर्णदीर्घनिषेधस्य 'वा छन्दसि' (पा० ६-१-१०६) इति विकल्पितत्वाद्दीर्घत्वम्। तृतीयार्थे प्रथमा। अनूषत। णु स्तुतौ। 'णो नः' (पा० ६-१-६५) इति नत्वम्। लुङि व्यत्ययेनात्मनेपदम्। झस्यादादेशः। सिच इडभाव उकारस्य दीर्घत्वं च छान्दसम्। धातोः कुटादित्वात्सिचो ङित्त्वेन गुणाभावः ॥१॥

द्वितीयामृचमाह। इन्द्र इदिन्द्र एव हर्योर्हरिनामकयोरश्वयोः सचा सह युगपदा संमिश्लः—सर्वतः सम्यग्मिश्रयिता। कीदृशोर्हर्योः? वचोयुजा—इन्द्रस्य वचनमात्रेण रथे युज्यमानयोः। सुशिक्षितयोरित्यर्थः। अयमिन्द्रो वज्री वज्रयुक्तः। हिरण्ययः—हिरण्मयः। सर्वा-

---

[188] गवामयनस्योपान्तिमदिनेऽनुष्ठेये महाव्रतसंज्ञकसोमयागे निष्केवल्यशस्त्रे- माध्यन्दिन-सवनेऽनुष्ठीयमाने एतत्संज्ञके शस्त्रे होत्रा शंसनीयमिदं सूक्तम्।

गवामयनस्य द्वितीयदिनेऽनुष्ठीयमाने सोमयागे चतुर्विंशनाम्नि ब्राह्मणाच्छंसिकर्तृके शस्त्रेऽयं तृचः—ऋक्त्रयसमुदायः षळहस्तोत्रियसंज्ञकः तेन शंसनीयः।

एवं ज्योतिष्टोमेऽतिरात्रसंस्थाके क्रतौ अतिरात्रस्तोत्राणां प्रथमे पर्यायेऽच्छावाककर्तृके शस्त्रेऽयं तृचोऽनुरूपः—स्तोत्रियानन्तरं पठनीयः। एतेषां विवरणं पूर्वमेव तत्र तत्र विशेषेण कृतम्, ततत एवावगन्तव्यम्।

भरणभूषित इत्यर्थः। हर्योः। हरत इति हरी। इन्। नित्स्वादाद्युदात्तः। सचा सहेत्युक्तम्। सम्मिश्लः। मिश्रणं मिश्रः। मिश्रयतेर्घञ्। सम्यग् मिश्रो यस्यासौ सम्मिश्रः। लत्वं छान्दसम्। सम्यग् मिश्रयितेत्यर्थः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। वचोयुजा। वचसा युज्येते इति वचोयुजौ। तयोः। षष्ठीद्विवचनस्य 'सुपां सुलुक्०' (पा० ७-१-३९) इत्याकारादेशः। युज्शब्दो धातुस्वरेणान्तोदात्तः। कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। वज्री। वज्रमस्यास्ति। 'अत इनिठनौ' (पा० ५-२-११५)। प्रत्यय-स्वरः। हिरण्ययः। 'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसि' (पा० ६-४-१७५) इति हिरण्मयशब्दस्य मकारलोपो निपात्यते। अकारः प्रत्ययस्वरेणोदात्तः। पूर्वेणानुदात्तेन सहैकादेश 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इत्युदात्तः ॥२॥

तृतीयामृचमाह। अयमिन्द्रो दीर्घाय प्रौढाय निरन्तराय चक्षसे दर्शनाय दिवि द्युलोके सूर्यमारोहयत्। पुरा वृत्रासुरेण जगति यदापादितं तमस्तन्निवारणेन प्राणिनां दृष्टिसिद्ध्यर्थ-मादित्यं द्युलोके स्थापितवानित्यर्थः। स च सूर्यो गोभिः स्वकीयरश्मिभिरद्रिं पर्वतप्रमुखं सर्वं जगद्व्यैरयत्—विशेषेण दर्शनार्थं प्रेरितवान्। प्रकाशितवानित्यर्थः। अथवा—इन्द्र एव गोभिर्जलैर्निमित्तभूतैरद्रिं मेघं व्यैरयत्—विशेषेण प्रेरितवान्। पञ्चदशसङ्ख्याकेषु रश्मि-नामसु खेदयः किरणा गावः (निघ० १-५) इति पठितम्। त्रिंशत्सङ्ख्याकेषु मेघनामसु अद्रिर्ग्रावा (निघ० १-१०) इति पठितम्। दीर्घाय। प्रातिपदिकस्वरेणान्तोदात्तः। चक्षसे। चक्षेः 'सर्वधातुभ्योऽसुन्' (उ० ४-१९०) इत्यसुन्। बहुलग्रहणात्ख्याञादेशाभावः। नित्स्वा-दाद्युदात्तः। सूर्यम्। सुवति प्रेरयतीति सूर्यः। षू प्रेरणे। 'धात्वादेः षः सः' (पा० ६-१-६४) 'राजसूयसूर्य०' (पा० ३-१-११४) इत्यादिना क्यप्प्रत्ययस्तस्य रुडागमश्च निपात्यते। क्यपः कित्त्वाद्गुणाभावः। पित्त्वादनुदात्तत्वम्। धातुस्वर एव शिष्यते। रोहयत्। रुहेर्ण्यन्ता-ल्लङि 'बहुलं छन्दस्यमाङ्योगेऽपि' (पा० ६-४-७५) इत्यडभावो निघातश्च। दिवि। 'ऊडिदम्०' (पा० ६-१-१७१) इत्यादिना विभक्तेरुदात्तत्वम्। अद्रिम्। 'अदिशदिभूशुभिभ्यः क्रिन्' (उ० ४-६६) इति क्रिन् प्रत्ययः। अदन्ति पशवस्तृणादिकमत्रेत्यद्रिः। नित्स्वादाद्युदात्तत्वम्। ऐरयत्। ईर गतौ। ण्यन्ताल्लङ्। निघातः ॥३॥

चतुर्थीमृचमाह। हे इन्द्र, उग्रः शत्रुभिरप्रधृष्यस्त्वमुग्राभिरप्रधृष्याभिरूतिभिरस्म-द्विषयरक्षाभिर्वाजेषु युद्धेषु नोऽस्मानव – रक्ष। तथा सहस्रप्रधनेषु च – सहस्रसङ्ख्याक-गजाश्वादिलाभयुक्तेषु महायुद्धेष्वपि रक्ष। वाजेषु। 'वृषादीनां च' (पा० ६-१-२०३) इत्याद्युदात्तत्वम्। नोऽव। नसः सकारस्य रुत्वोत्वगुणेषु 'प्रकृत्यान्तः पादम्०'(पा० ६-१-११५) इति प्रकृतिभावो न भवति, '०अव्यपरे' (पा० ६-१-११५) इति निषेधात्। अव रक्षणे। 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघातः। [180]यद्यपि सहस्रप्रधनेष्ववेत्याहृतां क्रियामपेक्ष्य

---

[180] यद्यपि। अस्मिन् मन्त्रे हे इन्द्र, वाजेषु साधारणयुद्धेषु नोऽस्मान् अव, एवं सहस्रप्रधनेषु च महायुद्धेषु च अव-इति वाक्यद्वयम्। तत्र श्रूयमाणं क्रियापदमे-कमध्याहृतञ्चापरम्। श्रूयमाणक्रियापदस्य 'चवायोगे प्रथमा' इति सूत्रेण निघातप्रतिषेधे सिद्धे कथं 'तिङ्ङतिङः' इति निघात इति शङ्कायामुत्तरम्—यथा 'सहस्रप्रधनेषु च' इत्यत्र

प्रथमायाः श्रूयमाणाया अवेति क्रियायाः 'चवायोगे प्रथमा' (पा० ८-१-५९) इति निघातनिषेधः प्राप्तः, तथापि वाजेष्वित्यत्र चकारस्य लुप्तत्वात् 'चादिलोपे विभाषा' (पा० ८-१-६३) इति निषेधस्य विकल्पितत्वादत्र निघातः प्रवर्तते। [190]सहस्रशब्दः 'कर्दमादीनाञ्च' (फि० ३-१०) इति मध्योदात्तः। सहस्रप्रधनेषु वाजेषु। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। उग्रः उच समवाये। चस्य गः। 'ऋज्रेन्द्र०' (उ० २-३१) इति रन्। व्यत्ययेनान्तोदात्तः। ऊतिभिः। 'ऊतियूति०' (पा० ३-३-९७) इत्यादिना वितन्नुदात्तः ॥४॥

पञ्चमीमृचमाह। वयमनुष्ठातारो महाधने प्रभूतधननिमित्तमिन्द्रं हवामहे आह्वयामः। अर्भेऽर्भके स्वल्पेऽपि धने निमित्तभूते सतीन्द्रं हवामहे। कीदृशमिन्द्रम्? युजम्—सहकारिणं समाहितं वा। वृत्रेषु शत्रुषु धनलाभविरोधिषु प्राप्तेषु तन्निवारणाय वज्रिणं वज्रोपेतम्। महाधनशब्दो यद्यपि सङ्ग्रामनामसु पठितस्तथापि महाधनवचनोऽत्र। सङ्ग्रामेऽर्थे बहुव्रीहित्वे सत्यन्तोदात्तत्वासिद्धेर्नात्र तद्गृहीतम्। महाधने। महच्च तद्धनञ्चेति समासे 'समासस्य' (पा० ६-१-२२३) इत्यन्तोदात्तः। अर्भे। 'अर्तिगृभ्यां भन्' (उ० ३-१५०)। नित्त्वादाद्युदात्तः। हवामहे। ह्वेञ् स्पर्द्धायां शब्दे च। ञित्त्वात्कर्त्रभिप्राये आत्मनेपदम्। लटः स्थाने महिङ्। 'टित आत्मनेपदानाम्०' (पा० ३-४-७९) इति टेरेत्वम्। कर्तरि शप्। 'ह्वः सम्प्रसारणम्' (पा० ६-१-३२) इत्यनुवृत्तौ 'बहुलं छन्दसि' (पा० ६-१-३४) इति सम्प्रसारणम्। वकारस्योकारः। परपूर्वत्वम्। गुणावादेशौ। 'अतो दीर्घो यञि' (पा० ७-३-१०१) इति दीर्घत्वम्। 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघातः। युजम्। युज समाधावित्यस्य क्विप्। 'युजेरसमासे' (पा० ७-१-७१) इति नुम् न भवति। स हि युजेरिति निर्देशाद्विकाररहितस्य न भवति। 'अनित्यमागमशासनम्' (पा० प० ८४) इति वा युजिर् योग इत्यस्यापि नुम् न भवति। वृत्रेषु। वृतु वर्तने। प्रतिकूलतया वर्तन्त इति वृत्राणि शत्रुकुलानि। 'स्फायितञ्चि०' (उ० २-१३) इत्यादिना रक्प्रत्ययः। कित्त्वाद्गुणाभावः। प्रत्ययस्वरः। वज्रिणम्। 'अत इनिठनौ' (पा० ५-२-११५) इतीनिः प्रत्ययस्वरः ॥५॥

इति प्रथमस्य प्रथमे त्रयोदशो वर्गः ॥

---

चकारबलेन अवशब्दस्याध्याहारः तथा वाजेष्वित्यनन्तरं चकारोऽध्याहर्तव्यः। स च वाक्यार्थं जनयित्वा लुप्यते। तत्र ७३ 'चादिलोपे विभाषा' इति सूत्रेण विकल्पेन निघातप्रतिषेधस्य प्रतिषिद्धत्वादत्र निघातो भवतीति।

[190] सहस्रशब्दस्य कर्दमादिगणपठितत्वात् '७४ 'कर्दमादीनाञ्च' इति सूत्रेण आद्युदात्तत्वं मध्योदात्तत्वं वा प्राप्तम्, तदत्र लक्ष्यानुसारेण मध्योदात्तत्वं स्वीकृत्य सहस्रं प्रधनानि येषामिति बहुव्रीहौ पूर्वपदप्रकृतिस्वरः—सहस्रप्रधनेषु इति।

इन्द्रमिद्गाथिन इति सूक्ते षष्ठीमृचमाह । हे सत्रादावन् – अस्मदभीष्टानां सर्वेषां फलानां सहप्रदातः । अतो व्रीह्यादिनिष्पत्त्यर्थं हे वृषन्-वृष्टिप्रदेन्द्र नोऽस्मदर्थममुं दृश्यमानं चरुं मेघमपावृधि—उद्घाटय । तथैवास्मभ्यमस्मदर्थमप्रतिष्कुतः प्रतिशब्दरहितः । यद्यदस्माभिर्याच्यते तत्र सर्वत्र नेति प्रतिशब्दं नोच्चारयति । अतोऽस्मद्विषये कदाचिदप्यप्रतिस्खलितः । एतदेवाभिप्रेत्य यास्क आह । 'अप्रतिष्कुतोऽप्रतिष्कृतोऽप्रतिस्खलितो वा' (नि० ६-१६) इति । वृषन् । आमन्त्रितनिघातः । अमुम् । प्रातिपदिकस्वरेणान्तोदात्तः । चरुम् । चरतीति चरुः । 'भृमृशीतृचरित्सरितनिधनिमिमस्जिभ्य उः' (उ० १-७) इत्युप्रत्ययः । प्रत्ययस्वरेणान्तोदात्तः । सत्रादावन् । सत्राशब्दः सहार्थे । अभिमतफलजातं सकलं सह ददातीति सत्रादावा । 'आतो मनिन्क्वनिब्वनिपश्च' (पा० ३-२-७४) इति वनिप् । 'आमन्त्रितस्य च' (पा० ६-१-१९८) इत्युदात्तत्वम् । पादादित्वान्न निघातः । अप । 'निपातस्य च' (पा० ६-३-१३६) इति दीर्घः । निपात आद्युदात्तः । वृधि । वृञ् वरणे । लोटः सिप् । तस्य 'सेर्ह्यपिच्च' (पा० ३-४-८७) इति हिः । 'स्वादिभ्यः श्नुः' (पा० ३-१-७३) तस्य 'बहुलं छन्दसि' (पा० ३-१-७४) इति लुक् । 'श्रुशृणुपॄकृवृभ्यश्छन्दसि' (पा० ६-४-१०२) इति हेर्धिरादेशः । तस्य ङित्त्वाद्गुणाभावः । निघातः । [191]अस्मभ्यम् । अस्मच्छब्दात् 'ङ्सोभ्यम्' (पा० ७-१-३०) इति भ्यमादेशः । 'शेषे लोपः' (पा० ७-२-९०) इति दकारलोपः । 'बहुवचने झल्येत्' (पा० ७-३-१०३) इत्येत्वं न भवति । 'अङ्गवृत्ते पुनर्वृत्तावविधिर्निष्ठितस्य' (म० भा० ७-१-३०) इत्युक्तम् । प्रातिपदिकस्वरेण स्मेत्यकार उदात्तः । 'भ्यसोऽभ्यम्' (पा० ७-१-३०३) इत्यभ्यमादेशपक्षे 'शेषे लोपः' (पा० ७-२-९०) इति मपर्यन्तशेषस्याद्शब्दस्य लोपः । तदोदात्तनिवृत्तिस्वरेणाभ्यमः आदेरकारस्योदात्तत्वम् । अप्रतिष्कुतः । केनचिदप्रतिशब्दितः । 'कुङ् शब्दे निष्ठा' (पा० ३-२-१०२) इति कर्मणि क्तप्रत्ययः । प्रतेः

---

[191] अस्मभ्यम् । अस्मच्छब्दस्य पञ्चमीबहुवचने भ्यसः 'भ्यसो भ्यम्' इति सूत्रेण भ्यमादेशः । अत्र 'अभ्यम्' इति छेदेन अभ्यमिति वाऽऽदेशः । तत्र भ्यमादेशपक्षे अस्मद् भ्यम् इत्यत्र 'शेषे लोपः' इति सूत्रेण दकारलोपे सति अस्मभ्यम् इति रूपम् । तत्र प्रातिपादिकस्वरेण द्वितीयवर्णस्योदात्तस्वरः । शेषनिपातेन पूर्वस्यानुदात्तस्वरः, उत्तरस्य च स्वरितः--अस्मभ्यम् इति स्वरसिद्धिः । अत्र दकारलोपानन्तरं 'बहुवचने झल्येत्' इति सूत्रेणाङ्गस्य एकारः प्राप्तः 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति परिभाषया निवर्तते । एकस्याङ्गकार्यस्य प्रवृत्तिदशायामन्यस्याङ्गकार्यं पुनर्न विधातुं शक्यमिति परिभाषाया अर्थः । प्रकृते लोपाख्यमङ्गकार्यं प्रवृत्तम्, तस्मिन् सति अन्यदङ्गकार्यमेत्त्वं न भवतीति तात्पर्यम् । अभ्यमादेशपक्षे अस्मद् अभ्यम् इत्यत्र 'शेषे लोपः' इति सूत्रेण अदो लोपः । अस्म् अभ्यम् – अस्मभ्यमिति रूपम् । अत्र अभ्यमादेशस्य स्थानिवत्त्वेन 'अनुदात्तौ सुप्पितौ' । इत्यनुदात्तस्वरः, तस्मिन् परे सति 'शेषे लोपः' इति सूत्रेणादो लोपे अकारस्योदात्तस्य लोपो जातः । अतः 'अनुदात्तस्य यत्रोदात्तलोपः' । इत्युदात्तनिवृत्तिस्वरेण अभ्यमोऽकारस्य प्रथमस्योदात्तस्वरः । तथाच--अस्मभ्यम् इति स्वरसिद्धिः ।

प्राक् प्रयोगः। पारस्करादेराकृतिगणत्वात्सुडागमः। सुषामादेराकृतिगणत्वात्षत्वम्। नञ् समासेऽव्ययपूर्वपदप्रकृतिस्वरत्वम् ॥६॥

सप्तमीमृचमाह। तुञ्जे तुञ्जे तस्मिंस्तस्मिन्फलदातरि देवान्तरे ये स्तोमाः स्तोत्रविशेषा उत्तरे उत्कृष्टा सन्ति तैः स्तोमैः सर्वैरपि वज्रिणो वज्रयुक्तस्येन्द्रस्य सुष्टुतिं योग्यां शोभनस्तुतिं न विन्धे—न विन्दामि। इन्द्रस्यात्यन्तगुणबाहुल्येन देवान्तरेषूत्तमत्वेन प्रसिद्धान्यपि स्तोत्राणि न पर्याप्तानीत्यर्थः। एतामृचं यास्क एवं व्याचष्टे 'तुञ्जस्तुञ्जतेर्दानकर्मणः। दाने दाने य उत्तरे स्तोमा इन्द्रस्य वज्रिणो नास्य तैर्विन्दामि समाप्तिं स्तुतेः' (नि० ६-१८) इति। तुञ्जे तुञ्जे। तुञ्जतिर्दानकर्मेत्युक्तम्। ततः कर्तरि पचाद्यच्। 'चितः' (पा० ६-१-१६३) इत्यन्तोदात्तत्वम्। 'नित्यवीप्सयोः' (पा० ८-१-४) इति द्विर्भावः। तस्य 'परमाम्रेडितम्' (पा० ८-१-२) इति द्वितीयस्याम्रेडितसञ्ज्ञा। 'अनुदात्तञ्च' (पा० ८-१-३) इत्यनुदात्तत्वम्। दातरि दातरीत्यर्थः। निरुक्ते तु 'दाने दाने' (नि० ६-१२) इत्यर्थतो व्याख्यानम्। उत्तरे। तॄ प्लवनतरणयोः। भावे 'ऋदोरप्' (पा० ३-३-५७)। उच्छब्द उत्कृष्टवाचकः। उत्कृष्टतरो यस्येति बहुव्रीहिः। उच्छब्दो 'निपाता आद्युदात्ताः' (फि० ४-१२) इत्याद्युदात्तः। बहुव्रीहौ पूर्वपदप्रकृतिस्वरत्वम्। स्तोमाः। 'अर्तिस्तुसु०' (उ० १-१३८) इत्यादिना स्तोमशब्दो मन्नन्तो नित्त्वादाद्युदात्तः। विन्धे। विद्लृ लाभे। लट्। स्वरितेत्त्वादात्मनेपदम्। उत्तमैकवचनमिट्। 'तुदादिभ्यः शः' (पा० ३-१-७७)। 'शेमुचादीनाम्' (पा० ७-१-५९) इति नुम्। दकारस्य व्यत्ययेन धकारः। अस्य। प्रकृतस्येन्द्रस्य परमर्शादन्वादेश इदमोऽश्। शित्त्वात्सर्वादेशः। अनुदात्तः। [192]सुष्टुतिम्। ष्टुञ् स्तुतौ। 'धात्वादेः षः सः' (पा० ६-१-६४)

---

[192] सुष्टुतिम्। ष्टुञ् धातुः। 'धात्वादेः षः सः' इति षकारस्य सकारे सति क्तिन् प्रत्ययः। सु इत्युपसर्गेण प्रादिसमासे सु स्तु ति इति जाते 'उपसर्गात् सुनोति-सुवति-स्यति-स्तौति-स्तोभति-स्था-सेनय-सेध-सिच-सञ्ज-स्वञ्जाम्' इति सूत्रेण सकारस्य षत्वे सुष्टुतिशब्दः। ततो द्वितीयैकवचनेऽमि 'अमि पूर्वः' इति पूर्वरूपैकादेशे सुष्टुतिमिति रूपम्। शोभनां स्तुतिमित्यर्थः। अत्र समासान्तोदात्तस्वरं बाधित्वाऽव्ययपूर्वपदप्रकृतिस्वरः प्राप्तः। पूर्वस्य सोरुपसर्गत्वादुपसर्ग उदात्तः। तेन सुष्टुतिम् इति स्वरः। अस्यापि बाधकम् 'गतिकारकोपपदात्कृत्' इति। तेनोत्तरपदप्रकृतिस्वरत्वे धातुस्वरः सुष्टुतिम् इति। अस्याप्यपवादः—'तादौ च निति कृत्यतौ' इति। अत्र क्तिन्कृत्प्रत्ययः तकारादिः नित् तु वर्जितश्च। तस्मिन् परेऽनन्तरो गतिः सु इति। तत्प्रकृतिस्वरे सति सुष्टुतिम् इति भवति। अस्यापि 'मन्क्तिन् व्याख्यान०' इत्यादिनापवादः। तेनोत्तरपदान्तोदात्तस्वरस्सिध्यति सुष्टुतिम् इति।

अत्रायं भाष्यकृतविचारसङ्ग्रहः—'मन्क्तिन्' इति सूत्रे कारकादित्यनुवृत्तौ ततः परेषां मन्क्तिन्नन्तानां व्याख्यानादीनाञ्च शब्दानां कृत्स्वरापवादतयोत्तरपदान्तोदात्तस्वरो विधीयते। रथवर्त्म पाणिनिकृतिरित्याद्युदाहरणानि। प्रकृतिः विहृतिरित्यादीनि प्रत्युदाहर-

णानि। प्र वि इत्यनयोरुपसर्गत्वात्कारकत्वाभावेन प्रत्युदाहरणता। तथैव सुष्टुतिमित्यत्रापि सोरुपसर्गतया कारकत्वाभावात्कथमुदाहरणत्वम्। अतो नात्र 'मन्क्तिन्' इत्यादिनोत्तरपदान्तोदात्तत्वं भवितुमर्हतीति शङ्का।

'प्रकृतिः विहृतिः' इत्यत्र प्र वि इत्युपसर्गयोर्धात्वर्थविशेषणत्वात्कारकत्वं माऽस्तु, सुष्टुतिमित्यत्र क्तिन्नन्तस्य स्तुतिशब्दस्य स्तूयते स्तुतिः क्रियतेऽनयेति करणव्युत्पत्त्या स्तोत्रकरणीभूतऋगभिधायित्वात्प्रत्ययार्थकरणं प्रति सोर्विशेषणत्वेन कारकत्वं भवितुमर्हति। तस्मात्परस्य क्तिन्नन्तस्यान्तोदात्तत्वे न काचिद्धानिरिति समाधानम्।

यद्येवं सोरुपसर्गत्वं न स्यात् धात्वर्थक्रियायोगे खलु तस्योपसर्गत्वम्। तस्योपसर्गत्वाभावे च 'उपसर्गात्सुनोतिः' इत्यादिना धात्ववयवसकारस्य षत्वं न स्यादिति शङ्का भवति।

करणं हि व्यापारवद्भवति, व्यापारवदसाधारणं कारणं करणमिति तल्लक्षणात्। तस्य यद्विशेषणं तत् तदन्तर्गतव्यापारस्यापि विशेषणमेव। करणान्तर्गतव्यापारस्तु धात्वर्थ एव। एवं धात्वर्थसम्बन्धमादाय सोरुपसर्गत्वे तत्परस्य धात्ववयवसकारस्य षत्वे न काचित्क्षतिरिति समाधानम्।

करणान्तर्गतकरोत्यर्थविशेषणत्वात्सोः तन्निरूपितोपसर्गत्वमेव, न तु स्तुधात्वर्थनिरूपितोपसर्गत्वम्, तस्य स्तुधात्वर्थविशेषणत्वाभावात्। अतः कथं षत्वमिति शङ्कायामिदमुत्तरम्—सोः करोत्यर्थविशेषणता न साक्षात्, करोत्यर्थस्यात्राश्रवणात्। किन्तु स्तूयते स्तोत्रं क्रियत इति विवरणलभ्यः करोत्यर्थः। स च स्तुधात्वर्थद्वारैव भवति। अतः स्तुधात्वर्थद्वारा सोः करोत्यर्थविशेषणता स्वीकर्तव्या। तेन या स्तुतिश्शोभना तत्करणमपि शोभनमित्येवं रीत्या स्तुधात्वर्थसंबन्धात्षत्वे न कोऽपि प्रत्यूह इति। तस्मात् सुष्टुतिमित्यत्र सोः प्रकृतिप्रत्ययार्थोभयविशेषणत्वात् 'मन् क्तिन्' इत्यादिसूत्रस्योदाहरणमेव तत्, प्रकृतिः विहृतिरिति तु प्रत्युदाहरणमेव, अत्र प्रविशब्दयोः धात्वर्थमात्रविशेषणत्वस्वीकारादिति सिद्धम्।

उभयविशेषणत्वे सोः धात्वर्थः प्रत्ययार्थश्चेति द्वे विशेष्ये भवतः। युगपद्द्वाभ्यां विशेष्याभ्यां विशेषणस्यान्वये सति प्रतिविशेष्यं विशेषणस्यावृत्तिः स्यात्। यथा 'ग्रहं संमार्ष्टि' इत्यत्र ग्रहं तद्गतमेकत्वञ्चोद्दिश्य संमार्गे विधीयमाने प्रत्युद्देश्यं विधेयावृत्तिकृतो वाक्यभेदो मीमांसकैरापाद्यते तथा प्रकृतेऽपि स्यात्। क्रमेण प्रतिविशेष्यं विशेषणान्वये विनिगमनाविरहः विरम्य व्यापारापातश्च स्याताम्। एकत्र विशेष्ये श्रौतं विशेषणमपरत्र नार्थिकमिति स्वीकारेऽपि न निस्तारः। तत्र धात्वर्थं प्रति विशेषणमिति पक्षे 'उपसर्गात्सुनोति' इत्यादिना षत्वं न स्यात्। प्रत्ययार्थं प्रति तथाभिधीयमाने उत्तरपदान्तोदात्तत्वासिद्धिः, प्रकृतिः विहृतिरित्यनयोः प्रत्युदाहरणत्वासिद्धिश्चेत्युभयतः पाशारज्जुरिति चेदुच्यते—सोः प्रत्ययार्थमात्रेण सम्बन्धमङ्गीकृत्योत्तरपदान्तोदात्तत्वं व्यवस्थाप्य षत्वस्य छान्दसत्वं स्वीकर्तव्यमिति। अथवा शोभना स्तुतिर्यस्येति बहुव्रीहिमाश्रित्य पूर्वपदप्रकृतिस्वरापवादतया 'नञ्सुभ्याम्' इति सूत्रेणोत्तरपदान्तोदात्तत्वं व्यवस्थापनीयम्। यद्वा-सुष्टुतिशब्दस्य संज्ञापरत्वमङ्गीकृत्य क्तिच् प्रत्ययं विधाय 'चित' इत्यनेनान्तोदात्तत्वमाश्रयणीयमिति।

इति सत्वम्। 'स्त्रियां क्तिन्' (पा० ३-३-९४) इति भावे क्तिन्। स्वित्युदात्तेनोपसर्गेण प्रादिसमासः। 'उपसर्गात्सुनोति०' (पा० ८-३-६५) इत्यादिना षत्वम्। अत्राव्ययपूर्वपद-प्रकृतिस्वरत्वेन सोः प्राप्तमुदात्तत्वं बाधित्वा 'गतिकारकोपपदात्कृत्' (पा० ६-२-१३९) इत्युत्तरपदप्रकृतिस्वरेण धातोरुदात्तत्वे प्राप्ते तदपवादत्वेन 'तादौ च निति कृत्यतौ' (पा० ६-२-५०) इत्यनन्तरस्य गतिसञ्ज्ञकस्य सोरेवोदात्तत्वेन भवितव्यम्। तत्तु 'मन्क्तिन्व्याख्यानशयनासनस्थानयाजकादिक्रीताः' (पा० ६-२-१५१) इत्युत्तरपदान्तोदात्तत्वेन बाध्यते। तथाच 'सुहवां सुष्टुती हुवे' (ऋ० २-७-१५)। 'वृष्णे चोदस्व सुष्टुतिम्' (ऋ० ६-५-२५)। 'यास्ते राके सुमतयः' (ऋ० २-७-१५) इत्यादावन्तोदात्तत्वमाहुः। यथातु 'मन्क्तिन्०' (पा० ६-२-१५१) इत्यादौ वृत्तावुक्तं तथैव तन्न घटत इति लक्ष्यते। तत्र हि 'कारकाद्दत्तश्रुतयोरेवाशिषि' (पा० ६-२-१४८) इत्यतः कारकपदानुवृत्तेः पाणिनिकृतिरित्यादावेव 'मन्क्तिन्०' (पा० ६-२-१५१) इत्यादिसूत्रमित्युक्तम्। तथा कारकादित्येव। 'प्रकृतिः प्रहृति'रिति प्रत्युदाहृतम् (का० ६।२।१५१)। स्यादेतत्। स्तूयतेऽनयेति स्तुतिरिति क्तिना करणभूतमभिधीयते। सुशब्देन च करणमेव विशेष्यते न धात्वर्थः। तथाच सुष्टुतिरित्यत्र सुशब्दः कारकपर एव भविष्यति। प्रकृतिः प्रहृतिरित्यादौ तु प्रशब्दो धात्वर्थं विशेषमेवेति तत्प्रत्युदाहरणोपपत्तिरिति। न। एवं सति सुशब्दस्य 'क्रियायोगाभावाद्'उपसर्गाः क्रियायोगे'(पा० १-४-५९)इत्युक्तोपसर्गसञ्ज्ञा न स्यात्। तथाचोपसर्गात्सुनोतिसुवति०' (पा० ८-३-६५) इत्यादिना षत्वं न स्यात्। ननु क्तिना करणमभिधीयते। क्रियासाधनं च करणम्। तथाच करणविशेषणस्यापि सुशब्दस्य करणान्तर्गतक्रियायोगादुपसर्गता भविष्यतीति। न। तथा सति 'यत्क्रियायुक्तास्तं प्रत्युपसर्गसञ्ज्ञकाः' (पा० वा० १-४-५९)इति करोत्यर्थमेव प्रति सोरुपसर्गता नतु स्तुधात्वर्थं प्रतीत्यस्य षत्वं न स्यादेव। ननु स्तुधात्वर्थद्वारैव तत्करणस्य सुशब्दो विशेषणं भविष्यति। या हि शोभना स्तुतिस्तत्करमपि शोभनमेवेति। एवञ्च स्तुधात्वर्थसम्बन्धात्तं प्रत्युपसर्गत्वेन षत्वमपि भविष्यतीति वृत्त्यविरोधेन 'मन्क्तिन्०' (पा० ६-२-१५१) इत्यादिसूत्रस्य सुष्टुतिशब्दो विषयो भविष्यति। प्रकृतिः प्रहृतिरित्यत्र भावे क्तिन्निति प्रत्युदाहृतमिति। न, तत्र प्रशब्दस्य करणपरत्वम्। करणे क्तिन्नुदाहरणेऽपि धात्वर्थमात्रविशेषणतैव विवक्षिता न तद्द्वारा प्रत्ययार्थविशेषणतापीति तत्प्रत्युदाहरणोपपत्तिरिति। सुष्टुतिरित्यत्र तु क्तिन्नभिधेयकरणपर्यन्तं सुशब्दस्य व्यापार इत्युदाहरणतैव न प्रत्युदाहरणतेति। न, किमत्र सुशब्दः श्रुत्यैव प्रकृतिप्रत्ययार्थोभयविशेषणपरः, उत श्रुत्यैकं विशिनष्टि अर्थादितरदिति। यदाप्युभयपरत्वं तदापि यौगपद्येनोत क्रमेणेति। आद्ये प्रतिविशेष्यं विशेषणपदावृत्तिरिति प्रसङ्गः। द्वितीये विरम्य व्यापारापातः। न च शब्दबुद्धिकर्मणां विरम्य व्यापारः कस्यचिद् दृष्ट इष्टो वा। अतो न श्रुत्योभयपरत्वम्। अथैकत्र श्रुत्या तात्पर्यमितरत्रत्वर्थादिति। तत्र धात्वर्थसम्बन्धस्यार्थिकत्वे षत्वासिद्धिः। प्रत्ययार्थसम्बन्धस्यार्थिकत्वे 'मन्क्तिन्०' (पा० ६-२-१५१) इत्यादिस्वरासिद्धिः। आर्थिकेनापि कारकसम्बन्धेनोदाहरणत्वाभिधाने प्रकृतिःप्रहृतिरित्यादि प्रत्युदाहरणं न स्यात्। श्रुत्या धात्वर्थमात्रसम्बन्धस्यापि प्रशब्दस्यार्थात्तत्करणसम्बन्धः केन वारयितुं शक्यत इत्येषा दिक्। अत इह प्रत्ययार्थमात्रसम्बन्धपरत्वाङ्गीकारेण स्वरः सिध्यतु षत्वं तु च्छान्दसमस्तु। शोभना स्तुतिर्यस्यामिति

बहुव्रीहिर्वा भवतु। एवञ्च 'नञ्सुभ्याम्' (पा० ६-२-१७२) इत्यन्तोदात्तत्वं भविष्यति। अथवा सुष्ठु स्तुवन्तीति सुष्टुतय इति करणभूता ऋचः सुष्टुतिशब्देनोच्यन्ते। 'क्तिच्क्तौ च सञ्ज्ञायाम्' (पा० ३-३-१७४) इति क्तिच्प्रत्यये सति चित्त्वादन्तोदात्तत्वं भविष्यति। न च करणीभूतानामृचां कर्तृप्रत्ययेन क्तिचा कथमभिधानमिति वाच्यम्। काष्ठानि पचन्तीति-वत्तासामपि स्वव्यापारविवक्षया कर्तृत्वोपपत्तेरिति ॥७॥

अष्टमीमृचमाह। वृषा—कामानां वर्षितेन्द्र ओजसा—स्वकीयबलेनानुग्रहीतुं कृष्टीर्मनुष्यानियर्ति—प्राप्नोति। कीदृश इन्द्रः? ईशानः—समर्थः। अप्रतिष्कुतः—प्रतिशब्द-रहितः। याच्यमानं न परिहरतीत्यर्थः। इन्द्रस्य दृष्टान्तः—वंसगो वननीयगतिर्वृषभो यूथेव गोयूथानि यथा प्राप्नोति तद्वत्। वृषा। 'कनिन्युवृषितक्षिराजिधन्विद्युप्रतिदिवः' (उ० १-१५५) इति वर्षतेः कनिन्प्रत्ययः। कित्त्वाद् गुणाभावः। नित्त्वादाद्युदात्तः। यूथा इव। यु॒वन्ति मिश्रीभवन्तीति यूथानि। यु मिश्रणामिश्रणयोः। 'तिथपृष्ठगूथयूथप्रोथाः' (उ० २-१२) इति थक्प्रत्ययान्तो निपातितः। निपातनाद्दीर्घत्वम्। प्रत्ययस्वरेणाकार उदात्तः। 'शेश्छन्दसि बहुलम्' (पा० ६-१-७०) इति लुक्। इवेन समासो विभक्त्यलोपः 'पूर्वपदप्रकृतिस्वरत्वं च वक्तव्यम्' (पा० वा० २-२-१८) इति समासेऽपि स एव स्वरः। वंसगः। पृषोदरादित्वादभिमतरूपस्वरसिद्धिः। कर्षन्तीति कृष्टयः। 'क्तिच्क्तौ च सञ्ज्ञायाम्' (पा० ३-३-१७४) इति क्तिच्। चित्त्वादन्तोदात्तः। इयर्ति। ऋ गतौ। तिप्। शपः श्लुः। 'श्लौ' (पा० ६-१-१०) इति द्विर्भावः। अभ्यासोरदत्वहलादिःशेषौ। 'अर्तिपिपर्त्योश्च' (पा० ७-४-७७) इत्यकारस्येकारः। 'अभ्यासस्यासवर्णे' (पा० ६-४-७८) इतीयङादेशः। अङ्गस्य गुणो रपरत्वम्। ओजसा। 'उब्जेर्बले बलोपश्च' (उ० ४-१९२) इत्यसुन्। तत्सन्नियोगेन बकारलोपः। लघूपधगुणः। नित्त्वादाद्युदात्तः। ईशानः। ईश ऐश्वर्ये। लटः शानच्। 'अदिप्रभृतिभ्यः शपः' (पा० २-४-७२) इति शपो लुक्। 'चितः' (पा० ६-१-१६३) इत्यन्तोदात्तत्वं बाधित्वाऽनुदात्तेत्त्वाल्लसार्वधातुकानुदात्तत्वेन धातुस्वर एव शिष्यते। अप्रतिष्कुतः—अप्रतिशब्दितः। कु शब्दे। कर्मणि क्तः। पारस्कारादेराकृतिगणत्वात्सुडागमः। सुषामादित्वात्षत्वम्। नञ्समासः। अव्ययपूर्वपदप्रकृति-स्वरत्वम् ॥८॥

नवमीमृचमाह। य इन्द्रः स्वयमेक एव चर्षणीनां मनुष्याणामिरज्यति—ईष्टे। तथा वसूनां धनानामिरज्यति। स इन्द्रः पञ्च निषादपञ्चमानां क्षितीनां—निवासार्हाणां वर्णानामनुग्रहीतेति शेषः। एकः। इण् गतौ। 'इण्भीकापाशल्यतिमर्चिभ्यः कन्' (उ० ३-४३) इति कन्। बाहुलकात्कलोपाभावः। नित्त्वादाद्युदात्तत्वम्। चर्षणीनाम्। प्रातिपदिक-स्वरेणान्तोदात्तः। 'अन्तोदात्ताद्०' (पा० ६-१-१६९) इत्यनुवृत्तौ 'नामन्यतरस्याम्' (पा० ६-१-१७७) इति विभक्तेरुदात्तत्वम्। वसूनाम्। '०नित्' (उ० १-९) इत्यनुवृत्तौ 'शृस्वृस्निहित्रप्यसिवसिहनिक्लिदिबन्धिमनिभ्यश्च' (उ० १-१०) इत्युप्रत्ययः। नित्त्वादाद्यु-दात्तः। इरज्यति। कण्ड्वादिष्विरज् ईर्ष्यायाम्—अत्रैश्वर्यार्थः। 'कण्ड्वादिभ्यो यक्' (पा० ३-१-२७)। प्रत्ययस्वरेणोदात्तः। पञ्च। पचि व्यक्तीकरणे। पञ्चेश्चेति

कनिन्। नित्त्वादाद्युदात्तः। क्षितीनाम्। प्रातिपदिकस्वरेणान्तोदात्तः। 'नामन्यतरस्याम्' (पा० ६-१-१७७) इति विभक्तेरुदात्तत्वम् ॥९॥

आश्विनं शंसिष्यन्निन्द्रं वो विश्वतस्परीति जुहुयात्। [193]'संस्थितेष्वाश्विनाय स्तुवत' इति खण्डे 'बण्महाँ असि सूर्येति द्वाभ्यामिन्द्रं वो विश्वतस्परि' (आ० श्रौ० ६-५) इति सूत्रितम्। [194]चतुर्विंशेऽहनि प्रातःसवने ब्राह्मणाच्छंसिन इन्द्रं वो विश्वतस्परीत्यारम्भणीया। चतुर्विंश इत्युपक्रम्य 'ऋजुनीती नो वरुण इन्द्रं वो विश्वतस्परि' (आ० श्रौ० ७-२) इति सूत्रितम्।

तामेतां दशमीमृचमाह। हे ऋत्विग्यजमानाः। विश्वतः सर्वेभ्यो जनेभ्यः परि—उपर्यवस्थितमिन्द्रं वो युष्मदर्थं हवामहे—आह्वयामः। अतः स इन्द्रोऽस्माकं केवलोऽसाधारणोऽस्तु। इतरेभ्योऽप्यधिकमनुग्रहमस्मासु करोत्वित्यर्थः। इन्द्रम्। रन्प्रत्ययान्तो नित्त्वादाद्युदात्तः। वः। 'अनुदात्तं सर्वमपादादौ' (पा० ८-१-१८) इत्यनुवृत्तौ बहुवचनस्य 'वस्नसौ' (पा० ८-१-२१) इति वस्। विश्वतः। 'लिति' (पा० ६-१-१९३) प्रत्ययात्पूर्वमुदात्तम्। परि। निपातत्वादाद्युदात्तः। संहितायां 'पञ्चम्याः परावध्यर्थे' (पा० ८-३-५१) इति विसर्जनीयस्य सत्वम्। हवामहे। ह्वेञः शपि 'बहुलं छन्दसि' (पा० ६-१-३४) इति संप्रसारणम्, परपूर्वत्वम्, गुणावादेशौ। जनेभ्यः। जन्यन्त इति जनाः। जनयतेः कर्मणि घञ्। 'जनिवध्योश्च' (पा० ७-३-३५) इत्युपधाया वृद्ध्यभावः। ञित्त्वादाद्यु-

---

[193] अतिरात्रसंस्थाकज्योतिष्टोमे रात्रिस्तोत्राणां त्रिषु पर्यायेषु तदनुसारं शस्त्रेषु च समाप्तेषूद्गातारः सन्धिस्तोत्रं कुर्युः। सन्धिसाम्ना क्रियमाणं स्तोत्रं सन्धिस्तोत्रम्। अहोरात्रयोस्सन्धौ क्रियमाणं स्तोत्रं सन्धिस्तोत्रमित्यपि ताण्ड्यमहाब्राह्मण उक्तम्। अत्र अग्निरुषा अश्विनौ चेति देवताः। अश्विनसम्बन्धादाश्विनस्तोत्रमित्यपि व्यवहारः। एतत्स्तोत्रमनु होता यच्छस्त्रं शंसति तदाश्विनशस्त्रं भवति। तदिदमाश्वलायनो वदति—'संस्थितेष्वाश्विनाय स्तुवते' इति। अनेन सूत्रेणाश्विनशस्त्रारम्भकालं सूत्रकारो निर्दिशति—उद्गातृभिः सन्धिस्तोत्रे समारब्धे होता स्वीयमाश्विनशस्त्रमारभेतेति। अतिरात्रसंस्थायां प्रायो रात्रेः तृतीयभागे रात्रिस्तोत्रपर्यायाणां समाप्तिर्भवति। तदूर्ध्वं होता सूर्योदयपर्यन्तमाश्विनशस्त्रं समापयेत्। सूर्योदयात्पूर्वं यदीदं शस्त्रं समाप्तं स्यात्तर्हि 'यस्याश्विने शस्यमाने सूर्यो नाविर्भवति सर्वा दाशतयीरनुब्रूयात्' (आप. श्रौ. १४.२४.१,२.) इति विध्यनुसारं मन्त्रान् शंसेत्। शस्त्रस्यास्यारम्भात्पूर्वं होता आग्नीध्रीयेऽग्नौ जान्वाच्य पञ्चाहुतीराज्येन जुहुयात्। तत्रान्तिमाहुतिः 'इन्द्रं वो विश्वतस्परि' इति मन्त्रेण कर्तव्या। इमा आहुतीर्हुत्वा आज्यशेषं सम्प्राश्याश्विनशस्त्रं स्वस्थानमागत्य प्रारभेतेति प्रकृतसन्दर्भार्थः।

[194] गवामयने चतुर्विंशाख्ये द्वितीयदिने होत्रकाः प्रातस्सवने स्वस्वशस्त्रशंसनात्पूर्वं स्तोत्रियमनुरूपञ्च तृचं पठित्वा आरम्भणीयसंज्ञका ऋचः पठेयुः। तत्र मैत्रावरुणस्य 'ऋजुनीती नो वरुण' इति, ब्राह्मणाच्छंसिनः—'इन्द्रं वो विश्वतस्परि' इति, अच्छावाकस्य—'यत्सोम आसुते नर' इति च ऋच आरम्भणीयसंज्ञका विहिताः। अत्रारम्भणीयापदं संज्ञामात्रमेव बोधयति।

दात्तत्वम् । अस्माकम् । अस्मच्छब्दोऽन्तोदात्तः । 'शेषे लोपः' (पा० ७-२-९०) इत्यन्तलोपपक्षे 'साम आकम्' (पा० ७-१-३३) इत्याकारेणैकादेश उदात्तः । टिलोपपक्षे उदात्तनिवृत्तिस्वरेणाकार उदात्तः । केवलः । वृषादेराकृतिगणत्वादाद्युदात्तः ॥१०॥

इति प्रथमस्य प्रथमे चतुर्दशो वर्गः । प्रथममण्डले द्वितीयोऽनुवाकः ।

॥८॥

१.८

तृतीयानुवाके चत्वारि सूक्तानि । तत्रैन्द्र सानसिमित्यादिकं प्रथमं दशर्चं सूक्तं सुरूपकृत्नुमित्यादिषु षट्सु पञ्चमम् । ऋष्यादयस्तु पूर्ववत् । विशेषविनियोगस्तु [195]महाव्रते निष्केवल्यशस्त्रे औष्णिहतृचाशीतौ एन्द्र सानसिं रयिमित्यादिके द्वे सूक्ते । पञ्चमारण्यके औष्णहीतृचाशीरितिखण्डे शौनकेन सूत्रितम् । 'सुरूपकृत्नुमूतय त्रीण्यैन्द्र सानसिं रयिमिति द्वे' (ऐ० आ० ५) इति । [196]अतिरात्रे प्रथमे पर्यायेऽच्छावाकशस्त्रे एन्द्र सानसिमिति सूक्तम् सूत्रितञ्च । 'इन्द्रमिद्गाथिनो बृहदेन्द्र सानसिम्' (आ० श्रौ० ६-४) इति । [197]दर्शयागे इन्द्र-

---

[195] प्राक्तनटिप्पण्यां विनियोगोऽयं विवृतः ।

[196] अस्यापि विवरणं पूर्वटिप्पण्यां द्रष्टव्यम् ।

[197] दर्शयागे । 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति वाक्येन दर्शपूर्णमासयागौ विहितौ । इमावाहिताग्नेर्नित्यौ भवतः । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्येन काम्यरूपेणापि तौ विहितौ । आधानसिद्धाग्निमताम् अध्ययनविधिसिद्धज्ञानवतां सामर्थ्यवताञ्च त्रैवर्णिकानां सपत्नीकानामत्राधिकारः । इमौ यागावाधानानन्तरमेवाहिताग्निना कर्तुं शक्येते, अथवा-आधानानन्तरमेव 'सोमेन यक्ष्ये' इति संकल्प्याग्निष्टोमसंस्थाकं ज्योतिष्टोममनुष्ठाय प्राप्ते पर्वणि तत्रेमावनुष्ठातुं शक्येते । इदमेव प्रकारद्वयम् इष्टिपूर्वत्वसोमपूर्वत्वशब्दाभ्यां व्यवह्रियते सूत्रकारैः । अस्मिन् यागे चत्वार ऋत्विजो भवन्ति—अध्वर्युः होता ब्रह्मा आग्नीध्रश्चेति । अयं दर्शपूर्णमासयागः सर्वासामिष्टीनां काम्यानां नित्यानाञ्च प्रकृतिभूतः परिगण्यते । यत्र स्वापेक्षितानां निखिलानामङ्गानामुपदेशस्तत्र प्रकृतिरिति व्यवहारः । इष्टिशब्देन ते यागा उच्यन्ते ये ओषधिप्रभवैर्व्रीहियवनीवारप्रभृतिभिर्द्रव्यैः, पयसा दध्नाऽऽमिक्षया वानुष्ठीयन्ते । यागशब्दो व्यापकवाची, इष्टिशब्दस्तु व्याप्यवाची । अतो दर्शपूर्णमासेष्टिः दर्शपूर्णमासयाग इति व्यवहारो भवति । प्रकृतीष्टिः द्व्यहसाध्या भवति—पूर्णिमामारभ्य तदनन्तरप्रतिपदि क्रियमाणा पौर्णमासेष्टिः, दर्शमारभ्य तदनन्तरप्रतिपदि समाप्यमाना दर्शेष्टिरिति । विकृतीष्टयस्तु सद्यस्काला एव ।

तत्र पूर्णिमायां त्रयः प्रधानयागाः—आग्नेयः (अग्निदेवताकोऽष्टाकपालपुरोडाशद्रव्यकः) उपांशुयाजः (विष्णु-प्रजापत्याग्नीषोमदेवतास्वन्यतमदेवताकः) अग्नीषोमीयः (अग्नी-

याजिनः साम्नाय्यस्यानुवाक्या—'एन्द्र सानसिं रयिमि'ति। उक्ता देवता इत्यस्मिन् खण्डे 'एन्द्र सानसिं रयिं, प्र ससाहिषे पुरुहूत शत्रून्' (आ० श्रौ० १-६) इति सूत्रितम्।

तास्वेतां प्रथमामृचमाह। हे इन्द्र। ऊतयेऽस्मद्रक्षार्थं रयिं धनमाभर—आहर। कीदृशं रयिम्? सानसिम्—सम्भजनीयम्। सजित्वानम्—समानशत्रुजयशीलम्। धनेन हि शूरान्भृत्यान्सम्पाद्य शत्रवो जीयन्ते। सदासहम्—सर्वदा शत्रूणामभिभवहेतुम्। वर्षिष्ठम्—अतिशयेन वृद्धम्, प्रभूतमित्यर्थः। सानसिम्। वन षण सम्भक्तौ इत्यस्मादसिप्रत्ययो वृद्धिरन्तोदात्तत्वं च 'सानसिवर्णसि०' (उ० ४-१०९) इत्यादिना निपात्यते। रयिम्। प्रातिपदिकस्वरेणान्तोदात्तः। सजित्वानम्। समानानरीञ्जेतुं शीलमस्य। 'अन्येभ्योऽपि दृश्यन्ते' (पा० ३-२-७५) इति क्वनिप्। उपपदसमासः। 'समानस्य च्छन्दस्यमूर्धप्रभृत्युदर्केषु' (पा० ६-३-८४) इति समानस्य सभावः। कृदुत्तरपदप्रकृतिस्वरेण धातुस्वर एव शिष्यते। वर्षिष्ठम् वृद्धशब्दादतिशायने 'तमबिष्ठनौ' (पा० ५-३-५५) इतीष्ठन्। 'प्रियस्थिर०' (पा० ६-४-१५७) इत्यादिना वृद्धशब्दस्य वर्षादेशः। इष्ठनो नित्त्वादाद्युदात्तत्वम्। ऊतये। '०उदात्तः' (पा० ३-३-९६) इत्यनुवृत्तौ 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (पा० ३-३-९७) इत्यनेन क्तिन्नुदात्तो निपातितः। भर। 'हृग्रहोर्भश्छन्दसि' (पा० वा० ८-२-३२) इति हकारस्य भकारः। 'ते प्राग्धातोः' (पा० १-४-८०) इति धातोः प्राक् प्रयोक्तव्यस्याङो 'व्यवहिताश्च' (पा० १-४-८२) इति छन्दसि व्यवहितप्रयोगः॥१॥

द्वितीयामृचमाह। येन धनेन संपादितानां भटानां नि मुष्टिहत्यया—नितरां मुष्टिप्रहारेण वृत्रा शत्रून्निरुणधामहै—निरुद्धान्करवाम। तादृशं धनमावहेत्यर्थः। त्वोतासस्त्वया रक्षिता वयमर्वताऽस्मदीयेनाश्वेन निरुणधामहा इत्यनुषङ्गः। पदातियुद्धेनाश्वयुद्धेन च शत्रून् विनाशयामेत्यर्थः। मुष्टिहत्यया। 'हनस्त च' (पा० ३-१-१०८) इति सुबन्त उपपदे क्यप्। तत्सन्नियोगेन नकारस्य तकारः। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते 'परादिश्छन्दसि बहुलम्' (पा०६-२-१९९)

---

सोमदेवताक एकादशकपालपुरोडाशद्रव्यकः) इति दर्शेऽपि त्रयः प्रधानयागाः—आग्नेयः, ऐन्द्र दधियागः, ऐन्द्रपयो यागश्चेति। दधिपयोयागयोरेव सान्नाय्यमिति नामान्तरम्। अस्मिन् सान्नाय्ययागे कृतसोमयागस्यैवाधिकारः। अकृतसोमयागो यदि दर्शयागं कुर्यात्तर्हि सान्नाय्यस्थाने ऐन्द्राग्नयागं (इन्द्राग्निदेवताकमेकादशकपालपुरोडाशद्रव्यकम्) कुर्यादिति स्थितिः। एवञ्च दर्शयागे—'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति वाक्यविहिते दर्शमारभ्य प्रतिपदि समाप्यमाने यागे, इन्द्रयाजिनः—कृतसोमयागस्य यजमानस्य, सान्नाय्यस्य—दधिपयोयागस्य, अनुवाक्या- 'इन्द्रायानुब्रूहि' इति प्रैषसमनन्तरं होत्रा पठ्यमानो मन्त्रः, 'एन्द्र सानसिं रयिम्' इत्यानुपूर्वीघटितः इति विनियोगवाक्यस्यार्थः। अत्र दधि पयश्चेति द्रव्यभेदेऽपि इन्द्रस्य देवताया एकत्वादुभयोर्द्रव्ययोर्मेलनेन प्रदानमेकमेव भवति, किन्तु यागद्वयं परिगण्यत इत्यवधेयम्। आश्वलायनश्रौतसूत्रे प्रथमप्रतीकेन गृहीतो मन्त्रः—'एन्द्र सानसिं रयिम्' इति पुरोनुवाक्या, द्वितीयप्रतीकेन गृहीतः—'प्रससाहिषे पुरुहूत शत्रून्' इति याज्यामन्त्र इत्यवगन्तव्यम्।

इति बहुलग्रहणेन त्रिचक्रेणाप्यन्तोदात्तत्वाभिधानादन्तोदात्तत्वम् । नि । आख्यातसम्बन्धस्यापि नेरुपसर्गस्य 'व्यवहिताश्च' (पा० १-४-८२) इति व्यवहितप्रयोगः । वृत्रा । 'शेश्छन्दसि बहुलम्' (पा० ६-२-७०) इति शेर्लोपः । नलोपः । [197a]रुणधामहै । आट्संयोगेन पित्वात् 'श्नसोरल्लोपः' (पा० ६-४-१११) इत्यकारलोपो न भवति । पित्वादेव च आख्यातस्यानुदात्तत्वेन विकरणस्य श्नम एवोदात्तत्वं शिष्यते । ननु 'तिङ्ङतिङः' (पा० ८-१-२८) इति निघातेन भवितव्यम् । न; द्वे ह्यत्र तिङ्विभक्ती । निविडया मुष्ट्या निरुणधामहा इत्यत्र मुख्या श्रुतैका । अर्वता निरुणधामहा इत्यत्रानुषक्ता द्वितीया । तयोः समुच्चयार्थश्चकारो लुप्यते । तेन 'चादिलोपे विभाषा' (पा० ८-१-६३) इति प्रथमेयं तिङ्विभक्तिर्न निहन्यते । यथा 'नात्मना तृप्यति नान्यस्मै ददाती'त्यत्र (तै० सं० २।५।४।३) हि समुच्चयार्थस्य चशब्दस्य लोपात्तृप्यतीति प्रथमा तिङ्विभक्तिर्न निहन्यते ददातीति द्वितीया तु निहन्यत एव । ननु तत्र द्वे तिङ्विभक्ती श्रूयेते, इह पुनरेकैव श्रुता । सैवोत्तरत्रानुषज्यते नान्या श्रूयत इति द्वितीयाभावात्कथमियं प्रथमा । न; अनुषङ्गलब्धद्वितीयापेक्षमपि प्राथम्यमुपजीव्य निघातनिषेधदर्शनात् । 'पुरोडाशं चाधिश्रयत्याज्यञ्च' 'प्रोक्षणीश्चासादयत्याज्यञ्च' (तै० सं० १-६-९-३-४) । इत्यत्र ह्यधिश्रयत्यासादयतीत्याख्यातयोः प्रथमवाक्यद्वयश्रुतयोरुत्तरवाक्यद्वयेऽनुषङ्गमपेक्ष्यैव प्राथम्यस्वीकारेण 'चवायोगे प्रथमा' (पा० ८-१-५९) इति निघातनिषेधो दृष्ट इति । त्वयोता रक्षितास्त्वोतासः[198] । 'प्रत्ययोत्तरपदयोश्च' (पा० ७-२-९८) इति मपर्यन्तस्य त्वादेशो दकारलोपश्छान्दसः ।

---

[197a] रुणधामहै । रुध् धातोः श्नम् । तस्य शकारमकारयोरित्संज्ञायां लोपे मित्त्वादन्त्यादचः परं निवेशः-रु न ध इति । लोडुत्तमपुरुषबहुवचने महिङ् । ङकारस्येत्संज्ञायां लोपे 'आडुत्तमस्य पिच्च' इत्याटि रुन ध् आ महि इति स्थिते 'टित आत्मनेपदानां टेरे' इत्येत्वे, तस्य च 'एत ऐ' इत्यैत्वे, 'अट्कुप्वाङ्' इत्यादिना नस्य णत्वे रुणधामहै इति रूपम् । अत्र श्नमो विकरणस्य प्रत्ययाद्युदात्तस्वरः रुणधामहै इति । मन्त्रे इदं क्रियापदम् 'अर्वता' इत्यत्राप्यनुषज्यते । तेन 'मुष्टिहत्यया निरुणधामहै अर्वता च निरुणधामहै' इति वाक्यद्वयं सम्पद्यते । तत्र समुच्चयार्थकस्य चकारस्य लोपे 'चादिलोपे विभाषा' इत्यनेन प्रथमस्य तिङन्तस्य निघातो निवर्तते । अतः 'तिङ्ङतिङः' इति न प्रवर्तते । तिङन्तस्य प्रथमत्वं द्वितीयमपेक्ष्यैव भवति, नात्र द्वितीयं श्रूयते, कथं तर्हि 'चादिलोपे विभाषा' इति सूत्रं प्रवर्तेत इति प्रश्ने, अनुषङ्गेण लब्धं द्वितीयमादायापि प्रथमत्वसम्भवान्निघातनिषेधोपपत्तिरिति समाहितिः । यथा-'नात्मना तृप्यति नान्यस्मै ददाति' इत्यत्र समुच्चयार्थकलुप्तचकारमादाय 'चादिलोपे विभाषा' इत्यनेन प्रथमतिङन्तस्य 'तृप्यति' इत्यस्य न निघातः, यथा वा-पुरोडाशञ्चाधिश्रयत्याज्यञ्च' 'प्रोक्षणीश्चासादयत्याज्यञ्च' इत्यत्र चकारबलेनाधिश्रयत्यासादयत्योरनुषङ्गेण द्वितीयत्वमाश्रित्य वाक्यद्वयेऽपि प्रथमतिङन्तयोः पदयोः 'चवा योगे प्रथमा' इति निघातनिषेधः, तथा प्रकृतेऽपीति ।

[198] त्वो तासः । युष् इति सौत्रो धातुः । तस्यौणादिकेन मदिक् प्रत्ययेन युष्मद् इति शब्दो निष्पद्यते । तस्य 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण मपर्यन्तस्य त्व इत्यादेशः, बाहुलिको दकारलोपः । त्व इति स्थितम् । अव् धातोः कर्मणि निष्ठाप्रत्ययः । अव्

अवतेर्निष्ठायामिडभावश्च। 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' (पा० ६-४-२०) इत्यूठ्। 'एत्येधत्यूठ्सु' (पा० ६-१-८९) इति वृद्ध्यभावश्छान्दसः। 'तृतीया कर्मणि' (पा० ६-२-४८) इति पूर्वपदप्रकृतिस्वरेणाकार उदात्तः। 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इत्युदात्तः। अर्वता। अर्वति गच्छतीत्यर्थः। अर्व गतौ। 'अन्येभ्योऽपि दृश्यन्ते' (पा० ३-२-७५) इति वनिप्प्रत्ययः। 'नेड्वशि कृति' (पा० ७-२-८) इतीट्प्रतिषेधः। 'लोपो व्योर्वलि' (पा० ६-१-६६) इति वकारलोपः। 'अर्वणस्त्रसावनञः' (पा० ६-४-१२७) इति तकारः। वनिपः पित्त्वाद्धातुस्वर एव ॥२॥

तृतीयामृचमाह। हे इन्द्र त्वोतासस्त्वया पालिता वयं घना घनं शत्रुप्रहरणायात्यन्तं दृढं वज्रमायुधमाददीमहि—स्वीकुर्मः। तेन च वज्रेण युधि युद्धे स्पृधः स्पर्द्धमानाञ्छत्रून्त्सञ्जयेम—सम्यग्जयेम। त्वोतासः। उक्तम्। वज्रम्। वज व्रज गतौ। 'ऋज्रेन्द्राग्र०' (उ० २-३१) इत्यादिना रन्प्रत्ययान्तो निपातितः। घना। घनः काठिन्यम्। तदस्यास्तीत्यर्शआदित्वादच्। चित्त्वादन्तोदात्तः। 'सुपां सुलुक्०' (पा० ७-१-३९) इति डादेशः। ददीमहि। डु दाञ् दाने। प्रार्थनायां लिङ्। क्रियाफलस्य कर्तृगामित्वात् 'स्वरितञितः०' (पा० १-३-७२) इत्यात्मनेपदो-त्तमपुरुषबहुवचनं महिङ। जुहोत्यादित्वाच्छपः श्लुः। 'श्लौ' (पा० ६-१-१०) इति द्विर्भावः। लिङः 'सलोपोऽनन्त्यस्य' (पा० ७-२-७९) इति सलोपः। 'श्नाभ्यस्तयोरातः' (पा० ६-४-११२) इत्याकारलोपः। जयेम। शपः पित्त्वादनुदात्तत्वम्। तिङश्च लसार्वधातुकस्वराद्धातुस्वर एव शिष्यते। 'छन्दसि परेऽपि' (पा० १-४-८१) इति समः परः प्रयोगः। युधि 'युध संप्रहारे'। सम्पदादित्वाद्भावे क्विप्। 'सावेकाचः०' (पा० ६-१-१६८) इति विभक्तेरुदात्तत्वम्। स्पर्धन्त' इति स्पृधः। स्पर्ध सङ्घर्षे। 'क्विप् च' (पा० ३-२-७६) इति क्विप्। 'बहुलं छन्दसि' (पा० ६-१-३४) इति रेफस्य सम्प्रसारणमृकारः। अकारलोपश्च ॥३॥

चतुर्थीमृचमाह। वयं कर्मानुष्ठातारः शूरेभिः शौर्ययुक्तैरस्तृभिरायुधानां प्रक्षेप्तृभिर्भटैः संयुज्येमहीति शेषः। हे इन्द्र तादृशभटसहिता वयं युजा सहायभूतेन त्वया पृतन्यतः सेनामिच्छतः शत्रून् सासह्याम—अतिशयेनाभिभवेम। शूरेभिः। शु श्वु गतौ। '०क्रन्' (उ० २-२७) इत्यनुवृत्तौ 'शुसिचिमीनां दीर्घश्च' (उ० २-२८) इति क्रन्। कित्त्वाद्गुणाभावः। नित्त्वादाद्यु-दात्तत्वम्। 'बहुलं छन्दसि' (पा० ७-१-१०) इत्यैसो निषिद्धत्वाद् 'बहुवचने झल्येत्' (पा०

---

त इत्यत्र 'ज्वरत्वर०' इत्यादिना धात्ववयवयोरकारवकारयोः ऊठि ऊत शब्दः। त्व ऊते-त्यत्र अकारऊकारयोर्गुणैकादेशे त्वोतशब्दः। तस्य प्रथमाबहुवचने जस्, तस्य 'आज्जसेरसुक्' इत्यसुकि त्वोत अस् अस् इति स्थिते सवर्णदीर्घे त्वोतासस् इति जाते सकारस्य रुत्वविसर्गौ, त्वोतासः इति रूपम्। अत्र त्वऊत इत्यनयोः 'एत्येधत्यूठ्सु' इति वृद्ध्यभावश्छान्दसः। त्वया ऊतासः इति तृतीया समासे 'तृतीया कर्मणि' (कर्मवाचके क्तान्ते परे तृतीयान्तं प्रकृत्या स्यात्) इति पूर्वपदप्रकृतिस्वरः। पूर्वञ्च पदं त्व इति। तस्य प्रातिपदिकस्वर उदात्तः। अकारस्य ऊकारस्य च गुणैकादेशे 'एकादेश उदात्तेनोदात्तः' इत्युदात्त एव-त्वोतासः इति स्वरसिद्धिः।

७-३-१०३) इत्यत्वम्। सहयोगे तृतीयाबलाद्वयमित्यस्मत्पदसमभिव्याहाराच्च वयं संयुज्येमहीति गम्यम्। विनापि सहशब्देन 'वृद्धो यूना०' (पा० १-२-६५) इति निपातनादिति ह्युक्तम्। अस्तृभिः—शस्त्रास्त्रप्रक्षेपणशीलैः। तद्धर्मभिस्तत्साधुकारिभिर्वा। असु क्षेपणे। 'तृन्' (पा० ३-२-१३५) इति ताच्छील्यादिषु तृन्। नित्वादाद्युदात्तः। 'रधादिभ्यश्च' (पा० ७-२-४५) इति विकल्पविधानादयं पक्षे इडभावः। वस्तुतस्तु रधादावभावात् 'तृन्तृचौ शंसिक्षदादिभ्यः' (उ० २-९०) इत्यनेनानिट् तृन्। त्वया। 'युष्यसिभ्यां मदिक्' (उ० १-१३७)। कित्त्वाद्गुणाभावः। युष्मदः प्रत्ययस्वरेणाकार उदात्तः। तृतीयैकवचनं टा। 'त्वमावेकवचने' (पा० ७-२-९७) इति मपर्यन्तस्य त्वादेशः। 'अतो गुणे' (पा० ६-१-९७) इति पररूपत्वम्। 'एकादेश उदात्तेनोदात्तः' (पा० ७-२-५) इत्युदात्तः। युजा। '०अञ्चुयुजिक्रुञ्चाञ्च' (पा० ३-२-५९) इति क्विन्। 'सावेकाचः०' (पा० ६-१-१६८) इति विभक्तेरुदात्तत्वम्। [199]सासह्याम। भृश पुनः पुनः सहेमहि। षह मर्षणे। 'धात्वादेः षः सः' (पा० ६-१-६४)। 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' (पा० ३-१-२२)। 'यङोऽचि च' (पा० २-४-७४) इति लुक्। 'सन्यङोः' (पा० ६-१-९) इति द्विर्भावः। 'हलादिः शेषः' (पा० ७-४-६०) 'दीर्घोऽकितः' (पा० ७-४-८३) इति दीर्घः। प्रार्थनायां लिङ्। 'चर्करीतं च' (पा० ग० २) परस्मैपदमदादिवच्च द्रष्टव्यम् इति परस्मैपदोत्तमपुरुषबहुवचनं मस्। 'कर्तरि शप्' (पा० ३-१-६८)। अदादिवद्भावाल्लुक्। 'नित्यं ङितः' (पा० ३-४-९९) इत्यन्त्यसकारलोपः। 'यासुट् परस्मैपदेषूदात्तो ङिच्च' (पा० ३-४-१०२) इति यासुट्। लिङः 'सलोपोऽनन्त्यस्य' (पा० ७-२-७९) इति सकारलोपः। सति शिष्टत्वाद्यासुट एवोदात्तत्वं शिष्यते। पादादित्वान्न निघातः। [200]पृतन्यतः। योद्धुं पृतनामात्मन इच्छतः। 'सुप आत्मनः क्यच्' (पा० ३-१-८) इति

---

[199] सासहाम। षहधातुः। 'धात्वादेःषः सः' इति षस्य सत्वम्। एकाच्कत्वाद्धातोः पौनःपुन्ये द्योत्ये यङ्। तस्य छान्दसो लुक्। 'सन्यङोः' इत्यनेन द्वित्वे सह् सह इति स्थितेऽभ्यासकार्यं 'हलादिः शेषः' इति। ततः 'दीर्घोऽकितः' इति प्रथमाकारस्य दीर्घे सा सह् इति जाते प्रार्थनायां लिङि उत्तमपुरुषबहुवचने मसि, शपि तस्य लोपे 'नित्यं ङितः' इति प्रत्ययसकारलोपे सा सह् म इति स्थिते यासुटि सा सह् यास् म इति दशायां 'सलोपोऽनन्त्यस्य' इति यासुटस्सकारलोपे सासहाम इतिरूपम्। अत्र यासुटः प्रत्ययस्य प्रत्ययस्वरे 'अनुदात्तं पदमेकवर्जम्' इति पूर्वयोरनुदात्तः, उत्तरस्य मकाराकारस्य लसार्वधातुकानुदात्तस्योदात्तात्परस्य स्वरितः– सासहाम इति स्वराः।

[200] पृतन्यतः। पृतनामात्मन इच्छतीत्यर्थे पृतनाशब्दात् क्यच्। ककारचकारयोरित्संज्ञायां लोपे यकारस्तिष्ठति। 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां पृतनां इत्यत्र सुपो लोपः–'सुपो धातुप्रातिपदिकयोः' इत्यनेन। पृतना य इति स्थितम्। 'कव्यध्वरपृतनस्यर्चि लोपः' (कवि-अध्वरपृतना इत्येषामन्त्यस्य लोपः क्यचि परे ऋग्विषये) इत्याकारलोपे पृतन्यशब्दः। ततो लट् तस्य च शत्रादेशः शप् च। पृतन्य अत् अ इति

क्यच्। 'सनाद्यन्ता धातवः' (पा० ३-१-३२) इति धातुसञ्ज्ञायां 'सुपो धातुप्रातिपदिकयोः' (पा० २-४-७१) इति सुपो लुक्। 'क्यचि च' (पा० ७-४-३३) इत्यनुवृत्तौ 'कव्यध्वरपृतनस्यर्चि लोपः' (पा० ७-४-३९) इत्याकारलोपः। पृतन्यधातुश्चित्त्वादन्तोदात्तः। उपरि लटः शत्रादेशः। 'कर्तरि शप्' (पा० ३-१-६८)। पित्त्वादनुदात्तत्वम्। शतुश्च लसार्वधातुकस्वरेण उदात्तेन सह 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इति पृतन्यच्छब्दोऽन्तोदात्तः। शसः सुप्स्वरेणानुदात्तस्य 'अन्तोदात्तात्०' (पा० ६-१-१६९) इत्यनुवृत्तौ 'शतुरनुमो नद्यजादी' (पा० ६-१-१७३) इत्युदात्तत्वम् ॥४॥

पञ्चमीमृचमाह। अयमिन्द्रो महान् शरीरेण प्रौढः परश्च गुणैरुत्कृष्टोऽपि। नु किञ्च वज्रिणे वज्रयुक्तायेन्द्राय महित्वं पूर्वोक्तं द्विविधमाधिक्यं सर्वदाऽस्तु। स्वभावसिद्धस्यापि भक्त्या प्रार्थनमेतत्। किञ्च। द्यौर्न—द्युलोक इव शवो बलमिन्द्रस्य सेनारूपं प्रथिना प्रथिम्ना पृथुत्वेन वृज्यतामिति शेषः। यथा द्युलोकः प्रभूत एवमस्य सेना प्रभूता। नुशब्दो यद्यपि क्षिप्रनामसु नु मक्षु (निघ० २-१२) इति पठितस्तथाप्यत्र तस्यान्वयाभावान्निपातत्वेनानेकार्थत्वसम्भवाच्च समुच्चयार्थोऽत्र गृहीतः। [201]नशब्दो लोके प्रतिषेधार्थ एव। स्वाध्याये तु प्रतिषेधार्थ उपमार्थश्चेति द्विविधः। येन पदेनान्वीयते तस्मात्पूर्वं प्रयुज्यमानः प्रतिषेधार्थः। उपरिष्टात् प्रयुज्यमान उपमानार्थः। तथाच यास्क उदाहरति—'उभयमन्वध्याय' नेन्द्रं

---

स्थितम्। अत्र पृतन्य इत्यस्य धातुत्वादन्तोदात्तस्वरः। तदूर्ध्वं शतुर्लसार्वधातुकत्वादनुदात्तत्वम्। अस्योदात्तेन सहैकादेशे 'एकादेश उदात्तेनोदात्तः' इत्युदात्तत्वे पृतन्यच्छब्दोऽन्तोदात्तः। ततश्शपः पित्त्वादनुदात्तत्वे पृतन्यत इति स्थितम्। ततो द्वितीयाबहुवचनस्य शस् प्रत्ययः। पृतन्यत अस् इति जाते असोऽकारस्य पूर्वरूपैकादेशे पृतन्यतस् इति दशायां 'शतुरनुमो नद्यजादी' इत्यनेन विभक्तेरुदात्तत्वे शेषनिघातेन सकारस्य रुत्वविसर्गाभ्यां पृतन्यतः इति स्वरास्सिध्यन्ति।

[201] नशब्दः। यास्कः 'अथ निपाताः' इत्यारभ्य 'उच्चावचेष्वर्थेषु निपतन्ति' इति तेषां नानाविधार्थप्रतिपादकत्वं निरूपयन् नशब्दस्य निपातस्यार्थद्वयं प्रदर्शितवान् प्रतिषेधार्थकत्वं न शब्दस्य भाषायाम्, उपमार्थकत्वं प्रतिषेधार्थकत्वञ्च तस्य वेद इति। प्रतिषेधार्थकत्वं कुत्र? कुत्र चोपमार्थकत्वमित्यावेदयितुं लक्षणमाह —प्रतिषेधार्थीय इति। नशब्दो यं प्रतिषेधति तस्मात्पूर्वं तस्य प्रयोगे प्रतिषेधार्थकत्वम्। तत्रोदाहरणम्—'नेन्द्रं देवममंसत' इति। अत्रेन्द्रनिष्ठदेवत्वस्य प्रतिषेधः कर्तव्यः। अतः पूर्वं नशब्दप्रयोग इत्यस्य प्रतिषेधार्थकत्वम्। एवम् 'उपमार्थीय' इत्यनेन द्वितीयस्य लक्षणमाह। येनार्थेन उपमेयमर्थमुपमिमीते स उपमार्थः। उपमार्थ एव उपमार्थीयः। तस्योपरिष्टान्नशब्दप्रयोगे तस्योपमार्थत्वम्। तत्रोदाहरणम्—'दुर्मदासो न सुरायाम्' इति। सुरायां पीतायां कुत्सितमदा यथा पातारं मादयन्ति तद्वत्सोमरसे पीतेऽपि मादकत्वं तस्येति प्रकृतोदाहरणार्थः। अत्र नशब्दस्योपरिष्टात्प्रयोगादुपमार्थकत्वम्।

देवममंसतेति प्रतिषेधार्थीयः। पुरस्तादुपाचारस्तस्य यत्प्रतिषेधति। दुर्मदासो न सुरायामित्युपमार्थीयः। उपरिष्टादुपाचारस्तस्य 'येनोपमिमीते' (नि० १-४) इति। अत्रोपमेयवाचिनो द्युशब्दस्यापि प्रयुक्तत्वादुपमार्थः स्वीकृतः। अष्टाविंशतिसङ्ख्याकेषु बलनामस्वोजः पाजः शवः (निघ० २-९) इति पठितम्। महानिति नकारस्य संहितायां 'दीर्घादटि समानपादे' (पा० ८-३-९) इति रुत्वम्। 'आतोऽटि नित्यम्' (पा० ८-३-३) इति पूर्वस्याकारस्यानुनासिकः। 'भोभगोअघोअपूर्वस्य योऽशि' (पा० ८-३-१७) इति यकारः। 'तस्य लोपः'। 'तस्यासिद्धत्वात्' स्वरसन्धिर्न भवति। 'महेरिन्' (उ० २-५७) इत्यौणादिक इन्। महेर्भावो महित्वम्। त्वमिति प्रत्ययस्वरेणोदात्तः। स एव शिष्यते। वज्रिणे। इकारः प्रत्ययस्वरेणोदात्तः। द्यौः। द्योशब्दः प्रातिपदिकस्वरेणान्तोदात्तः। 'गोतो णित्' (पा० ७-१-९०) इति विभक्तेर्णित्वात् 'अचो ञ्णिति' (पा० ७-२-११५) इति वृद्धिरान्तरतम्यादुदात्तैव भवति। [202]प्रथिना—प्रथिम्ना। पृथोर्भाव इत्यर्थे 'पृथ्वादिभ्य इमनिज्वा' (पा० ५-१-१२२) इतीमनिच्। 'र ऋतो हलादेर्लघोः' (पा० ६-४-१६१) इति ऋकारस्य रभावः। 'तुरिष्ठेमेयस्सु' (पा० ६-४-१५४) इत्यनुवृत्तौ 'टेः' (पा० ६-४-१५५) इति टिलोपः। प्रथिमन्शब्दश्चित्त्वादन्तोदात्तः। तृतीयैकवचने भत्वात् अल्लोपोऽनः' (पा० ६-४-१३४) इत्यकारलोपः। छान्दसो मकारलोपः। 'अनुदात्तस्य च यत्रोदात्तलोपः' (पा० ६-१-१६१) इति विभक्तेरुदात्तत्वम्। शवः। 'नब्विषयस्यानिसन्तस्य' (फि० २-१६) इत्याद्युदात्तत्वम् ॥५॥

इति प्रथमस्य प्रथमे पञ्चदशो वर्गः।

एन्द्र सानसिमिति सूक्ते षष्ठीमृचमाह। ये नरः पुरुषाः समोहे संग्रामे तोकस्यापत्यस्य सनितौ वा लाभे वाशत व्याप्तवन्तः। इन्द्रं स्तुत्वेति शेषः। वा अथवा विप्रासो मेधाविनो धियायवः प्रज्ञाकामाः सन्त आशत। ते सर्वे लभन्त इत्यध्याहारः। रण इत्यादिषु षट्चत्वारिंशत्संग्रामनामसु 'समोहे समिथे' (निघ० २-१७) इति पठितम्। पञ्चदशस्वपत्यनामसु 'तुक् तोकम्' इति पठितम्। समोहे—प्रातिपदिकान्तोदात्तत्वम्। वा। 'चादयोऽनुदात्ताः' (फि० ४-१६) इत्यनुदात्तः। आशत—अशू व्याप्तौ। छान्दसश्च्लेर्लोपः। 'आडागम'

---

[202] प्रथिना। प्रथ प्रख्याने धातोरौणादिके कुप्रत्यये संप्रसारणे च पृथुशब्दः। तस्य भाव इत्यर्थे इमनिच्प्रत्ययः—'पृथ्वादिभ्य इमनिज्वा' इति सूत्रेण। चकार इत् इकार उच्चारणार्थः। पृथु इमन् इति स्थितम्। 'र ऋतो हलादेर्लघोः' इति ऋकारस्य रेफे प्रथु इमन् इति जातम्। 'टेः' इति भस्य टेरुकारस्य गुणं बाधित्वा लोपे प्रथिमन्शब्दः। ततस्तृतीयैकवचने टाप्रत्ययः प्रथिमन् आ इति स्थिते 'अल्लोपो नः' इत्यनोऽवयवाकारस्य लोपे प्रथिम्ना इति रूपम्। मकारलोपश्छान्दसः। प्रथिना इति पदं सिध्यति। प्रथिमन्शब्दस्य चित्त्वादन्तोदात्तस्वरः टाप्रत्ययस्य च सुप्त्वादनुदात्तस्वरः शेषनिघातश्च। तेन प्रथिमन् आ इति स्थिते उदात्तयुक्तमकारस्य छान्दसे लोपे 'अनुदात्तस्य च यत्रोदात्तलोपः' इति विभक्तेरुदात्तत्वम् प्रथिना इति स्वरसिद्धिः।

उदात्तः' (पा० ६-४-७२)। सतिशिष्टत्वेन स एव शिष्यते। नरः। प्रातिपदिकस्वरः। सनितौ। 'स्त्रियां क्तिन्' (पा० २-३-९४) 'तितुत्रेष्वग्रहादीनामिति वचनात्' (पा० वा० ७-२-९) निगृहीतिर्निपठितिरितिवदिडागमः। विप्रासः। 'ऋज्रेन्द्र०' (उ० २-३१) इत्यादिना रन्प्रत्ययान्तो निपातितः। धियायवः। धि धारणे। धीयते धार्यतेऽवबुध्यते श्रुतमर्थजातमनयेति धिया प्रज्ञा। तामात्मन इच्छन्तीति क्यच्। 'क्याच्छन्दसि' (पा० ३-२-१७०) इत्युप्रत्ययः। 'अतो लोपः' (पा० ६-४-४८)। प्रत्ययस्वरेणोदात्तः ॥६॥

सप्तमीमृचमाह। यः कुक्षिरिन्द्रस्योदरप्रदेशः सोमपातमोऽतिशयेन सोमस्य पाता, स कुक्षिः समुद्र इव पिन्वते—वर्धते। सेवनार्थो धातुरौचित्येन वृद्धिं लक्षयति। काकुदो मुखसम्बन्धिन्य उर्वीर्बह्व्य आपो न—जलानीव। जिह्वासम्बद्धमास्योदकं यथा कदाचिदपि न शुष्यति तथेन्द्रस्य कुक्षिः सोमपूरितो न शुष्यतीत्यर्थः। यद्यपि 'श्लोक' इत्यादिषु सप्तपञ्चाशत्सङ्ख्याकेषु वाङ्नामसु 'काकुज्जिह्वा' (निघ० १-११) इति पठितं, तथापि उदकसम्बन्धसिद्ध्यर्थमत्र काकुच्छब्देन मुखमुपलक्ष्यते। सम्बन्धिवाचिनस्तद्धितस्यात्र छान्दसो लोपो द्रष्टव्यः। सोमपातमः। सोमं पिबतीति सोमपाः। आकारो धातुस्वरेणोदात्तः। कृदुत्तरपदप्रकृतिस्वरेण स एव शिष्यते। तमपः पित्त्वादनुदात्तत्वम्। समुद्रशब्दः प्रातिपदिकत्वादन्तोदात्तः। इवेन समासो विभक्त्यलोपः 'पूर्वपदप्रकृतिस्वरत्वं च' (पा० वा० २-१-६) इति प्रकृतिस्वरः। पिन्वते—पिवि सेचने। 'इदितो नुम् धातोः' (पा० ७-१-५८) इति नुमागमः। शपः पित्त्वेनानुदात्तत्वम्। तिङश्च लसार्वधातुकस्वरेण धातुस्वर एव शिष्यते। उर्वीः—उरुशब्दोऽन्तोदात्तः। 'वोतो गुणवचनात्' (पा० ४-१-४४) इति ङीष्। यणादेशः। 'उदात्तयणो हल्पूर्वात्' (पा० ६-१-१७४) इतीकार उदात्तः। जसा सह 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इत्येकादेश उदात्तः। आपः। प्रातिपदिकस्वरः। काकुदः। प्रातिपदिकस्वरेणान्तोदात्तः ॥७॥

[203]अभिप्लवषडहगतेषूक्थ्येषु तृतीयसवने ब्राह्मणाच्छंसिन 'एवा ह्यस्य सूनृते'त्यनुरूपस्तृचः।

---

[203] अभिप्लव०। गवामयनान्तर्गतस्याभिप्लवषडहस्य 'तस्याग्निष्टोमावभित उक्थ्या मध्ये' (आश्व.श्रौ. ७.१०.७.) इति सूत्रेण संस्था विधीयन्ते। षडहस्यास्य प्रथमेऽन्तिमे च दिनेऽग्निष्टोमसंस्था, मध्ये चतुर्षु दिनेषूक्थ्यसंस्था इति। उक्थस्तोत्रैस्समाप्यमाना इमे क्रतव इत्यर्थः। अभिप्लवषडहस्य स्वरूपं पूर्वं सुविशदं निरूपितम्। उक्थ्यादिशब्दानां ग्रह-स्तोत्र-शस्त्र-तद्युक्तक्रतवश्च यथासन्दर्भमर्थं इति च पूर्वं निरूपितम्। अत्रोक्थ्यशब्दस्य तन्नामकशस्त्रमर्थः। अभिप्लवषडहगतानि यान्युक्थ्यशस्त्राणि तेषु तृतीयसवने ब्राह्मणाच्छंसिनः शस्त्रे 'एवा ह्यस्य सूनृता' इति तृचोऽनुरूपः स्तोत्रियानन्तरं पठनीयस्तृच इति विनियोगवाक्यस्यार्थः।

अत्राश्वलायनेन ब्राह्मणाच्छंसिनश्शस्त्रे दशस्तोत्रियानुरूपयुगलानि कीर्तितानि—(१) 'अभ्रातृव्यो अना त्वम्, मा ते अमाजुरो यथा; (२) एवा ह्यसि वीरयुः, एवा ह्यस्य सूनृता; (३) तं ते मदं गृणीमसि, तम्वभि प्रगायत; (४) वयमु त्वामपूर्व्य, यो न इदमिदं पुरा; (५) इन्द्राय साम गायत, सखाय आशिषामहि; (६) य एक इद्वि दयते, य इन्द्र सोमपातम; (७) ऐन्द्र नो गधि, एदु मध्वो मदिन्तरम्, (८) एतो

'एह्यू षु ब्रवाणि ते' इति खण्डे, 'अथ ब्राह्मणाच्छंसिन' इत्युपक्रम्य 'एवा ह्यसि वीरयुः, एवा ह्यस्य सूनृता' (आ० श्रौ० ७-८) इति सूत्रितम्।

तस्मिंस्तृचे प्रथमां सूक्तेऽष्टमीमृचमाह। अस्येन्द्रस्य सूनृता प्रियसत्यरूपा वाग्दाशुषे हविर्दत्तवते यजमानाय तदर्थमेवा हि—एवं खलु। अनन्तरपदवक्ष्यमाणगुणोपेता भवतीत्यर्थः। कीदृशी? विरप्शी—विविधरपणोपेतवाक्ययुक्ता। बहुविधोपचारवादिनीत्यर्थः। गोमती—बह्वीभिर्गोभिरुपेता, गोप्रदेत्यर्थः। अत एव मही महती पूज्या। यथोक्तवाचो दृष्टान्तः—पक्वा शाखा न। यथा बहुभिः पक्वैः फलैरुपेता पनसवृक्षादिशाखा प्रीतिहेतुस्तद्वत्। यद्यपि महन्नामसु शावन्विरप्शी (निघ० ३-३) इति पठितम्, तथाप्यत्र महीत्यनेन पुनरुक्तिप्रसङ्गाद-वयवार्थो गृहीतः। एव—एवमादीनामन्तः (फि० ४-१४) इत्यन्तोदात्तः। संहितायां 'निपातस्य च' (पा० ६-३-१३६) इति दीर्घः। हि—निपात आद्युदात्तः। अस्य प्रकृतस्येन्द्रस्य परामर्शात् 'इदमोऽन्वादेशे०' (पा० २-४-३२) इत्यादिनाशादेशोऽनुदात्त इति सर्वानुदात्तः। सूनृता। ऊन परिहाणे। सुतरामूनयत्यप्रियमिति सून्। सा चासावृता च सत्या चेति सूनृता प्रियसत्या वाक्। 'परादिश्छन्दसि बहुलम्' (पा० ६-२-१९९) इत्यृकार उदात्तः। विरप्शी—विविधं विचित्रं रपणं विरप्। रप लप व्यक्तायां वाचि। सम्पदादित्वाद्भावे क्विप्। तदेतदेषामस्तीति विरप्शानि वाक्यानि। तानि यस्यां वाचि सन्ति सा वाग् विरप्शिनी। 'अत इनिठनौ' (पा० ५-२-११५) इतीनिः। 'यस्येति च' (पा० ६-४-१४८) इत्यकारलोपः। 'ऋन्नेभ्यो ङीप्' (पा० ४-१-५) इति ङीप्। इकारः प्रत्ययस्वरेणोदात्तः। नकारलोपश्छान्दसः। सवर्णदीर्घः 'एकादेश उदात्तेनोदात्तः (पा० ८-२-५) इत्युदात्तः। गावोऽस्यां सन्तीति गोमती। मतुब्ङीपौ पित्त्वादनुदात्तौ। प्रातिपदिकस्वर एव शिष्यते। मही महती। 'उगितश्च' (पा० ४-१-६) इति ङीप्। तस्य पित्त्वादनुदात्तत्वे प्राप्ते 'शतुरनुमो नद्यजादी' (पा० ६-१-१७३) इत्यत्र 'बृहन्महतोरुपसङ्ख्यानम्' (पा० ६-१-१७३) इत्युदात्तत्वम्। अच्छब्दलोपश्छान्दसः। पक्वा। डु पचष् पाके। 'निष्ठा' (पा० ३-२-१०२) इति क्तप्रत्ययः। 'पचो वः' (पा० ८-२-५२) इति वत्वम्। 'चोः कुः' (पा० ८-२-३०) इति कुत्वम्। प्रत्ययस्वरेणान्तोदात्तः। टापा सह सवर्णदीर्घ 'एकादेश उदात्तेनोदात्तः' (पा० ८-२-५) इत्युदात्तः। शाखा। शाखृ श्लाखृ व्याप्तौ। पचाद्यच्। चित्स्वरादन्तोदात्ते प्राप्ते वृषादेराकृतिगणत्वाद् वृषादि-त्वादाद्युदात्तत्वम्। दाशुषे। दाशृ दाने। 'दाश्वान्साह्वान्मीढ्वांश्च' (पा० ६-१-१२) इति निपात-नात्क्वसाविड्भावो द्विर्वचनाभावश्च। चतुर्थ्येकवचने 'यचि भम्' (पा० १-४-१८) इति भसञ्ज्ञायां 'वसोः सम्प्रसारणम्' (पा० ६-४-१३१) इति संप्रसारणं वकारस्योकारः।

---

न्विन्द्रं स्तवाम सखायः, स्तुहीन्द्रं व्यश्ववत्, (९) त्वं न इन्द्रा भरँ ओजः, वयमु त्वामपूर्व्यं (१०) यो न इदमिदं पुरा, आयाहीम इन्दवः' इति। तत्र द्वितीययुगले 'एवाह्यस्य सूनृता' इति प्रतीकेन गृहीतस्तृचोऽनुरूप इत्यर्थः। अत्र सर्वत्र प्रथमं प्रतीकं स्तोत्रियस्य द्वितीयं त्वानुरूपस्य ग्राह्यमित्यवगन्तव्यम्।

परपूर्वत्वम्। 'शासिवसिघसीनां च' (पा० ८-३-६०) इति षत्वम्। प्रत्ययस्वरेणोकार उदात्तः ॥८॥

नवमीमृचमाह। हे इन्द्र ते तव विभूतयः। ऐश्वर्यविशेषाः। एवा हि—एवंविधाः खलु। किंविधा इति तदुच्यते—मावते मत्सदृशाय दाशुषे हविर्दत्तवते यजमानायोतयस्त्व-दीयरक्षारूपाः सद्यश्चित्सन्ति। यदा कर्मानुष्ठितं तदैव भवन्ति। [204]मावते मत्सदृशाय। वतुप्प्रकरणे 'युष्मदस्मद्भ्यां छन्दसि उपसङ्ख्यानम्' (पा० वा० ५-२-३९) इत्यस्मच्छब्दा-द्वतुप्। 'मपर्यन्तस्य' (पा० ७-२-९१) 'प्रत्ययोत्तरपदयोश्च' (पा० ७-२-९८) इति मादेशः। अच्छब्देन सह अतो गुणे' (पा० ६-१-९७) इति पररूपत्वम्। 'दृग्दृशवतुषु' (पा० ६-३-९०) इत्यनुवृत्तौ 'आ सर्वनाम्नः' (पा० ६-३-९१) इति दकारस्याकारः। सवर्णदीर्घत्वम्। वतुपः पित्त्वात्प्रातिपदिकस्वर एव शिष्यते। सद्यः। समाने द्यवीत्यर्थे 'सद्यःपरुत्परार्यैषमः'० (पा० ५-३-२२) इत्यादिना निपातितम्। प्रत्ययस्वरेणान्तोदात्तत्वम्। चित्। 'चादयोऽनु-दात्ताः' (फि० ४-१९) इत्यनुदात्तः। सन्ति। अस भुवि। लटः स्थाने झिः। 'झोऽन्तः'। (पा० ७-१-३) 'अदिप्रभृतिभ्यः शपः' (पा० २-४-७२) इति शपो लुक्। तिङः प्रत्ययाद्यु-दात्तत्वम्। 'प्रत्ययलोपे प्रत्ययलक्षणम्' (पा० १-१-६२) इति शबकारमाश्रित्य लसार्वधातु-कानुदात्तत्वं न भवति [205]'वर्णाश्रयविधौ प्रत्ययलक्षणं नास्ति' (पा० प० २१) इति निषेधात्। दाशुषे। गतमन्त्रे गतम् ॥९॥

---

[204] मावते। अस्मच्छब्दः। तस्य छन्दसि सादृश्यार्थे वतुप्। अस्मद् वत् इति स्थितम्। मपर्यन्तस्य 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण मादेशे म अवत् इति जातम्। आदेशस्य अदा सह 'अतो गुणे' इति पररूपैकादेशे माद्वत् इति स्थिते 'आ सर्वनाम्नः' इति सूत्रेण दकारस्याकारः मा आ वत् इत्यत्र सवर्णदीर्घे मावत् इति शब्दः। तस्य चतुर्थ्येकवचने मावते इति रूपम्। अत्र वतुपः पित्त्वादनुदात्तत्वे प्रातिपदिकस्वर उदात्तः, उदात्तादनुदात्तस्य स्वरितः, तस्मादनुदात्तस्य प्रचयः मावते इति।

[205] वर्णाश्रयविधौ। अस्धातोः लटि शपि प्रथमपुरुषबहुवचने झेरन्तादेशे अस् अ अन्त् इ इति स्थिते शपो लोपः 'अदिप्रभृतिभ्यः शपः' इति सूत्रेण। अस् अन्ति इति जातम्। 'श्नसोरल्लोपः' इति सूत्रेण धात्वकारलोपे सन्ति इति रूपम्। अत्र सकारोत्तराकारः तिङ्प्रत्ययैकदेशः। अतस्तस्य प्रत्ययाद्युदात्तस्वरः। तस्मिन् सति तदुत्तरं स्वरितः सन्ति इति। अत्र सकारोत्तराकारस्य लुप्तशप्प्रत्ययसंबन्धमाश्रित्य पित्प्रयुक्तानु-दात्तत्वशङ्कायां तदुत्तरत्वेन परिभाषेयम्—'वर्णाश्रयविधौ' इति। वर्णान् प्राधान्येनाश्रित्य प्रवृत्तो विधिः वर्णाश्रयविधिः। प्रत्ययं प्राधान्येन निमित्तीकृत्य प्रवृत्तं कार्यं प्रत्ययलक्षणम्। नानयोस्सांकर्यमिष्टम्। यथा—कति इति शब्दात्परं प्राप्तयोः जश्शसोः प्रत्यययोः 'षड्भ्यो लुक्' इति लुकि प्राप्ते 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रेण, लुप्तेऽपि जस्प्रत्यये शस्-प्रत्यये वा तदाश्रितम् 'जसि च' इति सूत्रद्वारा विधीयमानं गुणरूपं कार्यं भवतीत्यापादितम्।

दशमीमृचमाह। अस्येन्द्रस्य स्तोमः सामसाध्यं स्तोत्रमुक्थं चर्कसाध्यं शस्त्रमप्येवा हि—एते उभे एवंविधे खलु। किंविधे तदुच्यते। काम्या—कामयितव्ये। शंस्या—ऋत्विग्भिः शंसनीये। किमर्थं शंसनमिति तदुच्यते—इन्द्राय सोमपीतये। इन्द्रस्य सोमपानार्थम्। एवा ह्यस्य। व्यवहितमन्त्रे गतम्। काम्या। कर्मणिङन्तादचो यत् (पा० ३-१-९७)। 'णेरनिटि' (पा० ६-४-५१) इति णिलोपः। 'तित्स्वरितम्' (पा० ६-१-१८५) इति स्वरिते प्राप्ते 'यतोऽनावः' (पा० ६-१-२१३) इत्याद्युदात्तत्वम्। सुपो डादेशः। स्तोमः। 'अर्तिस्तुसु'० (उ० १-१३८) इत्यादिना मन्प्रत्ययः। उक्थम्। वच परिभाषणे। 'पातृतुदिवचिरिचिसिचिभ्यस्थक्' (उ० २-७) इति थक्। किस्वात्संप्रसारणम्। परपूर्वत्वगुणाभावौ। शंस्या। शंसु स्तुतौ। 'ण्यन्तादचो यत्' (पा० ३-१-९७)। 'यतोऽनावः' (पा० ६-१-२१३) इत्याद्युदात्तत्वम्। सुपो डादेशः। सोमपीतये। सोमस्य पीतिः। कृदुत्तरपदप्रकृतिस्वरे प्राप्ते व्यत्ययेनाद्युदात्तत्वम्। अथवा सोमस्य पीतिर्यस्येन्द्रस्येति सोमपीतिरिन्द्रः। 'बहुव्रीहौ प्रकृत्या पूर्वपदम्' (पा० ६-२-१) इति पूर्वपदप्रकृतिस्वरत्वम् ॥१०॥

इति प्रथमस्य प्रथमे षोडशो वर्गः।

॥९॥

२.९

इन्द्रेहीत्यादिकं दशमं सूक्तं सुरूपकृत्नुमित्यादिषु षष्ठम्। ऋष्यादयस्तु पूर्ववत्। विशेषस्त्वति[206]रात्रे द्वितीयपर्यायेऽच्छावाकशस्त्रे इन्द्रेहीत्यनुरूपस्तृचः। 'अतिरात्रे पर्यायाणामि'ति खण्डे 'इदं वसो सुतमन्ध इन्द्रेहि मत्स्यन्धसः' (आ० श्रौ० ६-४) इति सूत्रितम्।

तस्मिन्सूक्ते प्रथमामृचमाह। हे इन्द्र एहि। अस्मिन्कर्मणि आगच्छ। आगत्य च विश्वेभिः सर्वैः सोमपर्वभिः सोमरसरूपैरन्धसोऽन्नैर्योभिरत्रैर्मत्सि—माद्य, हृष्टो भव। तत ऊर्ध्वमोजसा बलेन महान्भूत्वाऽभिष्टिः शत्रूणामभिभविता भवेति शेषः। अष्टाविंशतिसङ्ख्याकेषु बलनामसु 'ओजः पाजः' (निघ० २-९) इति पठितम्। आ इहि। 'आद्गुणः' (पा० ६-१-८७)। इन्द्र एहि इन्द्रेहि। यो ह्युभयोः स्थाने जायते लभतेऽसावन्यतरव्यपदेशमित्याङमाङोरेकादेशस्याङ्व्यपदेशात् 'ओमाङोश्च' (पा० ६-१-९५) इति पररूपम्। मत्सि—

तस्य 'न लुमताङ्गस्य' इति सूत्रेण निषेधः कृतः। तथाऽत्र 'प्रत्ययलोपे प्रत्ययलक्षणम्' इति सूत्रेण लुप्तेऽपि शपि तदाश्रितं कार्यं भवत्विति शंकायां 'वर्णाश्रयविधौ प्रत्ययलक्षणं नास्ति' इति निषेधः क्रियते। एवञ्च यत्र कार्यं प्रति प्रत्ययगतासाधारणं रूपं प्रयोजकं तत्रैव प्रत्ययलक्षणस्य प्रवृत्तिः, यत्र च स्वरविधिशास्त्रेषु वर्णानेवाश्रित्य कार्यं भवति तत्र प्रत्ययलक्षणस्य न प्रवृत्तिरिति सिद्धम्।

[206] अतिरात्रस्य तद्गतस्तोत्रशस्त्रपर्यायाणाञ्च स्वरूपं पूर्वमेव टिप्पण्यां निरूपितम्।

माद्य । मदी हर्षग्लेपनयोः । लोटः सिप् । 'सर्वे विधयश्छन्दसि विकल्प्यन्ते' (पा० प० ३५) इति सेर्हिरादेशो न भवति । 'दिवादिभ्यः श्यन्' (पा० ३-१-६९) इति श्यन् । 'बहुलं छन्दसि' (पा० २-४-७३) इति श्यनो लुक् । 'न लुमताङ्गस्य' (पा० १-१-६३) इति प्रत्ययलक्षण-प्रतिषेधात् 'शमामष्टानां दीर्घः श्यनि' (पा० ७-३-७४) इत्युपधादीर्घो न भवति । सिपः पित्त्वाद्धातुस्वर एव । अन्धसः । 'अदेर्नुम् धश्च' (उ० ४-२०७) इत्यसुन् । व्यत्ययेन तृतीया-बहुवचनं कर्तव्यम् । नित्त्वादाद्युदात्तः । विश्वेभिः । 'अशिप्रुषि०' (उ १-१५०) इत्यादिना क्वन् । नित्त्वादाद्युदात्तत्वम् । ऐसादेशो 'बहुलं छन्दसि' (पा० ७-१-१०) इति न भवति । सोमपर्वभिः । लतारूपं सोमं पृणन्ति पूरयन्ति इति सोमपर्वाणः सोमरसाः । पॄ पालनपूरणयोः । 'अन्येभ्योऽपि दृश्यन्ते' (पा० ३-२-७५) इति वनिप् । गुणो रपरत्वम् । वनिपः पित्त्वाद्धातुस्वर एव । उपपदसमासे कृदुत्तरपदप्रकृतिस्वरेण पुनः स एव भवति । अभिष्टिरभिगन्ता । इष गतौ । 'मन्त्रे वृष०' (पा० ३-३-९६) इत्यादिना क्तिन्नुदात्तः । स हि भावपरोऽपि भवितारं लक्षयति । कित्त्वाल्लघूपधगुणाभावः । 'तितुत्रतथसिसुसरकसेषु च' (पा० ७-२-९) इतीडागमो न भवति । अभिशब्दस्येकारस्य 'एमन्नादिषु पररूपं वक्तव्यम्' (पा० वा० ६-१-९४) इति पररूपत्वम् । प्रादिसमासे कृदुत्तरपदप्रकृतिस्वरत्वम् । ओजसा । 'उब्जेर्बलोपश्च' (उ० ४-८६) इत्यसुन् । नित्त्वादाद्युदात्तः ॥१॥

द्वितीयामृचमाह । ईमित्यनर्थकः पादपूरणाय प्रयुक्तः । हे अध्वर्यवः सुतेऽभिषुते चमसस्थे सोमे एनं सोममिन्द्रायेन्द्रार्थमासृजत—पुनरभ्युन्नयत । [207]शुक्रामन्थिचमसगणे पुन-

---

[207] शुक्रामन्थिचमसगणे । ज्योतिष्टोमे ग्रहैश्चमसैश्च सोमरसो हूयते । ग्रहो नाम दारव उलूखलाकारः प्रादेशपरिमाणः पात्रविशेषः । चमसश्च चतुष्कोणाकारो दारवः पात्रविशेषः । ग्रहेषु धाराग्रहा अधाराग्रहाश्चेति द्विविधाः । द्रोणकलशाख्यस्य महतः काष्ठमयस्य पात्रस्योपरि पवित्राख्यं वासःखण्डं वितत्योद्गातारो धारयन्ति । तत्रोन्नेता ऋत्विक् पूर्वमेवाभिषवादिसंस्कारपूर्वकामाधवनीयाख्यपात्रे संरक्षितं सोमरसं गृहीत्वा होतृचमसे तथा निनयेत् यथा च रसो वासःखण्डे निपत्य द्रोणकलशे स्रवेत् । स्रवन्त्या धारया अध्वर्युर्यैर्ग्रहैस्सोमरसं गृह्णीयात्ते धाराग्रहा भवन्ति । धारां विना द्रोणकलशाद्ये गृह्यन्ते तेऽधाराग्रहाः । तत्र धाराग्रहाः—अन्तर्यामः, ऐन्द्रवायवः, मैत्रावरुणः, शुक्रः, मन्थी, आग्रयणः, त्रयोऽतिग्राह्याः, उक्थ्यः, आश्विनः, ध्रुवश्चेति । अदाभ्यांशुप्रभृतयोऽधाराग्रहाः । धाराग्रहेषु ग्रहणानन्तरमेवान्तर्यामस्य होमो भवति । ऐन्द्रवायवादीनां ग्रहणानन्तरं खरे सादनं ततः क्रमेणैकैकस्य होमः । तत्राध्वर्युः—ऐन्द्रवायवमैत्रावरुणाश्विनान् ग्रहान् यथायथं हुत्वा, उन्नतारं चमसोन्नयनाय प्रेषयेत् । चमसोन्नयनं नाम चमसेषु द्रोणकलशे पूतभृत्कलशे च विद्यमानस्य सोमरसस्य पूरणम् । ते च चमसाः होतृ-ब्रह्मोद्गातृ-यजमान-मैत्रावरुण-ब्राह्मणाच्छंस्यच्छावाक-पोतृ-नेष्ट्राग्नीध्र-सदस्यानां नाम्ना व्यवह्रियन्ते । तेष्व-च्छावाकचमसं विहायान्येषु चमसेषु सोमरसोन्नयनं कुर्यादुन्नेता । इदमेवोन्नयनम् । अन-न्तरमध्वर्युः प्रतिप्रस्थाता च शुक्रामन्थिप्रचाराय सन्नद्धौ भवतः । प्र०पा० ९.२.म साक्षानु-

रभ्युन्नयनमापस्तम्बेनोक्तम् । 'होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वम्' (आप० श्रौ० १२-२३-४) इति । कीदृशमेनम् । मन्दिम्—हर्षहेतुम् । चक्रिम्—साधुकरणशीलम् । कीदृशायेन्द्राय ? मन्दिने—हर्षयुक्ताय । विश्वानि सर्वाणि कर्माणि चक्रये कृतवते । सर्वकर्मनिष्पादनशीलायेत्यर्थः । ईमित्यस्य पादपूरणार्थत्वं यास्क आह—'अथ ये प्रवृत्तेऽर्थेऽमिताक्षरेषु ग्रन्थेषु वाक्यपूरणा आगच्छन्ति पदपूरणास्ते मिताक्षरेष्वनर्थकाः कमीमिद्विति' (नि० १-९) इति । अस्यायमर्थः—अन्यैरेव पदैर्विवक्षितार्थे समाप्ते सति ये शब्दा ईमित्यादयः प्रयुक्तास्ते शब्दा अमिताक्षरेषु छन्दोराहित्येन परिमिताक्षररहितेषु ब्राह्मणादिवाक्येषु वाक्यपूरणार्था द्रष्टव्याः । मिताक्षरेषु छन्दोयुक्तेषु ग्रन्थेषु पादपूरणार्थाः । ते च कमीमित्यादय इति । ईमित्यस्य शब्दस्यानर्थक्यायैतामृचमुदाजहार । 'एमेनं सृजता सुते', 'आवृत्रेनं सुते' (नि० १-९) इति । एनम् । इदमो द्वितीयायां 'द्वितीयाटौस्स्वेनः' (पा० २-४-३४) इत्यनेनैनादेशः । '०अनुदात्तः' (पा० २-४-३२) इत्यनुवृत्तेः सर्वानुदात्तः । सृजत । संहितायाम् 'अन्येषामपि दृश्यते' (पा० ६-३-१३७) इति दीर्घः । मन्दिम्

---

ष्ठानम् । अस्मिन्नेव काले चमसाध्वर्यवः तं तं चमसमादायाहवनीयदेशमागच्छेयुः । चमसहोमार्थं स्वीकृता ये ब्राह्मणास्ते चमसाध्वर्यवः । इमे षोडशर्त्विग्भ्योऽन्ये भवन्ति । ऋत्विग्भ्य एवेभ्यो दक्षिणादिकं न प्रदीयते । एते द्विविधाः—मध्यतः कारिणां चमसाध्वर्यवाः, होत्रकाणां चमसाध्वर्यवश्चेति । होतृब्रह्मोद्गातृयजमानसदस्यचमसानामध्वर्यवो मध्यतःकारिणः, मैत्रावरुणब्राह्मणाच्छंसिपोतृनेष्ट्राग्नीध्रचमसानामध्वर्यवो होत्रकचमसाध्वर्यव इति । आश्रावणप्रत्याश्रावणानन्तरमध्वर्युणा प्रेषिता मध्यतः कारिणश्चमसाध्वर्यवः होत्रा वषट्कारेऽनुवषट्कारे च कृते तं तं चमसं द्विर्हुत्वा चमसान् सदः प्रति भक्षणार्थं नयेयुः । अनन्तरं होत्रकचमसाध्वर्यवो होतुर्वषट्कारे सकृद्धुत्वा हविर्धानमण्डपमागत्य पुनर्द्रोणकलशात्स्वं स्वं चमसमुन्नीय (इदं द्वितीयमुन्नयनम्) आहवनीयदेशमागत्य तिष्ठेयुः । अध्वर्युप्रतिप्रस्थातृभ्यां शुक्रामन्थिग्रहयोर्होमे कृते होत्रकचमसाध्वर्यवः क्रमेण स्वं स्वं चमसमध्वर्यवे दद्युः । सोऽपि मैत्रावरुणं संप्रेष्याश्रावणप्रत्याश्रावणानन्तरं होत्रा याज्यायां पठितायां तं तं चमसं जुहुयात् । अयमेव शुक्रामन्थिचमसगणः । अत्रैव पुनरभ्युन्नयनं द्वितीयमुन्नयनमापस्तंबेनोक्तम् । तदत्र समग्रमापस्तम्बसूत्रम्—'आश्राव्य प्रत्याश्राविते सम्प्रेष्यति—प्रशास्तः प्रातस्सवनस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान् प्रस्थितान् प्रेष्य, मध्यतः कारिणां चमसाध्वर्यवो वषट्कृतानुवषट्कृतान् जुहुत, होत्रकाणां चमसाध्वर्यवः सकृत्सकृद्धुत्वा शुक्रस्याभ्युन्नीयोपावर्तध्वम्' इति । अस्मिन् सूत्रे त्रयः प्रैषास्सन्ति—प्रथमः प्रशास्त्रे मैत्रावरुणाय । हे प्रशास्तः, प्रातस्सवनस्यैवंभूतान् सोमान् इन्द्राय प्रस्थितान् होतारं प्रेष्य इति । सोमयागेऽध्वर्युः प्रथमं प्रशास्तारं मैत्रावरुणं प्रेष्यति, सोऽपि होतारं याज्यायामिति क्रमः । द्वितीयश्च प्रैषः—मध्यतः कारिभ्यश्चमसाध्वर्युभ्यः, तृतीयश्च—होत्रकचमसाध्वर्युभ्यः । तृतीयप्रैषवाक्ये 'शुक्रस्य' इति पदं द्रोणकलशस्थसोमरसवाचकम् द्रोणकलशस्य सोमरसमापूर्य निवर्तध्वमिति तस्यार्थः ।

